२५/

श्रीः

# श्रीविद्या-रत्नाकरः

महागणपति-ललिता-श्यामला-वाराही-सपर्यासमन्वितः

पूर्णाभिषेकादिपरिशिष्टसहितश्च



श्रीकरपात्रस्वामिसङ्कलितः

## श्रीस्वामीकरपात्रीजी महाराज

श्रीस्वामीजी महाराज ने वेदान्त, भक्ति एवं अष्टाङ्गयोग आदि साधन पद्धतियों द्वारा परमतत्त्व का साक्षात्कार कर लेने पर भी केवल लोककल्याण की भावना से श्रीविद्यासाधना पद्धति का अवलम्बन किया एवं पूर्णविधि विधान से श्रीयन्त्राधिष्ठात्री भगवती राजराजेश्वरी ललितामहात्रिपुरसुन्दरी का उच्चतम उपासना-क्रम अनुष्ठित किया, तथा उत्तर भारत में विलुप्तप्राय श्रीविद्यासम्प्रदाय को अपने तपोबल से पुनः प्रतिष्ठापित किया। और श्रीविद्यारत्नाकर जैसे ग्रन्थरत्न द्वारा श्रीविद्यासाहित्यनिधि को अभिवृद्ध एवं सुशोभित किया। श्रीस्वामीजी द्वारा रचित श्रीविद्यामन्त्रभाष्य का अवलोकन करने पर उनका तन्त्र-शास्त्र का गहन अध्ययन, प्रौढ़पाण्डित्य, तत्त्वज्ञता तथा रहस्यज्ञता सुस्पष्ट परिलक्षित होती है।

## श्रीविद्यारत्नाकर का वैशिष्ट्य

श्रीविद्या साधना का पूर्णक्रम प्रवर्तित करने के लिए विभिन्न पुस्तकों की अपेक्षा रहती है, परन्तु यह एक ही पुस्तक दीक्षाकाल से पूर्णाभिषेक पर्यन्त और प्रारम्भिक साधन काल से सिद्धिपर्यन्त समस्त विधि विधानों का साङ्गोपाङ्ग सम्पादन करने के लिए समपेक्षित पद्धति की जिज्ञासा को परिपूर्ण करने में अपनी विशिष्टता से समवेत है।

---

पुस्तक प्राप्ति स्थान
जनता टी कम्पनी
७२ बड़तल्ला स्ट्रीट, कलकत्ता ७

॥ श्रीः ॥

# श्रीविद्या-रत्नाकरः

श्रीमहागणपति-श्रीसुन्दरी-श्यामा-वार्ताली-परा-सपर्या-मन्त्रभाष्य-वाञ्छाकल्पलता-लक्षार्चन-पूर्णाभिषेक-महायागक्रमादि-विविधविधिविलसितः


निगमागमादिसमस्तशास्त्रपारावारपारीणैः
श्रीपरमहंसपरिव्राजकाचार्यैः
अनन्तश्रीविभूषितैः

**स्वामिश्रीहरिहरानन्दसरस्वती (श्रीकरपात्रस्वामि) महाराजैः विरचितः ।**

सम्पादकः
श्रीसीताराम कविराजः, "श्रीविद्याभास्करः"
दीक्षानाम—दत्तात्रेयानन्दनाथः



प्रकाशकम् :

**श्रीविद्या-साधनापीठम्**

वाराणसी

प्रकाशक :

श्रीविद्या साधना पीठम्

वाराणसी



•

पुस्तकप्राप्तिस्थानम्

(१) डा० सत्यव्रत शर्मा

पो १/२ रवीन्द्रपुरी, वाराणसी–५

फो० नं० ५२३६९

(२) बाबूलाल गनेड़ीवाल,

१४५ काटन स्ट्रीट,

कलकत्ता–७

(३) स्वामी श्रीसदानन्द सरस्वती, (वेदान्ती स्वामी)

करपात्री धाम केदारघाट, वाराणसी

(४) राधेश्याम पेपर स्टोर

कर्णघण्टा गली (वाराणसी)

•

द्वितीय संस्करणम् २२००

श्रीपञ्चमी, वि० सं० २०४३

मूल्यं ६० रूप्यकाणि

•

मुद्रक :

तारा प्रिंटिंग वर्क्स,

वाराणसी

श्रीललितामहात्रिपुरसुन्दरी



अरुणां करुणातरङ्गिताक्षीं धृतपाशाङ्कुशपुष्पबाणचापां ।
अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम् ॥

# SHREEVIDYA-RATNAKARAH

*WITH*

SHRI MAHAGANAPATI SHRI SUNDARI-SYAMA-
VARTALIPARA SAPARYA-MANTRABHASHYA-
WANCHHAKALPALATA LAKSHARCHANA
AND ALLIED SUBJECTS

*BY*

**SWAMI SHRIHARIHARANAND SARASWATI
( SHRIKARAPATRASWAMI ) MAHARAJ**

*EDITOR*

SHRISITARAM KAVIRAJ "SHRIVIDYABHASKAR"
( DATTATREYANANDNATH )

**SHRI VIDYA SADHANA PITHAM**

**VARANASI**

॥ श्रीः ॥

# नम्र निवेदन

इस संसार में समस्त जनमानस में सुख प्राप्त करने की एकमात्र इच्छा रहती है। वह सुख दो प्रकार है, एक कृत्रिम और दूसरा अकृत्रिम, कृत्रिम-सुख कामभोग के द्वारा प्राप्त होता है। अकृत्रिम सुख मोक्ष प्राप्ति है। इन दोनों के साधन के लिये धर्म आवश्यक है, और धर्म साधन के लिये अर्थ की अपेक्षा होती है, अतः धर्म, अर्थ, काम, मोक्ष यह चतुर्विध पुरुषार्थ कहे जाते हैं। परशुराम कल्पसूत्र में कहा है कि—

"स्वविमर्शः पुरुषार्थः" अपने स्वरूप का ज्ञान ही परम पुरुषार्थ है वही परमपुरुषार्थ मोक्ष पदवाच्य अकृत्रिम सुख है।"

इस सुख को प्राप्त करने के लिये हमारे पूर्वज ऋषि, महर्षि, महा-मनीषीयों ने अपने तपःपूत अन्तःकरण से समाधिजन्य अतीन्द्रिय ज्ञान द्वारा साधना सम्बन्धी वाङ्मय कोष को परिपूर्ण एवं सुसमृद्ध किया। उन विभिन्न साधन पद्धतियों में चित्तशुद्धि के तारतम्य से ( अधिकारी भेद से ) तत्तत् साधन पद्धतियों का विनियोग परिलक्षित होता है। परम कारुणिक भूत-भावन भगवान् विश्वनाथ ने साधारण जन के उद्धार के लिये परम पुरुषार्थ रूप अकृत्रिम सुख की प्राप्ति के लिये श्रीविद्या साधना पद्धति का प्राकट्य किया। स्वर्लोक निवासी देवता एवं ब्रह्मर्षि, राजर्षि, महर्षियों ने उस पद्धति का समाश्रयण कर अनुमोदन किया।

यही नहीं अपितु दत्तात्रेय, परशुराम, हयग्रीव-शङ्कराचार्य आदि भगवान् के अनेक अवतारों ने उसे सर्वजन सुलभ बनाने के लिये उत्त-रोत्तर सरलतम विधान किया। तदनन्तर यहामनीषी साधकों ने अधीति, बोध, आचरण एव प्रचार के द्वारा इस श्रीविद्या पद्धति की गरिमा और महिमा का संस्तुत्य प्रख्यापन किया।

भगवान् आद्यशङ्कराचार्य ने तो कालक्रम से विलुप्त इस साधना पद्धति का पुनरुद्धार करके जनकल्याण का परम महत्वपूर्ण कार्य किया। और इस साधना को सम्पूर्ण भारत वर्ष में प्रचारित और प्रसारित कर सम्प्र-दाय ( गुरु परम्परा ) के आचार्य रूप में सम्मानित हुए। इसलिये कहा जाता है कि "सम्प्रदायो हि नान्योऽस्ति लोके श्रीशङ्कराद्बहिः" भगवान्

शङ्कराचार्य के द्वारा प्रवर्तित सम्प्रदाय के अतिरिक्त इस लोक में आज श्रीविद्या का दूसरा कोई सम्प्रदाय ही नहीं है।

इसी प्रकार अनेक साहित्य स्रष्टा, लोकद्रष्टा साधक शिरोमणि महात्माओं ने इस श्रीविद्या साधना का समाश्रयण करके सर्वजनहिताय, सर्वजनसुखाय इसके साहित्य निधि को सुसमृद्ध किया। इन्हीं में लोक कल्याणकारी भावनाओं से ओत-प्रोत अन्तःकरण से अपने जीवन के प्रति क्षण को लोक-कल्याण के लिये समर्पित करने वाले प्रातः स्मरणीय श्री गुरुचरण स्वामी करपात्रीजी महाराज ने भी इस दिशा को अपनी लोकोत्तर प्रतिमा के दिव्य आलोक से आलोकित करके श्रीविद्या साधना सम्प्रदाय को दिव्यज्योत्स्ना मण्डित किया।

श्रीस्वामीजी महाराज ने वेदान्त, भक्ति, योग आदि साधन पद्धतियों से उस परमतत्व का साक्षात्कार प्राप्त कर लेने पर भी केवल लोक-कल्याण की भावना से श्रीविद्या साधना पद्धति का अवलम्बन किया, एवं पूर्णविधि विधान से श्रीयन्त्राधिष्ठात्री भगवती राजराजेश्वरी श्रीललिता महात्रिपुरसुन्दरी का उच्चतम उपासना क्रम अनुष्ठित करके उत्तर भारत में विलुप्तप्राय श्रीविद्या सम्प्रदाय को प्रचार के द्वारा प्रतिष्ठापित्त किया, एवं श्रीविद्या साहित्य भण्डार को भी "श्रीविद्या रत्नाकर" "श्रीविद्या वरिवस्या" जैसे दिव्य रत्न प्रदान कर अभिवृद्ध एवं विभूषित किया। उनके द्वारा लिखित श्रीविद्यामन्त्रभाष्य पर दृष्टिपात करने पर तो उनका तन्त्र शास्त्र का गहन अध्ययन, प्रौढ़ पाण्डित्य, तत्त्वज्ञता, रहस्यज्ञता सुस्पष्ट परिलक्षित होती है।

इस श्रीविद्या रत्नाकर के प्रथम प्रकाशन को श्रीविद्या साधकों ने परमस्नेह से संगृहीत किया जिससे यह अतिशीघ्र ही शेष हो गया, तदनन्तर इसकी प्राप्ति के लिये कई वर्षों से साधकों के सोत्कण्ठ पत्र निरन्तर प्राप्त होते रहे किन्तु इसके पुनर्मुद्रण में विलम्ब ही होता गया। इसी बीच में श्रीगुरुचरणों की आज्ञा से 'श्रीविद्या वरिवस्या' प्रकाशित की गई। यद्यपि यह भी श्रीक्रम के लिये पर्याप्त है तथापि श्रीविद्या रत्नाकर की पूर्ति में तो कथमपि सक्षम नहीं हो सकती है। अतः श्रीविद्या रत्नाकर की माँग उत्तरोत्तर बढ़ती ही गयी, विलम्ब होने के कारण रोष और आग्रहपूर्ण पत्र निरन्तर आते रहे, हम विलम्ब के लिये साधक वर्ग से क्षमा प्रार्थी हैं। परាम्बा की अनुकम्पा से यह द्वितीय मुद्रण साधकों की

सेवा में प्रस्तुत है। इसमें जहाँ तक हो सका संशोधन के लिये पूर्ण प्रयास किया गया है, एवं साधकों के सौकर्य के लिये महागणपति, श्यामला, वार्ताली के यन्त्र एवं ध्यान चित्र भी दिये गये हैं, इस प्रकाशन में संपूर्णानन्द संस्कृत विश्वविद्यालय के आधुनिक भाषा एवं भाषाविज्ञान विभाग के अध्यक्ष डा० सत्यव्रत शर्मा का पूर्ण योगदान रहा, उनके पुत्र संजीव शर्मा ने ही इसके यन्त्र, चित्रादि बनाने का कार्य सम्पादन किया एवं अन्य पारिवारिक सदस्यों का प्रूफ एवं संशोधन आदि कार्यों में पूर्ण सहयोग रहा, यह पूरा परिवार ही श्रीविद्या का उपासक है। अतः श्रीपराम्बा से पूरे परिवार की कल्याण कामना करते हैं। आचार्य पं० शिवदत्त मिश्र शास्त्रीजी के प्रति भी हम आभार प्रकट करते हैं जिन्होंने प्रारम्भिक मुद्रण की व्यवस्था एवं समय-समय पर यथोचित मुद्रण सम्बन्धी ज्ञान के द्वारा उपकृत किया। श्रीपुरुषोत्तमलाल धानुका एवं उनके पुत्र ओमप्रकाश धानुका को आर्थिक योगदान देने के लिये हम हृदय से साधुवाद देते हैं, ये श्रीकरपात्रीजी महाराज के श्रद्धालु भक्त एवं कृपापात्र रहे हैं। तारा प्रेस के संचालक श्री रमाशंकर पण्ड्या भी भूरि-भूरि प्रशंसा के पात्र हैं जिनके शील एवं सौजन्य से सुचारु रूप से मुद्रण कार्य सम्पादन हुआ।

इस द्वितीय प्रकाशन में मनुष्य स्वभाव सुलभ प्रमादादि दोषों से रही—

न्यूनता एवं अशुद्धियों के लिये श्रीविद्या साधकों से मैं क्षमा प्रार्थना करता हुआ विनम्र निवेदन करता हूं कि अग्रिम प्रकाशन के लिये आपके सुझाव एवं विचारों से अनुगृहीत करें जिससे इसका करिष्यमाण प्रकाशन विशुद्ध एवं साङ्गोपाङ्ग हो।

शेष में इष्टदेव स्वरूप श्रीगुरुचरणों को प्रणतितति संवेदन करता हुआ उनके द्वारा प्रदत्त शक्ति से ही इस कार्यभार को वहन करने में समर्थ हुआ इसके लिये श्रीमद्भागवत के शब्दों में करबद्ध श्रद्धाञ्जलि ही उनके तोष के लिये समर्पित करता हूँ।

तुष्यत्वदभ्रकरुणाः स्वकृतेन नित्यं
को नाम तत्प्रतिकरोति विनोदपात्रम्।

श्रीगुरुचरणसरोजरेणु
श्रीसीताराम कविराज
(दीक्षानाम) दत्तात्रेयानन्दनाथ
वाराणसी

प्रथमप्रकाशनस्य

# सम्पादकीयम्

श्रीविद्यारत्नाकरग्रन्थमिमं सम्पाद्य श्रीसुन्दरीसेवनतत्पराणां श्रीपराम्बा-पादारविन्दमकरन्दजुषां श्रीविद्योपासकानां सेवासु समुपाहरन्नमन्दमा-नन्दसन्दोहं विन्दे। यद्यपि सन्त्यनेकाः श्रीविद्योपासकधौरेयैः सुधीभिः सम्पा-दिताः सपर्यापद्धतयः, सकला अपि ताः साङ्गोपाङ्गसाधनायै सापेक्षतामा-वहन्ति । यथा हि अर्चनायैकं न्यासायान्यत् स्तवनायापरं जपायेतरद्, एव-मङ्गोपाङ्गदेवतानामुपासनायै तासां जपपूजातर्पणहोमपुरश्चरणादीनां कृते बहूनि पुस्तकानि समपेक्षितानि भवन्ति श्रीविद्योपासकानाम् । परञ्च श्री-विद्यारत्नाकरोऽयं आदीक्षाविधानमाच पूर्णाभिषेकं साधनकालात्सिद्धिपर्यन्तं यद्यदपेक्षितं विधानादिकं तत्तत्सकलमपि रत्नाकरवत्प्रपूरयति ।

श्रीगुरुचरणैः कुलार्णव, तन्त्रराज, कल्पसूत्र-श्रीविद्यार्णव-त्रिपुरारहस्य-नित्योत्सवादिकान् विविधतन्त्रग्रन्थान् समालोड्य ग्रन्थरत्नमिदं निरमायि।

तपसा ग्रन्थित्रयभेदेन ज्ञानशक्तिप्रादुर्भावाद् वेदवेदाङ्गेषु निखिलदर्शनेति-हासपुराणधर्मशास्त्रादिसमस्तशास्त्रेष्वेवं योगतन्त्रभक्तिज्ञानादिसमस्तमार्गेषु च येषां सर्वज्ञता सम्पन्ना तैः प्रातःस्मरणीयगुरुचरणैः प्राणिमात्रकल्याण-तत्परैः करुणापूरपूरितमानसैर्महदुपकृतं श्रीविद्योपासकानां ग्रन्थमिमं निर्माय।

सर्वतन्त्रविद्यातो ज्यैष्ठ्यं श्रैष्ठ्यञ्चास्याः श्रीविद्यायाः । श्रीपरमशिव-श्चतुषष्टितन्त्रैः सकलैहिकसिद्धिसन्दोहं सम्पाद्य श्रीपराम्बायाः निर्बन्धेनेदं निखिलपुरुषार्थघटनं श्रीतन्त्रं समाविष्कृतवान् । सौन्दर्यलहर्यां भगवत्पादै-रिदमेव प्रतिपादितम् ।

चतुःषष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं,
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना,
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥

अस्य साधनफलं तस्यां स्तुतावेव च समुद्घोषितम् :—

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते,
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरञ्जीवन्नेव क्षपितपशुपाशव्यतिकरः,
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥

अन्यान्यदेवतार्चनासुः "विद्यार्थी लभते विद्यां धनार्थी लभते धन" मित्यादिकं फलं प्रदर्शितं परं श्रीविद्योपासकस्तु विद्यापतित्वेन ब्रह्मणो लक्ष्मीपतित्वेन विष्णोश्चासूयां जनयन्नतिसुन्दरेण शरीरेण रतेः पातिव्रत्यं शिथिलयन्, तत्तत्सिद्धिभिर्जनान् विस्मापयन्, जीवभावं विहाय शिवभावं भावयन् चिरंजीवन् ब्रह्मानन्दरसं रसयति। अतःपरं किमपि नावशिष्यते प्राप्तव्यम्। जन्मजन्मान्तरीयपुण्यपुञ्जोदयेन कदाचित् केनचित् कथञ्चित् समधिगता सम्यक्तया यद्यस्याः साधनसरणिस्तदा सुसम्पन्नं तस्य सर्वं, कृतकृत्यं तस्य जीवितं; नान्यत्किञ्चिदपेक्षितं स्यादस्याः प्राप्त्यनन्तरं, तस्य चिन्तितकार्याण्ययत्नेन सिद्ध्यन्ति, स शिवयोगीति गीयते।

स्वस्मिन्पूर्णता चानुभूयते। अन्यैः साधनमार्गैः—

"अनेक जन्मसंसिद्धस्ततो याति परां गतिम्"

"बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते" (श्रीमद्भगवद्गीता)

परमेतस्मिन्नेव जन्मनि श्रीविद्योपासकस्तु पराङ्गतिं याति। यथा— "चरमे जन्मनि यथा श्रीविद्योपासको भवेत्"।

"यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम्।
तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी॥"

इति बहुभिः प्रमाणकदम्बकैः सुसम्पन्नमिदं यच्चरमे जन्मन्येव श्रीविद्या प्राप्यते। तेन जीवो जीवभावं विहाय ब्रह्मत्वमुपैति। यतो हि सृष्टिकालादारभ्याऽऽनन्दरूपिणः परब्रह्मणः पृथग्भूय विविधं विचष्टते जीवः। तमेव परमप्रेमास्पदं वस्तु प्राप्तुं जगति रूपरसादिषु तामानन्दकणिकां बहु मन्यमानः तत्संग्रहार्थं यतते, प्राप्नोति चाऽऽधिकाधिकं प्राप्यमाणोऽपि रिक्तरिक्तमिव प्रतीयते। यत उक्तम् :—

"यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
न दुह्यन्ति मनः प्रीतिं पुंसः कामहतस्य ते॥"

अतः आनन्दसिन्धोःलहरीभूतो जीवस्तत् कणिकाभिः कथं तृप्येत्। तमेवाऽऽनन्दसिन्धुं प्राप्यैव तृप्तो भवति। यथा कश्चिच्चक्रवर्ती ग्रामटिकां विजित्य किं मोदेत ? वेदान्तमार्गेण "अहं ब्रह्माऽस्मि" "तत्त्वमसि" "अयमात्मा-ब्रह्म" इत्यादिकानां महावाक्यानां श्रवण-मनननिदिध्यासनादिभिः शनैः शनैर्ब्रह्मभावमाप्नोति, तदा पूर्णतां भजते। परं "क्लेशोऽधिकतरस्तेषाम-

व्यक्तासक्तचेतसाम्" इति भाव्यता भगवता भूतनाथेन परमकारुणिकेन "श्रीविद्यातन्त्रं" निरमायि।

सैवेयं ब्रह्मविद्या श्रीविद्या सच्चिदानन्दस्वरूपिणी यस्याः समाराधनेन जीवः सुखेन स्वरूपतां याति। अस्याः मन्त्रात्मकं यन्त्रात्मकं विग्रहात्मकञ्च त्रिरूपं साधकैः समाराध्यते।

मन्त्रात्मकं रूपं पञ्चदशी षोडशी महाषोडशी च'

श्रीविद्यामन्त्रभाष्यं विवृण्वन् श्रीगुरुचरणैर्व्याख्यातम्। तद्विज्ञाने जाते सर्वं विज्ञातं भवति। तस्मिन्दृष्टे सर्वं बाधितं भवति। तस्य नैसर्गिकी स्फुरत्ता विमर्शरूपा शक्तिस्तद्योगादेव विश्वोत्पत्तिस्थितिलयलीलात्वं शिवस्य।

तदुक्तं वरिवस्यारहस्ये "स जयति महान् प्रकाशो यस्मिन्दृष्टे न दृश्यते किमपि। कथमिव तस्मिन् ज्ञाते सर्वं विज्ञातमुच्यते वेदे। नैसर्गिकी स्फुरत्ता विमर्शरूपाऽस्य वर्तते शक्तिः। तद्विज्ञानार्थमेव चतुर्दशविद्यास्थानानि तेष्वपि सारभूता वेदाः। तेष्वपि गायत्री, तस्या रूपं द्वितयम्। तत्रैकं स्पष्टं द्वितीयं परं गोपनीयं श्रीविद्यारूपम्। तदेव "कामो योनिः कमलावज्रपाणिरित्येवं" साङ्केतिकैः शब्दैर्वेदोऽपि व्यवहरति।

तत्र महाषोडशीमहिमा :—

"वाक्यकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि।
वर्णितुं नैव शक्येऽहं श्रीविद्या षोडशाक्षरीम्॥
एकोच्चारेण देवेशि ! वाजपेयस्य कोटयः।
अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा॥
काश्यादितीर्थयात्राः स्युः सार्धकोटित्रयान्विताः।
तुलां नार्हन्ति देवेशि ! नाऽत्र कार्या विचारणा।
अयि प्रियतमं देयं सुतदारधनादिकम्।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी॥

भगवत्याः यन्त्रात्मकं रूपं "श्रीचक्रम्" तदाराधनेन सर्वसिद्धीश्वरो सञ्जायते; तन्त्रशास्त्रेषु तस्य महता समारोहेण महिमा वर्णितः।

"सम्यक् शतं क्रतून् कृत्वा यत्फलं समवाप्नुयात्।
तत्फलं समवाप्नोति कृत्वा श्रीचक्रदर्शनम्॥"

"तीर्थस्नानसहस्रकोटिफलदं श्रीचक्रपादोदकम्" इत्यादिभिः प्रमाण-निकुरुम्बैरप्रतिमं महत्त्वमाचक्षते।

विग्रहात्मकं रूपन्तु राजराजेश्वरी श्रीललिता महात्रिपुरसुन्दरी परा-भट्टारिका तस्याः स्वरूपं स्तुवद्भिर्भवत्पादैरुक्तम् ।

"शरीरी श्रृङ्गारो रस इव दृशां दोग्धि कुतुकम्"

श्रीललिता पूजनफलन्तु पाद्मवचनैः प्राप्यते—यथा;

अश्वमेधसहस्राणि वाजपेयशतानि च ।
ललितापूजनस्यैते लक्षांशेनाऽपि नो समाः ॥
स दाता स मुनिर्यष्टा स तपस्वी स तीर्थगः ।
गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभेत् ॥
चन्दनागरुकर्पूरैः सूक्ष्मपिष्टैः सकुङ्कुमैः ।
आलिप्य ललितां लोके कल्पकोटीर्वसेन्नरः ॥

"गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदः ।
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया काऽपि त्वं दुरधिगमनिस्सीममहिमा ।
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥"

एकामेव भगवतीं नानानामरूपैर्गृणन्त्यागमविदः परब्रह्ममहिषी, महाविद्या महामाया महात्रिपुरसुन्दरी ललितेति । एकैव सा कार्यकारणरूपा विश्वस्य, स्वात्मानं विश्ववपुषा परिणमयितुं चिदानन्दाकारं विभर्ति । वस्तुतस्तु "सर्वं शाक्तमजीजनत्" इति सिद्धान्तेन दृश्यमानं सकलं जगत् देवीमयमेव ।

"एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे ।
चक्षुष्मन्तो नु पश्यन्ति नेतरेऽतद्विदो जनाः ।"

अतएव— "पुंरूपं वा स्मरेद्देवीं स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ॥"

इति प्रमाणकदम्बकानि तत्तदिच्छानुरोधेन पुंरूपतया, स्त्रीरूपतया, निर्गुणरूपतया वा परदेवतायाः ध्येयत्वं प्रतिपादयन्ति । तच्च पुरुषरूपं कीदृग्विधमिति जिज्ञासायां—

"ममैव पौरुषं रूपं गोपिकाजनमोहनम्" ब्रह्मवैवर्तपु०
कदाचिल्ललिता देवी धृतश्रीकृष्णविग्रहा ।
वेणुनादविनोदेन मोहयत्यखिलं जगत् ॥"

पद्मपुराणे वृन्दावनमाहात्म्यं वर्णयता नारदं प्रति श्रीविष्णुना स्वमुखेनेदमुक्तम्—

"अहं च वासुदेवाख्यो नित्यं कामकलात्मकः।
अहञ्च ललितादेवी पुंरूपा कृष्णविग्रहा।
आवयोरन्तरं नास्ति सत्यं सत्यं हि नारद।
इदं वृन्दावनं नाम रहस्यं मम वै गृहम्॥

कूर्मपुराणे च—

सहस्रमूर्धानमनमनन्तशक्तिं सहस्रबाहुं पुरुषं पुराणम्।
शयानमब्धौ ललिते तवैव नारायणाख्यं प्रणतोऽस्मि रूपम्।

इत्यादिभिः प्रमाणैः पराम्बायाः पुंरूपं प्रतिपादितम्।

स्त्रीरूपन्तु स्पष्टमेव :—

"न मातुः परमस्ति दैवतम्"
"अपराधपरम्परावृतं न हि माता समुपेक्षते सुतम्

"आपदि किं करणीयं स्मरणीयं चरणयुगलमम्बायाः।" इत्यादिभिर्हृद्यैः पद्यैर्मातृरूपेणैव ध्येयत्वं निश्चीयते।

त्रिविधदावदग्धान् भववनपतितान् स्वसेवकान् पीयूषवर्षैः परित्रातुं बद्धपरिकरायाः मातुश्चरणयोः शरणागतिः सर्वार्थसिद्धिदा। उक्तञ्च—

निष्कामो देवतां नित्यं योऽर्चयेद्भक्तिनिर्भरः।
तामेव चिन्तयन्नास्ते यथाशक्ति मनुं जपन्॥
सैव तस्यैहिकं भारं वहेन्मुक्तिञ्च साधयेत्।
सदा सन्निहिता यस्य सर्वञ्च कथयेत सा
वात्सल्यसहिता धेनुर्यथा वत्समनुव्रजेत्।
तथाऽनुगच्छेत्सा देवी स्वं भक्तं शरणागतम्॥"

एवमशरणशरण्यायाः करुणावरुणालयायाः भक्तजनस्य वाञ्छासमधिकफलं दातुं भयात्त्रातुञ्च नित्यनिर्भरायाः पराम्बायाः पादारविन्दार्चनं सकलैहिकामुष्मिकं वाञ्छितार्थं प्रपूरयति।

उपासनविधावपि श्रीविद्यायास्त्रयो भेदा सन्ति।

स्थूलोपास्तिः, सूक्ष्मोपास्तिः परोपास्तिरिति कायिकी वाचिकी मानसीचेत्यपरनामधेयाः कायिकी स्थूलोपास्तिः श्रीचक्रार्चनम्, वाचिकी सूक्ष्मोपास्तिर्जपः मानसी परोपास्तिर्भावनोपनिषद्भावना।

श्रीसाधकानां कृते साङ्गां त्रिविधामपि सपर्यामेकेनैव ग्रन्थरत्नेन सम्यक्प्रकारेण कार्यसम्पादनायालमिति यतमानानामस्माकं मनोरथाः साम्प्रतं पूर्णताङ्गताः।

इतो दशवर्षेभ्यः पूर्वं श्रीगुरुचरणैर्विरचितं श्रीपट्टाभिरामशास्त्रिचरणैः सम्पादितं "त्रिपुरसुन्दरिवरिवस्या" नामकं पुस्तकं प्रकाशितमासीत् तामेव पद्धतिं श्रीचरणैर्नूतनैः कतिपयैः पूर्णाभिषेकादिविधिभिरलङ्कृत्य प्रकाशनार्थं समादिष्टोऽहम् । मया च साधकानां सौकर्यार्थं तत्तत्सपर्यापुस्तकान्यवलोक्य विषया विशदीकृताः ।

इदानीं "श्रीविद्यारत्नाकर" नामा ग्रन्थोऽयं श्रीमतां पुरस्ताद् वर्तते । ग्रन्थेऽस्मिन् गणपतिश्रीश्यामावार्तालीपरादेवतानां साङ्गोपाङ्गसपर्याविधिर्वर्णितः । श्रीक्रमे सुदुर्लभं त्रिवृत्तार्चनं श्रीचक्रस्वरूपं तस्य महिमा च महता समारोहेण प्रमाणपुरःसरं वर्णितः श्रीचरणैः ।

परिशिष्टे च श्रीविद्यामन्त्रभाष्यम्, वाञ्छाकल्पलता विद्या, पूर्णाभिषेकविधिः, लक्षार्चनम्, महायागक्रमः, एवञ्चोद्धृतानि मानसपूजादीनि सुललितानि स्तोत्राणि साधकानां मनांसि समाह्लादयन्ति ।

ग्रन्थस्यास्य सम्पादने मुद्रणे च श्रीगुरुचरणानां कृपालेश एव परमो हेतुः, येन ग्रन्थोऽयं प्रकाशतान्नीतः । अतस्तेषां चरणेषु सहस्रशः प्रणामाः विलसन्तु । मुद्रितपुस्तकसंशोधनेनात्यन्तं साहाय्यमाचरितवतां पुरीपीठाधीश्वराणां जगद्गुरुश्रीशङ्कराचार्याणामनन्तश्रीविभूषितानां स्वामिश्रीनिरञ्जनदेवतीर्थचरणानां पादरजः शिरसाऽऽवहामि ।

वित्तसम्बन्धि सर्वविधसाहाय्यं कृतवतां श्रीहनुमानप्रसादधानुकानां, श्रीबाबूलाल गनेड़ीवालानामेवं मुद्रणपत्रशोधनाय साहाय्यमनुष्ठितवतां त्रिवेद्युपाधिश्रीब्रह्मदत्तशास्त्रिणां कृतेऽनन्तान् धन्यवादान् समर्पयामि ।

अत्र सीसकाक्षरयोजनवैकल्येन काश्चनाशुद्धयो मुद्रणपथमधिरूढाः; अस्मदीयबुद्धिदोषात् दृष्टिदोषाद्वा या अशुद्धयो दृष्टिगोचरा उपासकानां भवेयुः तास्सकलीकृत्य बोधयन्तु येन तत्स्थलं संशोध्य साधकेभ्यो वितरामः ।

पराम्बापादारविन्दमकरन्दजुषां साधकपुङ्गवानां अत्यन्तोपकारकमिदमपूर्वपुस्तकं परिगृह्य साधकजनता श्रीमातुः परमनुग्रहभाजनं भूयादिति साञ्जलिबन्धं सप्रणामं सादरं सामोदं चाशासानः—

श्रीगुरुचरणसरोजरेणुः
श्रीसीताराम कविराजः
"श्रीविद्याभास्करः"
दीक्षानाम—दत्तात्रेयानन्दनाथः

—: ० :—

॥ श्रीः ॥

# श्रीविद्यारत्नाकरस्थविषयानुक्रमणिका

इतिविषयानुक्रमणं समाप्तम् ।

शिवत्वङ्गताः श्रीकरपात्रस्वामिचरणाः



शिवत्वङ्गता—समस्तशास्त्रपारावारपारदृश्वानः अनन्तश्रीविभूषिताः श्रीहरिहरानन्दसरस्वतिस्वामिनः ( दीक्षानाम—श्रीषोडशानन्दनाथः )

# चित्र एवं यन्त्र सूची

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः श्रीमहागणपतये नमः ॥

॥ श्रीसच्चिदानन्दस्वरूपिण्यै श्रीललितामहात्रिपुरसुन्दर्यै नमः ॥

श्रीकरपात्रस्वामिविरचितः

# श्रीविद्या-रत्नाकरः

•

आब्रह्माण्डपिपीलिकान्ततनुभृत्सूज्जृम्भमाणा स्फुटम्,
जाग्रत्-स्वप्न-सुषुप्तिभासकतया सर्वत्र या दीव्यति ।
सा देवी जगदम्बिका भगवती श्रीराजराजेश्वरी,
श्रीविद्या करुणानिधिः शुभकरी भूयात् सदा श्रेयसे ॥

अथ परशुराम-कल्पसूत्र-श्रीविद्यार्णव-नित्योत्सवादिरीत्या गणपति-श्री-श्यामा-वार्ताली-परावरिवस्याः क्रमशो निरूप्यन्ते ।

## दीक्षा-क्रमः

तत्र श्रीविद्यार्णवोक्तमन्त्रेषु विशेषः । देवताप्रसादात् श्रीविद्यार्णवो विशेषतोऽनुगृहीतः । तथाहि, श्रीविद्यार्णवारम्भे :—

'श्रीविष्णुशर्मणः शिष्यः प्रगल्भाचार्यपण्डितः ।
तच्छिष्येण मया प्रोक्ते ग्रन्थेऽस्मिन् पूर्णतां गते ॥

आविरासीज्जगद्धात्री महामाया ममाग्रतः ।
इति प्रोवाच भो वत्स वृणीष्व वरमीप्सितम् ॥
तदोक्तवानहं मातर्मत्कृतं ग्रन्थमुत्तमम् ।
दृष्ट्वा गुरुक्रमं मन्त्रान् गुरुत्वेन विभाव्य माम् ॥
दीक्षां विनाऽपि भक्त्या तु ये जपन्ति च साधकाः ।
तेषामतितरां सिद्धिर्भवत्विति ममेप्सितम् ॥
सुप्रसन्ना तदा देवी तत्तथैव भवत्विति ।'

मन्त्राणामतितरामैहिकामुष्मिकाभीष्टफलदातृत्वं जोघुष्यते सर्वमन्त्रराद्धान्तेषु । पारम्पर्यवैधुर्यादेव तेषामनुष्ठानेऽपि निष्फलत्वमनुभूयते । अनिष्टप्रदत्वञ्चाऽपि तन्त्रेषु स्मर्यते । तदुक्तं तत्रैव :—

गुरुक्रममविज्ञाय पूजयेद् यः परां शिवाम् ।
सा पूजा निष्फला ज्ञेया भस्मन्यर्पितहव्यवत् ॥
ज्ञात्वा गुरुमुखान्नित्यं सम्प्रदायमतन्द्रितः ।
प्रत्यहं स्मरणं कुर्यान्मन्त्रवीर्यस्य सिद्धये ॥
विंशतिः पुरुषाः वापि नव सप्त त्रयोऽपि वा ।
न ज्ञाता गुरुवंशानां शिष्यश्चेन्नष्टसन्ततिः ॥
स्ववंशादधिको ज्ञेयो गुरुवंशो महाशुभः ।
जनकादधिको ज्ञेयो मन्त्रदस्तु महेश्वरः ॥

## गुरुलक्षणम्

परशुरामकल्पसूत्रभाष्ये गुरुलक्षणानि कुलार्णवे १३ समुल्लासे—

श्रीगुरुः परमेशानि शुद्धवेशो मनोहरः ।
सर्वलक्षणसम्पन्नः सर्वावयवशोभितः ॥
सर्वागमार्थतत्त्वज्ञः सर्वतन्त्रविधानवित् ।
लोकसम्मोहनाकारो देववत् प्रियदर्शनः ॥
सुमुखः सुलभः स्वच्छो भ्रमसंशयनाशकः ।
इङ्गिताकारवित् प्राज्ञ ऊहापोहविचक्षणः ॥

अन्तर्लक्ष्यबहिर्दृष्टिः सर्वज्ञो देशकालवित् ।
आज्ञासिद्धस्त्रिकालज्ञो निग्रहानुग्रहक्षमः ॥
वेधको बोधकः शान्तः सर्व-जीव-दयाकरः ।
स्वाधीनेन्द्रियसञ्चारः षड्वर्गविजयप्रदः ॥
अग्रगण्योऽतिगम्भीरः पात्रापात्रविशेषवित् ।
शिवविष्णुसमः साधुर्मनुभूषणभूषितः ॥
निर्ममो नित्यसन्तुष्टः स्वतन्त्रोऽनन्तशक्तिमान् ।
सद्भक्तवत्सलो धीरः कृपालुः स्मितपूर्णवाक् ।
भक्तप्रियः समो देवि ! गम्भीरः शिष्टसाधकः ॥
.... .... .... ....

नरवद् दृश्यते लोके श्रीगुरुः पापकर्मणा ।
शिववद् दृश्यते लोके भवानि ! पुण्यकर्मणा ॥
दृश्यं विना स्थिरा दृष्टिर्मनश्चाऽऽलम्बनं विना ।
विनाऽऽयासं स्थिरो वायुर्यस्य स्यात् स गुरुः प्रिये ॥
यो वेत्ता सच्चिदानन्दं हरेदिन्द्रियजं सुखम् ।
धन्यं तदुक्तमखिलं स गुरुः परमो मतः ।
विद्धस्तु वेधयेद्देवि ! नाविद्धो वेधको भवेत् ॥
मुक्तस्तु मोचयेदूर्ध्वं न मुक्तो मोचकः कथम् ।
शिलां सन्तारयेन्नौर्हि न शिला तारयेच्छिलाम् ॥
अभिज्ञश्चोद्धरेन्मूर्खं न मूर्खो मूर्खमुद्धरेत् ॥
प्रेरकः सूचकश्चैव वाचको दर्शकस्तथा ।
शिक्षको बोधकश्चैव षडेते गुरवः स्मृता ॥
पञ्चैते कार्यभूताःस्युः कारणं बोधको भवेत् ।
पूर्णाभिषेककर्त्ता यो गुरुस्तस्यैव पादुका ॥
पूजनीया महेशानि ! बहुत्वेऽपि न संशयः ।
श्रीगुरुं लक्षणोपेतं संशयच्छेदकारकम् ॥

लब्ध्वा ज्ञानप्रदं देवि! न गुर्वन्तरमाश्रयेत् ।
अनभिज्ञं गुरुं प्राप्य संशयोच्छेदकारकम् ॥
गुर्वन्तरं तु गत्वा स नैतद्दोषेण लिप्यते ।
मधुलुब्धो यथा भृङ्गः पुष्पात् पुष्पान्तरं व्रजेत् ॥
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत् ।
नातिबालो न वृद्धश्च न खञ्जो न कृशस्तथा ॥
नाधिकाङ्गो न हीनाङ्गो न खल्वाटो न दन्तुरः ।
कुमारीहिमवन्मध्ये स्वतःकृष्णमृगान्विते ।
देशे जातस्तु यो विद्वान् आचार्यत्वमथार्हति ।
सर्वत्र व्यतिरिक्तं तु आत्मानं वेत्ति यो द्विजः ।
सर्वलक्षणहीनोऽपि स गुरुर्नाऽत्र संशयः ॥
( हयशीर्षपञ्चरात्रे )

अतीतागमे विशेषः :—

जटी मुण्डी शिखी वाऽपि शस्तदेशसमुद्भवः ।
शिवशास्त्रार्थतत्त्वज्ञः श्रुतवृत्तान्वितो द्विजः ॥
शिवमेवाश्रितो नित्यं वाङ्मनःकायकर्मभिः ।
आचार्यः स सदोद्दिष्टः शिवदीक्षादिकर्मसु ॥

मोहशुरोत्तरे :—

चीर्णाचारव्रतो मन्त्री ज्ञानवान् सुसमाहितः ।
नित्यनिष्ठो यतिः ख्यातो गुरुः स्याद् भौतिकोऽपि च ॥

गुरुगौरवे :—

विद्ययाऽभयदातारं लौल्यचापल्यवर्जितम् ।
एवं विधं गुरुं प्राप्य को न मुच्येत बन्धनात् ॥

पौष्करे तु :—

सर्वलक्षणहीनोऽपि ज्ञानवान् गुरुरुच्यते ।
ज्ञानञ्च तत्त्वविज्ञानं षडध्वज्ञानसंश्रयम् ॥

मालिनीतन्त्रेऽपि—

स गुरुर्मत्समः प्रोक्तो मन्त्रवीर्यप्रकाशकः ।
आदिमान्त्यविहीनास्तु मन्त्राः स्युः शरदभ्रवत् ॥
'गुरोर्लक्षणमेतावदादिमान्त्यं निवेदयेत्'—इति ।

गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
दुर्लभोऽयं गुरुर्देवि शिष्यसन्तापहारकः ॥
स्वच्छः स्वच्छन्दचरितोऽतुच्छधीस्त्यक्तहृच्छयः ।
देशकालादिविद्देशे देशे दैशिक उच्यते ॥
इष्टदो नित्यसंहर्त्ता दृष्टादृष्टसुखावहः ।
रतोऽविरतमर्चासु परं पुरमुरद्विषोः ॥
दाता दान्तः शान्तमना नितान्तं कान्तविग्रहः ।
स्वदुःखकारणेनाऽपि परं परसुखोद्यतः ॥
ऊहापोहविदध्यात्मव्याकुलो मोहवर्जितः ।
अज्ञानुकम्पी विज्ञातज्ञानो ज्ञातपरेङ्गितः ॥

**शिष्य लक्षणम्—**

आस्तिको दृढभक्तिश्च गुरौ मन्त्रे च दैवते ।
एवम्विधो भवेच्छिष्य इतरो दुःखकृद्गुरौ ॥

वशिष्ठागस्त्ययाज्ञवल्क्यादिवद् ब्रह्मनिष्ठः स्वस्थमानसो गृहस्थो गुरुः स्वयमेव सर्वमाचार्यकृत्यं कुर्यात् । त्यक्ताग्नयोऽन्याश्रमिणस्तु ब्रह्मादि-कार्याणि ऋत्विग्भिरेव कारयेयुः । योगध्यानादिसाध्यान्यावरणार्चनादीनि च स्वयमेव विदधीरन् ।

**नित्योत्सवे दीक्षाकालः :—**

वैशाखे सिद्धिदा दीक्षा श्रावणे वृद्धिदा नृणाम् ।
आश्विने सर्वसिद्धिःस्यात् कार्त्तिके ज्ञानवृद्धिदा ॥
शुभदा मार्गशीर्षे च माघे स्वर्गफलप्रदाः ।
फाल्गुने सर्वसिद्धिः स्यादन्येऽनिष्टफलप्रदाः ॥
मलमासं क्षयमासमस्वाध्यायं विवर्जयेत् ।
रवि-सोम-बुध-गुरु-शुक्रेषु वारेषु द्वितीया-तृतीया-
पञ्चमी-सप्तमी-दशम्येकादशी-द्वादशी-पूर्णिमा-तिथिषु-
दीक्षा सुखदा ।

अश्विनी-रोहिणी - पुनर्वसु-पुष्य - मघा-पूर्वफाल्गुनी-हस्त-चित्रा-स्वाती अनुराधा - पूर्वोत्तराषाढ़ा- शतभिषा - पूर्वभाद्रपदा - उत्तरभाद्रपदा-रेवती-

नक्षत्रेष्वायुष्मत्प्रीति-सौभाग्य-शुभ - सुकर्म-धृति - वृद्धि - ध्रुव-सिद्धि-हर्षाख्य-वरीयः शिव-सिद्ध-ब्रह्मेन्द्रयोगेषु च दीक्षा शुभावहा।

मेष-कर्कट-कन्या-तुला-वृश्चिक-मकर-कुम्भराशिषु-शुक्लपक्षे
शुभा दीक्षा, कृष्णेऽप्यापञ्चमीदिनात्।
भूतिकामैः सितेपक्षे मुक्तिकामैः सितेतरे॥'
विषुवेऽप्ययनद्वन्द्वे संक्रात्यां दमनोत्सवे।
दीक्षा कार्या त्वकालेऽपि पवित्रे गुरु पर्वणि॥

विषुवे ( मेष-तुला-सङ्क्रमणयोः ) अयन-द्वन्द्वे ( कर्कटमकरसंक्रान्त्योः ) संक्रान्त्यां, दमनोत्सवे।

षष्ठी भाद्रपदे मासि कृष्णाश्विनचतुर्दशी।
कार्तिके नवमी शुक्ला मार्गे कृष्णा च पञ्चमी।
पौषे च पूर्णिमा देवि माघे चैव चतुर्थिका।
फाल्गुनैकादशी कृष्णा चैत्रे मासि त्रयोदशी।
वैशाखेऽक्षय्यतृतीया ज्येष्ठे दशहरा स्मृता॥
आषाढे द्वादशी कृष्णा ह्यमावस्या च श्रावणी।
इष्टानि देवीपर्वाणि कोटियज्ञफलानि वै॥
सत्तीर्थोदके विधुग्रासे पुण्यारण्ये वनेषु च।
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत्॥

इह सकलानर्थनिवर्हणपरमानन्दावाप्तिमूलप्रत्यक्चैतन्याभिन्नपरात्पर-ब्रह्मात्मिकायाः पराम्बायास्संच्चित्सुखरूपायाः साक्षात्कृतावुपास्तौ च दीक्षाऽपेक्षिता—

'दीयते ज्ञानमत्यन्तं क्षीयते पापसञ्चयः।
यया दीक्षेति सम्प्रोक्ता परलोकप्रदायिनी'॥

इति दीक्षानिर्वचनात्; 'मतिमान् दीक्षेत' इति परशुरामसूत्रात्, "आचार्यवान् पुरुषो वेद" इति श्रुतेश्च। दीक्षामन्तरा पुस्तकस्थान् मन्त्रान् दृष्ट्वा यो जपति, स प्रत्यवैति।

'पुस्तके लिखितान् मन्त्रान् दृष्ट्वा जपति यो नरः ।
स जीवन्नेव चाण्डालो मृतः श्वा चाऽभिजायते' ॥
(इति नित्योत्सवे) ।

## दीक्षापद्धतिः

श्रीविद्यार्णवादिप्रोक्तशुभपुण्यतिथौ सद्गुरुं वृणुयात् ।

तत्र निर्वर्तितनित्यस्नानविधिस्साधको वाद्यघोषपुरस्सरं ब्राह्मणैः स्वस्ति वाचयित्वा, आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य, श्रेयस्कामोऽहम् अमुकविद्याग्रहणार्थम्, अमुकगुरोर्दीक्षां ग्रहीष्य इति सङ्कल्प्य समित्पाणिः सोपहारो गुरुमुपगच्छेत् । पुनश्च गुरोराज्ञया देशकालगोत्रनक्षत्रराश्याद्युच्चारणपूर्वकं भगवन्तं भवन्तं गुरुत्वेन वृण इति शिष्योक्तौ, गुरुर्वृतोऽस्मीत्युक्त्वा, सशिष्यः सामयिकैस्सह गोमयेनोपलिप्तं पुष्पमालावितानाद्यलङ्कृतं मण्डपमासाद्य हस्तपादौ प्रक्षाल्याचम्य मण्डपान्तःप्रविश्य वक्ष्यमाणविधिना आसन उपविश्य भूशुद्धिभूतशुद्धि-प्राणप्रतिष्ठाः कृत्वा गणपतिललिताश्यामावार्तालीपराणां सपर्यां विधाय शिष्यमाहूय नूतनेन वाससा तस्य मुखं बद्ध्वा गणपत्यादिमूलमन्त्रानुच्चारयन् सामान्यार्घोदकबिन्दुभिस्तमभिवीक्ष्य त्रैपुरसिद्धान्तं श्रावयेत् ।

भूतानि, तन्मात्राणि, ज्ञानकर्मेन्द्रियाणि, अहङ्कारबुद्धिमनांसि, गुणसाम्यरूपा प्रकृतिः, शरीरकञ्चुकितश्शिवो जीवः, (परमशिवगताःस्वतन्त्रता-नित्यता-नित्यतृप्तता-सर्वकर्तृकता-सर्वज्ञता धर्मा एव संकुचितास्सन्तो जीवे) नियति- काल- राग - कलाविद्या - शब्दवाच्या भवन्ति । माया ( जगत्परमशिवयोर्भेदबुद्धिः) शुद्धविद्या (तयोरभेदबुद्धिः) जगदिदन्तया पश्यन् परमशिव ईश्वरः, तदहन्तया पश्यन् सदाशिवः, शक्तिः परमशिवस्य जगत्सिसृक्षा, तद्वान् शिवः षट्त्रिंशत्तत्त्वानि, स्वविमर्शः पुरुषार्थः, वर्णसमुदायरूपाः मन्त्राः नित्याः, ( मूलाविद्यासमसत्ताका व्यावहारिकनित्याः ) मन्त्राणामचिन्त्यशक्तित्वेन स्वगुरुपरम्परोपदेशैरगम्यधर्मरूपेण सम्प्रदायेन गुरुशास्त्रदेवतासु विश्वासेन सर्वासिद्धयः, आचार्योक्तरीत्या गुरुमन्त्रदेवतात्मतामैक्यं विभावयन्

मनःपवनयोरेक्यत्लनिरोद्धव्यत्वज्ञानाच्च प्रत्यगात्मवेदनम्, भावनादार्ढ्या-न्निग्रहानुग्रहसिद्धिः। दर्शनान्तरानिन्दनेन स्वोपास्यनिष्ठया मन्त्रार्थानुसन्धा-नेन कामक्रोधनिन्दापरिवर्जनेन च सिद्धयो भवन्ति।

वृत्तिभिर्वेद्यं सर्वं हविः, इन्द्रियाणि स्रुचः, संकोचेन स्वात्मस्थिता-स्सर्वज्ञत्वसर्वकर्तृत्वादयः परमशिवशक्तय एव ज्वालाः, स्वात्मशिव एव पावकः, स्वयमेव होता, निर्गुणब्रह्मापरोक्ष्यं फलम्, स्वपारमार्थिकस्वरूप-लाभान्न परमिति सारः।

## शाम्भवी दीक्षा

गुरुः शिष्यस्य शिरसि रक्तशुक्लचरणं कामेश्वरीकामेश्वरयोर्भावयित्वा तदमृतक्षालितं सर्वशरीरमलं दूरीकुर्यात्। एषा चरणविन्यासरूपादीक्षा।

## शाक्ती दीक्षा

ततस्तस्यामूलमाब्रह्मबिलं प्रज्वलन्तीं बिसतन्तुतनीयसीं विद्युत्पुञ्ज-पिञ्जरां विवस्वदयुतभास्वत्प्रकाशां चन्द्रकोटिसुशीतलां ज्वलदनलनिभां परां संविदं ध्यात्वा तद्रश्मिभिः पापान् दहेत्। इयं शक्तिपातरूपा दीक्षा।

त्रिकटु-त्रिफला-चतुर्जात-कंकोल- मदयन्ती -सहदेवी-दूर्वा-भस्म मृत्तिका-चन्दन- कुङ्कुम - रोचना - कर्पूरवासितजलपूर्णवस्त्रयुगलवेष्टितं नूतनकलशं बालाषडङ्गेनाभ्यर्च्य श्रीश्यामावार्तालीचक्राणि निःक्षिप्य तिसृणामावरण-मन्त्रैरभ्यर्च्य संरक्ष्यास्त्रेण प्रदर्श्य धेनुयोनी।

ततः सक्षीरेण सिन्दूरकुङ्कुमादिना चन्दनपीठे मातृकायन्त्रं विलिख्य, तत्र शिष्यं निवेश्य तेन कुम्भाम्भसा ललितादिमूलविद्याभिः स्नपयेत्। मातृकायन्त्रप्रकारश्चेत्थम्—चतुरस्रालङ्कृतं सकेसरमष्टदलकमलं विलिख्य तत्कर्णिकायां हकारसकारौकारविसर्गात्मकं बीजं तत्केसरेषु प्राच्यादितो-ऽकारादिस्वरद्वन्द्वं दलोदरेषु क-च-ट-त-प-य-श-लाख्यवर्गाष्टकं चतुरस्रस्य बाह्यतः प्रागादिदिक्षु वकारम् आग्नेयादिविदिक्षु ठवर्णञ्च लिखेत्। सर्वेषामक्षराणां सबिन्दुकत्वं सम्प्रदायात्।

ततः परिहितदुकूलं सुरभिलचन्दनानुलिप्ताङ्गं मल्लिकादिमाल्यधारिणम्, सुप्रसन्नं शिष्यं पार्श्वे निवेश्य तदङ्गे मातृकान्यासं विधाय विमुक्तमुखबन्धवाससस्तस्य हस्ते क्रमात् त्रीन् चन्दनोक्षितान् पुष्पखण्डान् विनिक्षिप्य तत्त्वमन्त्रैर्ग्रासयित्वा गुरुर्दक्षिणकर्णे श्रीविद्यागुरुपादुकामन्त्रमुपदिश्य बालामुपदिशेत् ।

ततस्तस्य शिरसि स्वचरणं निःक्षिप्य सर्वान् मन्त्रान् सकृद्वा क्रमेण वा यथाधिकारमुपदिश्य स्वाङ्गेषु किमप्यङ्गं शिष्यं स्पर्शयित्वा तदङ्गमातृकावर्णादिद्व्यक्षरं त्र्यक्षरं चतुरक्षरं वा आनन्दानाथशब्दान्तं तस्य नाम निर्दिशेत् । ततस्समयाचारानुशासनम् ।

श्लेष्मातक-करञ्ज अक्ष-निम्ब-अश्वत्थ-कदम्ब-बिल्व-वटोदुम्बरतिन्तिणीकुलवृक्षच्छेदनवर्जनम्, स्त्रीवृन्द-क्षीरकलशसिद्धलिङ्गिविविधक्रीडाकुलकुमारी-कुल-सहकाराशोकतरु-पितृवनमत्तवाराङ्गना-रक्तांशुकामत्तेभान् दृष्ट्वा वन्देत् । कृष्णाष्टमी कृष्णचतुर्दशी दर्श-पूर्णमास-संक्रमणपर्वसु नैमित्तिकी वरिवस्या कर्तव्या । गुरुपरमगुर्वादीन् आदरेण पश्येत्, शरीरस्यार्थस्यासूनाञ्च गुर्वर्थं धारणम्, तद्वचसि युक्तायुक्ताविचारम्, सर्वत्र शास्त्रव्यवस्थापालनम्, परनिन्दात्मस्तुत्योश्च वर्जनम्, सर्वप्रयत्नेन परदेवताराधनद्वारा ब्रह्मभावाभिलाषः; इत्थं विदित्वाऽनुतिष्ठन् कृतकृत्यो जीवन्मुक्तो भवेत् ।

ततो गुरुर्देहेन्द्रियादिविलक्षणामवस्थात्रयसाक्षिसच्चिदात्मकप्रत्यगभिन्नं ब्रह्मैव त्वमसि इति शिष्याय परमात्मतत्त्वमुपदिश्य ललिताश्यामावार्तालीविद्याभिः तदङ्गं द्विः परिमृज्य परिरभ्य तं मूर्ध्न्युपाघ्राय स्वमिव शिष्यमपि परचिद्रूपं कुर्यात् । शिष्योऽपि तथैव क्षणमात्मानं भावयित्वा कृतार्थस्सन् यथाविभवं श्रीगुरुमाराध्य तस्माद्विदितवेदितव्योऽशेषमन्त्राधिकारी भवेत् ।

अनेनैवैकस्मिन्नेव काले समुचितेनाऽन्यतमेन कालभेदाद्दीक्षाविधिना गणपति-श्री-श्यामा-परा-वार्तालीनां क्रमानुष्ठानं न तु पृथक् पृथक् दीक्षणम् ।

### दीक्षायाः लघुविधिः

गणपतेर्ललितायाश्च उभयोरेव क्रमं निर्वर्त्य पात्राण्यासाद्य चक्रराजमात्रं कलशे निक्षिप्य श्रीविद्यया केवलं शिष्यं स्नपयित्वा तदङ्गञ्च परिमृज्य शेषमशेषञ्चाऽनुतिष्ठेत् । गणपतिश्यामादीनां स्वातन्त्र्येणैकैकशः तत्तत्क्रमं प्रवर्त्य तत्तत्पात्रे आसाद्य तत्तद्यन्त्रं कुम्भे निःक्षिप्य तत्तन्मन्त्रदीक्षां कुर्यात् । दीक्षायां त्रैवर्णिकस्यैवाऽधिकारः । शक्तीनान्तु-ओघत्रयान्तर्गतगुरुमण्डला-न्तर्दर्शनज्ञापकबलादस्त्येवाऽधिकारः ।

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे

॥ दीक्षाक्रमः समाप्तः ॥

## श्रीमहागणपतिः



वीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पलः ।
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ॥
ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया ।
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥

## श्रीमहागणपतिक्रमः

इत्थं सद्गुरोराहितदीक्षः महाविद्याराधन-
प्रत्यूहापोहाय गाणनायकीं पद्धतिमामृशेत् ॥

श्रीमान् साधकः ब्राह्मे मुहूर्त्ते उत्थाय श्रीगुरुपादुकास्मरणपूर्वकं हृदयःकमले उद्यदरुणकिरणपाटलस्य देवस्य करटिवदनस्य ध्यानेन परिप्लुष्ट-निःशेषदोषत्वं आत्मनः तत्प्रभारुणतनुत्वञ्च भावयित्वा शय्यां त्यक्त्वा श्री-विद्यासपर्याक्रमोक्तशौचदन्तधावनादीन् कृत्वा, स्नात्वा, धौते वाससी परिधाय सन्ध्यावन्दनं कृत्वा, ॐ गं आत्मतत्त्वाय स्वाहा। ॐ गं विद्यातत्त्वाय स्वाहा। ॐ गं शिवतत्त्वाय स्वाहा। ॐ गं सर्वतत्त्वाय स्वाहा। इति तत्त्वाचमनं कृत्वा मूलेन प्राणानायम्य "ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्तिः प्रचोदयात्" इति गणपतिगायत्र्या, ॐ सूर्यमण्डलस्थाय महागणपतये एषोऽर्घ्यः स्वाहा, इति त्रिः अर्घ्यं दत्वा। ऋष्यादिषडङ्गन्यासपूर्वकं अष्टो-त्तरशतवारं वा अष्टाविंशतिवारं मूलमन्त्रं जपित्वा। अनेन कर्मणा भगवान् श्रीमहागणपतिः प्रीयताम्। इति सन्ध्यां गणपतये निवेदयेत्। ततो गुरु-पादुकामन्त्रं जपेत्।

ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं हस्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं हसौः स्हौः श्रीगुरुपादुकां पूजयामि।

### ॥ अथ चतुरावृत्तितर्पणम् ॥

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, मम श्रीमहागणपतिप्रसाद-सिद्धये सर्वविघ्ननिवारणार्थं चतुरावृत्तितर्पणं करिष्ये, इति संकल्प्य नद्यादौ हस्तमात्रं चतुरस्रमण्डलं परिगृह्य—

ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे।
तेन सत्येन मे देव! तीर्थं देहि दिवाकर॥

इति मन्त्रेण सूर्यमभ्यर्थ्य—

आवाहयामि त्वां देवि! तर्पणायेह सुन्दरि।
एहि गङ्गे! नमस्तुभ्यं सर्वतीर्थसमन्विते॥

इति गङ्गां प्रार्थ्य 'ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः' इत्युच्चार्य क्रों इत्यङ्कुशमुद्रया गङ्गाऽऽदितीर्थान्यावाह्य, वं इत्यमृतबीजेन सप्तवारमभिमन्त्र्य, तत्र चतुरस्राष्टदलषट्कोणत्रिकोणात्मकं महागणपतियन्त्रं विचिन्त्य, स्वदेहे ऋष्यादिन्यासान् न्यस्य, तद्यथा

अस्य श्रीमहागणपतिमहामन्त्रस्य गणक ऋषिः, निचृद्गायत्रीच्छन्दः, महागणपतिर्देवता, महागणपतितर्पणे विनियोगः ।

अथ न्यासः—

श्रीं ह्रीं क्लीं ॐ गां अङ्गुष्ठाभ्यां—हृदयाय नमः

३ ,, श्रीं गीं तर्जनीभ्यां—शिरसे स्वाहा ।

३ ,, ह्रीं गूं मध्यमाभ्यां—शिखायै वषट् ।

३ ,, क्लीं गैं अनामिकाभ्यां—कवचाय हुं ।

३ ,, ग्लौं गौं कनिष्ठिकाभ्यां—नेत्रत्रयाय वौषट् ।

३ ,, गं गः करतलकरपृष्ठाभ्यां—अस्त्राय फट् ।

अथ ध्यानम्—

'ध्याये हृदब्जे शोणाङ्गं वामोत्सङ्गविभूषया ।
सिद्धलक्ष्म्या समाश्लिष्टपार्श्वमर्धेन्दुशेखरम् ॥
वामाधःकरतो दक्षाधःकरान्तेषु पुष्करे ।
परिष्कृतंमातुलुङ्गगदापुण्ड्रेक्षुकार्मुकैः ॥
शूलेन शङ्खचक्राभ्यां पाशोत्पलयुगेन च ।
शालिमञ्जरिकास्वीयदन्ताञ्चलमणीघटैः ॥
स्रवन्मदञ्च सानन्दं श्रीश्रीपत्यादिसम्वृतम् ।
अशेषविघ्नविध्वंसनिघ्नं विघ्नेश्वरं भजे ॥ (इति ध्यात्वा)

(यन्त्रे सावरणदेवमावाह्य) ततःतद्यन्त्रे मूर्ति च गंधपुष्पदूर्वांकुरैः पञ्चोपचारैरर्चयेत् । तद्यथा—श्रीं ह्रीं क्लीं महागणपतये लं पृथिव्यात्मकं गन्धं कल्पयामि नमः (त्रिवारम्) ।

श्रीं ह्रीं क्लीं महागणपतये हं आकाशात्मकं पुष्पं कल्पयामि नमः

( त्रिवारम् ) ।

| | | |
|---|---|---|
| ३ | महागणपतये यं वाय्वात्मकं धूपं कल्पयामि नमः | ,, । |
| ३ | महागणपतये रं वह्न्यात्मकं दीपं कल्पयामि नमः | ,, । |
| ३ | महागणपतये वं अमृतात्मकं नैवेद्यं कल्पयामि नमः | ,, । |
| ३ | महागणपतये सं सर्वात्मकं ताम्बूलं कल्पयामि नमः | ,, । |

इति ॥

प्रथमं प्रत्यावृत्तिमूलान्ते महागणपतिं तर्पयामीति द्वादशवारं तर्पयित्वा ततः स्वाहान्तेन मूलस्यैकैकेन वर्णेन चतुश्चतुर्वारं प्रतिवर्णान्तमावृत्तेन मूलेन च प्राग्वत् चतुश्चतुर्वारं देवं त्रयोदशसु मिथुनेषु श्रीश्रीपत्यादिषु एकैकां देवतां द्वितीयान्तेन तत्तन्नाम्ना चतुश्चतुर्वारं प्रतिदेवतामावृत्तेन च मूलेन देवं चतुश्चतुर्वारं तर्पयेत् । यथा—

ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा महागणपतिं तर्पयामि ।' ( द्वादशवारम् ) ।

| | | | |
|---|---|---|---|
| श्रीं ह्रीं क्लीं ॐ स्वाहा | महागणपतिं | तर्पयामि । | ( चतुर्वारम् ) |
| मूलमन्त्रेण— | ,, | ,, | ,, |
| ३ श्रीं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ ह्रीं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ क्लीं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ ग्लौं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |

| | | | |
|---|---|---|---|
| ३ गं स्वाहा | महागणपतिं | तर्पयामि। | ( चतुर्वारम् ) |
| मूलेन— | " | " | " |
| ३ गं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ णं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ पं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ तं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ यें स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ वं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ रं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ वं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ रं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ दं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ सं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ र्वं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ जं स्वाहा | " | " | " |
| मूलेन— | " | " | " |

| | | | |
|---|---|---|---|
| ३ नं स्वाहा | महागणपतिं | तर्पयामि । | चतुर्वारम् । |
| मूलेन— | ,, | ,, | ,, |
| ३ मं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ वं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ शं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ मां स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ नं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ यं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ स्वां स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ हां स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ श्रियं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ श्रीपतिं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ गिरिजां स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ गिरिजापतिं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ रतिं स्वाहा | ,, | ,, | ,, |
| मूलेन— | ,, | ,, | ,, |
| ३ रतिपतिं स्वाहा | ,, | ,, | ,, |

| | | | |
|---|---|---|---|
| मूलेन— | महागणपतिं | तर्पयामि । | चतुर्वारम् । |
| ३ महीं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ महीपतिं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ महालक्ष्मीं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ महागणपतिं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ ऋद्धिं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ आमोदं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ समृद्धिं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ प्रमोदं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ कान्तिं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ सुमुखं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ मदनावतीं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ दुर्मुखं स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ मदद्रवां स्वाहा | " | " | " |
| मूलेन— | " | " | " |
| ३ अविघ्नं स्वाहा | " | " | " |

| | | | |
|---|---|---|---|
| ३ द्राविणीं स्वाहा | महागणपतिं | तर्पयामि । | चतुर्वारम् । |
| मूलेन— | ” | ” | ” |
| ३ विघ्नकर्त्तारं स्वाहा | ” | ” | ” |
| मूलेन— | ” | ” | ” |
| ३ वसुधारां स्वाहा | ” | ” | ” |
| मूलेन— | ” | ” | ” |
| ३ शङ्खनिधिं स्वाहा | ” | ” | ” |
| मूलेन— | ” | ” | ” |
| ३ वसुमतीं स्वाहा | ” | ” | ” |
| मूलेन— | ” | ” | ” |
| ३ पद्मनिधिं स्वाहा | ” | ” | ” |
| मूलेन— | ” | ” | ” |

इत्याहत्य तर्पणसङ्ख्यापिण्डश्चतुश्चत्वारिंशदुत्तरशती ( ४४४ ) भवति ॥

तर्पणान्ते उत्तरन्यासान् विधाय पुनर्मूलेन देवमुक्तरीत्या पञ्चोपचारैः संपूजयेत् ॥

गुह्यातिगुह्यगोप्ता त्वं गृहाण कृततर्पणम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा ॥
आयुरारोग्यमैश्वर्यं बलं पुष्टिर्महद्यशः ।
कवित्वं भुक्तिमुक्ती च चतुरावृत्तितर्पणात् ॥

अनेन कृतेन तर्पणेन भगवान् श्रीसिद्धलक्ष्मीसहितः श्रीमहागणपतिः-प्रीयताम् ॥

॥ इति चतुरावृत्तितर्पणविधिः ॥

## अथ गणपति-सपर्यापद्धति

आब्रह्मलोकादाशेषादालोकालोकपर्वतात् ।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमाम्यहम् ॥

ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो, वंशर्षिभ्यो नमो गुरुभ्यः । सर्वोपप्लवरहितप्रज्ञानघनप्रत्यगर्थो ब्रह्मैवाहमस्मि, सोऽहमस्मि, ब्रह्माहमस्मि ॥

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवम् ।
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्व्यष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकम् ।
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

### यागमन्दिर-प्रवेशः

ततो यागगृहमागत्य स्थण्डिलं गोमयेनोपलिप्य यागमन्दिरं च रङ्गवल्लीपुष्पमालिकावितानादिभिरलङ्कृत्य द्वारस्य दक्षवामभागयोः उर्ध्वभागे च क्रमेण—

श्रीं ह्रीं क्लीं भद्रकाल्यै नमः ॥ दक्ष शाखायाम् ॥
३ भैरवाय नमः ॥ वाम शाखायाम् ॥
३ लम्बोदराय नमः ॥ ऊर्ध्व शाखायाम् ॥

(इति द्वारदेवतास्संम्पूज्य)

### तत्त्वाचमनम्

ॐ गं आत्मतत्त्वाय स्वाहा ॥
ॐ गं विद्यातत्त्वाय स्वाहा ॥
ॐ गं शिवतत्त्वाय स्वाहा ॥
ॐ गं सर्वतत्त्वाय स्वाहा ( इत्याचम्य )

श्रीगुरुपादुकामन्त्रः ।

श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं हंसः शिवः सोऽहं स्वरूपनिरूपण-हेतवे श्रीगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं सोऽहं हंसः शिवः स्वच्छप्रकाशवि-मर्शहेतवे श्रीपरमगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ।

श्रीं ह्रीं क्लीं ऐं क्लीं सौः ऐं ग्लौं हंसः शिवः सोऽहं हंसः स्वात्माराम-पञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः अमुकानन्दनाथश्रीपादुकां पूज-यामि नमः ॥

इति मृगीमुद्रया गुरुपादुकामुच्चार्य सुमुख-सुवृत्त-चतुरस्र-मुद्गरयोन्या-ख्याभिः पञ्चभिर्मुद्राभिः श्रीगुरूम् वामभुजे प्रणम्य गणपतिमूलेन स्वदक्षभुजे योनिमुद्रया महागणपतिं प्रणमेत् ॥

घंटापूजा

आगमार्थं च देवानां गमनार्थं च रक्षसाम् ।
कुर्याद् घंटारवं तत्र देवताह्वानलाञ्छनम् ॥
(इति घंटानादं कृत्वा) ॥

॥ सङ्कल्पः ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥

(मूलेन प्राणानायम्य) । देशकालौ संकीर्त्य, मम श्रीसिद्धलक्ष्मीसहित-महागणपति-प्रीत्यर्थं यथासंभवद्रव्यैः यथाशक्ति सपर्याक्रमं निर्वर्तयिष्ये, तेन परमेश्वरं प्रीणयामि ॥

(आत्मानमलङ्कृत्य ताम्बूलेन सुरभितवदनः सन् प्रमुदितचित्तः शिवोहं इति भावयेत्) ॥

॥ आसनपूजा ॥

आसनमास्तीर्य दक्षिणहस्ते जलमादाय "सौः" इति द्वादशवारमभिमन्त्र्य तज्जलेन मूलमन्त्रेण-आसनं प्रोक्षयेत् ॥

अस्य श्रीआसनमहामन्त्रस्य-पृथिव्या मेरुपृष्ठऋषिः सुतलं छंदः कूर्मो देवता आसने विनियोग :—

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

योगासनाय नमः । वीरासनाय नमः । शरासनाय नमः ॥ श्रीं ह्रीं-क्लीं आधारशक्तिकमलासनाय नमः । (इति पुष्पाक्षतैः आसनसभ्यर्च्यं आसने-उपविशेत्)

श्रीं ह्रीं क्लीं रक्तद्वादशशक्तियुक्ताय द्वीपनाथाय नमः ॥ (इति भूमौ पुष्पाञ्जलिं विकिरेत्) ॥

३ समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नमः ॥ (इति मूर्ध्नि-बद्धाञ्जलिः)

३ ऐं ह्लः अस्त्राय फट्—इति अस्त्रमन्त्रेण मुहुरावृतेन अङ्गुष्ठादिकनि-ष्ठिकान्तं करतलयोः कूर्परयोः देहे च व्यापकं कुर्यात् ॥

## ॥ दीपपूजा ॥

(स्वदक्षभागे गन्धपुष्पाक्षतादीन् निधाय दीपानभितः प्रज्वाल्य) ।

घृतदीपो दक्षिणे स्यात् तैलदीपस्तु वामतः ।
सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः ॥
( दक्षवामभागौ देवस्यैव । )

३ दीपदेवि महादेवि शुभं भवतु मे सदा ।
यावत् पूजासमाप्तिः स्यात्तावत् प्रज्वल सुस्थिरा ॥
(इति पुष्पाञ्जलिं दद्यात् ॥)

मूलेन यन्त्रमध्ये पुष्पाञ्जलिं विकीर्य, मूलत्रिखण्डेन स्वाग्रवामदक्षकोणेषु पुष्पाञ्जलिं दद्यात् ॥

## शिखाबन्धनादि मातृकान्यासान्तम्

श्रीक्रमे वक्ष्यमाणप्रकारेण भूतशुद्ध्यादिमात्मनः प्राणप्रतिष्ठाञ्च विधाय विंशतिधा षोडशधा दशधा त्रिधा वा मूलेन प्राणानायम्य ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्त्तारस्ते नश्यन्तु शिवाज्ञया॥

(इति मन्त्रमुच्चार्य) युगपद्वामपार्ष्णिभूतलाघातत्रयकरास्फोटनत्रय क्रूरदृष्ट्यावलोकनपूर्वकतालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत्, अथ "नमः" (इति अङ्गुष्ठमन्त्रमुच्चरन् अङ्कुशमुद्रया शिखां बध्नीयात्)।

ततः श्रीक्रमे वक्ष्यमाणप्रकारेण मातृकान्यासं श्रीं ह्रीं क्लीं, इति त्रिबीजयोजनपूर्वकं विधाय, मूलमन्त्रस्य ऋषि-देवतादिविनियोगपूर्वकं करषडङ्गन्यासौ विधाय मूलेन त्रिर्व्यापकं कृत्वा ध्यायेत्।

## । अथ पात्रासादनम् ।

### वर्धनीकलशस्थापनम्

स्वपुरतः वामभागे त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य—मण्डलं मूलेन समभ्यर्च्य कर्पूरादिवासितजलपूरितं कलशं गन्धपुष्पाक्षतैः अलङ्कृत्य मण्डलोपरि स्थापयेत्॥

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणः स्मृतः॥
कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः॥
अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः॥

ॐ आपो वा इदं सर्वं विश्वाभूतान्यापः प्राणाः वा आपः पशवः आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापश्छन्दांस्यापो ज्योतींष्यापो यजूंष्यापः सर्वाः देवता आपो भूर्भुवस्सुवराप ॐ॥

गंगे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥
सर्वे समुद्राः सरितस्तीर्थानि च नदा ह्रदाः।
आयान्तु देवपूजार्थं दुरितक्षयकारकाः॥

(मूलेन अष्टवारमभिमन्त्र्य धेनुमुद्रां प्रदर्श्य तज्जलेन पूजोपकरणानि-आत्मानञ्च प्रोक्षयेत्) ॥

### सामान्यार्घ्यविधिः ॥

वर्धनीपात्रस्य दक्षिणतः वर्धनीपात्रगतेन जलेन विन्दु-त्रिकोण षट्कोण-वृत्त-चतुरस्रात्मकं मण्डलं मत्स्यमुद्रया निर्माय ॥

चतुरस्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च गणपतिषडङ्गैः सम्पूजयेत् । यथा—

श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः ॥
३ श्रीं गीं शिरसे स्वाहा । शिरः शक्तिश्रीपादुकां पूजयामि नमः ॥
३ ह्रीं गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः ॥
३ क्लीं गैं कवचाय हुं । कवचशक्तिश्रीपादुकां पूजयामि नमः ॥
३ ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः ॥
३ गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः ॥

षट्कोणे स्वाग्रादि प्रादक्षिण्येन—

श्रीं ह्रीं क्लीं ॐ गां हृदयाय: नमः । हृदयशक्तिश्रीपादुकां पूजयामि नमः ॥
३ श्रीं गीं शिखायै स्वाहा । शिरः शक्तिश्रीपादुकां पूजयामि नमः ॥
३ ह्री गूं शिखायै वषट् । शिखाशक्तिश्रीपादुकां पूजयामि नमः ॥
३ क्लीं गैं कवचाय हुं । कवचशक्तिश्रीपादुकां पूजयामि नमः ॥
३ ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्तिश्रीपादुकां पूजयामि नमः ॥
३ गं गः अस्त्राय फट् । अस्त्रशक्तिश्रीपादुकां पूजयामि नमः ॥

त्रिकोणे स्वाग्रादि प्रादक्षिण्येन –

३ ॐ श्रीं ह्रीं क्लीं गं नमः ॥
३ गणपतये वरवरद नमः ॥
३ सर्वजनं मे वशमानय स्वाहा नमः ॥
३ मूलं नमः (बिन्दौ)

ततः, अस्त्राय फट् इति सामान्यर्घ्यंपात्रस्य आधारं प्रक्ष्याल्य,

३ अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीसिद्धलक्ष्मीसहित श्रीमहागणपतेः सामान्यार्घ्यंपात्राधाराय नमः ॥ इति मण्डलोपरि संस्थाप्य ॥

३ अग्निं दूतं वृणीमहे होतारं विश्ववेदसं। अस्य यज्ञस्य सुक्रतुम्। रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः। (इति अग्निमण्डलं विभाव्य)। दशवह्निकलाः संपूजयेत्। तद्यथा—

| | |
|---|---|
| श्रीं ह्रीं क्लीं यं धूम्रार्चिष्कलायै नमः ॥ | ३ षं सुश्री कलायै नमः ॥ |
| ३ रं ऊष्माकलायै नमः ॥ | ३ सं सुरूपा कलायै नमः ॥ |
| ३ लं ज्वलिनी कलायै नमः ॥ | ३ हं कपिला कलायै नमः ॥ |
| ३ वं ज्वालिनीकलायै नमः ॥ | ३ ळं हव्यवाहिनी कलायै नमः ॥ |
| ३ शं विस्फुलिङ्गिनीकलायै नमः ॥ | ३ क्षं कव्यवाहिनी कलायै नमः ॥ |

३ अस्त्राय फट् (इति क्षालितं शङ्खं गृहीत्वा)—

श्रीं ह्रीं क्लीं उं सूर्यमण्डलायार्थप्रदद्वादशकलात्मने श्रीसिद्धलक्ष्मीसहित श्रीमहागणपतेः, सामान्यार्घ्यपात्राय नमः—इति संस्थाप्य।

श्रीं ह्रीं क्लीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन्। हां हीं हूं हैं हौं हः—हमलवरयूम् सूर्यमण्डलाय नमः (इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः संपूजयेत्)। तद्यथा—

| | |
|---|---|
| ३ कं भं तपिनी कलायै नमः ॥ | ३ घं पं मरीचि कलायै नमः ॥ |
| ३ खं बं तापिनी कलायै नमः ॥ | ३ ङं नं ज्वालिनी कलायै नमः ॥ |
| ३ गं फं धूम्रा कलायै नमः ॥ | ३ चं धं रुचि कलायै नमः ॥ |
| ३ छं दं सुषुम्ना कलायै नमः ॥ | ३ ञं णं बोधिनी कलायै नमः ॥ |
| ३ जं थं भोगदा कलायै नमः ॥ | ३ टं ढं धारिणी कलायै नमः ॥ |
| ३ झं तं विश्वा कलायै नमः ॥ | ३ ठं डं क्षमा कलायै नमः ॥ |

श्रींह्रींक्लीं मं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीसिद्धलक्ष्मीसहितमहागणपतेः सामान्यार्घ्यामृताय नमः (इति वर्धनीसलिलमापूर्य क्षीरबिन्दुं दत्वा)।

श्रीं ह्रीं क्लीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियं । भवावाजस्य सङ्गथे । सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः । (इति सोममण्डलं विभाव्य षोडश सोमकलाः सम्पूजयेत्) । तद्यथा—

| | | | |
|---|---|---|---|
| श्रींह्रींक्लीं अं अमृताकलायै नमः ॥ | ३ | लृं चन्द्रिकाकलायै | नमः ॥ |
| ३ आं मानदाकलायै नमः ॥ | ३ | लॄं कान्तिकलायै | नमः ॥ |
| ३ इं पूषाकलायै नमः ॥ | ३ | एं ज्योत्स्नाकलायै | नमः ॥ |
| ३ ईं तुष्टिकलायै नमः ॥ | ३ | ऐं श्रीकलायै | नमः ॥ |
| ३ उं पुष्टिकलायै नमः ॥ | ३ | ओं प्रीतिकलायै | नमः ॥ |
| ३ ऊं रतिकलायै नमः ॥ | ३ | औं अङ्गदाकलायै | नमः ॥ |
| ३ ऋं धृतिकलायै नमः ॥ | ३ | अं पूर्णाकलायै | नमः ॥ |
| ३ ॠं शशिनीकलायै नमः ॥ | ३ | अः पूर्णामृताकलायै | नमः ॥ |

ततस्तस्मिन् शङ्खे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च क्रमेण षडङ्गैः (सम्पूज्य), अस्त्राय फट् (इति संरक्ष्य), कवचायहुं (इति अवगुण्ठ्य), धेनुयोनिमुद्रे प्रदर्श्य, सप्तवारमभिमन्त्र्य, तत्सलिलपृषतैः पूजोपकरणानि आत्मानं च प्रोक्ष्य, शङ्खजलात् किञ्चित् बर्धन्यां क्षिपेत् ॥

## विशेषार्घ्यविधिः

सामान्यार्घ्योदकेन तद्दक्षिणतः बिन्दु-त्रिकोण-षट्कोण-वृत्त-चतुरस्रात्मकं मण्डलं मत्स्यमुद्रया विलिख्य, विन्दौ सानुस्वारं तुरीयस्वरं विलिख्य ॥

चतुरस्रे प्राग्वत् षडङ्गं विन्यस्य षट्कोणे स्वाग्रकोणादि प्रादक्षिण्येन षडङ्गैरभ्यर्च्य, त्रिकोणे मूलत्रिखण्डैरभ्यर्च्य, मूलेन विंदुं चार्चयेत् । तद्यथा–

**चतुरस्रे अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—**

श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्ति श्रीपादुकांपूजयामि नमः ॥
३ श्रीं गीं शिरसे स्वाहा । शिरःशक्ति श्रीपादुकां ,, ,, ॥
३ ह्रीं गूं शिखायै वषट् । शिखाशक्ति श्रीपादुकां ,, ,, ॥
३ क्लीं गैं कवचाय हुं । कवचशक्ति श्रीपादुकां ,, ,, ॥

३ ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्ति श्रीपादुकां पूजयामि नमः

३ गं गः अस्त्राय फट् । अस्त्रशक्ति श्रीपादुकां " " ॥

ततः षट्कोणे स्वाग्रादि प्रादक्षिण्येन—

श्रीं ह्रीं क्लीं ॐ गां हृदयाय नमः । हृदयशक्ति श्रीपादुकां पूजयामि नमः ॥

३ श्रीं गीं शिरसे स्वाहा । शिरःशक्ति श्रीपादुकां " " ॥

३ ह्रीं गूं शिखायै वषट् । शिखाशक्ति श्रीपादुकां " " ॥

३ क्लीं गैं कवचाय हुं । कवचशक्ति श्रीपादुकां " " ॥

३ ग्लौं गौं नेत्रत्रयाय वौषट् । नेत्रशक्ति श्रीपादुकां " " ॥

३ गं गः अस्त्राय फट् । अस्त्रशक्ति श्रीपादुकां " " ॥

ततस्त्रिकोणे स्वाग्रादिप्रादक्षिण्येन—

श्रीं ह्रीं क्लीं ॐ श्रीं ह्रीं क्लीं ग्लौं गं नमः ॥

श्रीं ह्रीं क्लीं गणपतये वरवरद नमः ॥

श्रीं ह्रीं क्लीं सर्वजनं मे वशमानय स्वाहा नमः ॥

३ मूलं नमः ( बिन्दौ )

अथ—३ अस्त्राय फट् (इति आधारं प्रक्षाल्य) ।

श्रीं ह्रीं क्लीं अं अग्निमण्डलाय धर्मप्रददशकलात्मने श्रीसिद्धलक्ष्मी-सहितश्रीमहागणपतेः विशेषार्घ्यपात्राधाराय नमः (इति आधारं संस्थाप्य)

श्रीं ह्रीं क्लीं अग्निदूतं वृणीमहे होतारं विश्ववेदसं । यस्य यज्ञस्य सुक्रतुम् । रां रीं रूं रैं रौं रः रमलवरयूं अग्निमण्डलाय नमः—इति अग्निमण्डलं विभाव्य दशवह्निकलाः पूजयेत् । यथा—

श्रीं ह्रीं क्लीं यं धूम्रार्चिष्कलायै नमः ॥

३ रं ऊष्माकलायै नमः ॥

३ लं ज्वलिनीकलायै नमः ॥

३ वं ज्वालिनीकलायै नमः ॥

३ शं विस्फुलिङ्गिनी कलायै नमः ॥

३ षं सुश्रीकलायै नमः ॥

३ सं सुरूपाकलायै नमः ॥

३ हं कपिलाकलायै नमः ॥

३ ळं हव्यवाहिनीकलायै नमः ॥

३ क्षं कव्यवाहिनीकलायै नमः ॥

ततः—श्रीं ह्रीं क्लीं अस्त्राय फट् (इति मन्त्रेण विशेषार्घ्यपात्रं-प्रक्षाल्य)

श्रीं ह्रीं क्लीं ॐ सूर्यमण्डलाय अर्थप्रदद्वादशकलात्मने श्रीसिद्धलक्ष्मी-सहितश्रीमहागणपतेः विशेषार्घ्यपात्राय नमः (इति आधारोपरि संस्थाप्य)।

श्रीं ह्रीं क्लीं ऐं श्रीमहालक्ष्मीश्वरि परमस्वामिनी ऊर्ध्वशून्यप्रवाहिनि सोमसूर्याग्निभक्षिणि परमाकाशभासुरे आगच्छागच्छ विश विश पात्रं प्रतिगृह्ण प्रतिगृह्ण हुं फट् स्वाहा, (इति पुष्पाञ्जलिं विकीर्य) ॥

श्रीं ह्रीं क्लीं आ सत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनानि पश्यन् । ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः ह्मलवरयूं सूर्यमण्डलाय नमः (इति सूर्यमण्डलं विभाव्य द्वादश सूर्यकलाः पूजयेत्) । यथा—

श्रींह्रींक्लीं कं भं तपिनीकलायै नमः ॥ ३ छं दं सुषुम्नाकलायै नमः ॥

३ खं वं तापिनीकलायै नमः ॥ ३ जं थं भोगदाकलायै नमः ॥

३ गं फं धूम्राकलायै नमः ॥ ३ झं तं विश्वाकलायैः नमः ॥

३ घं पं मरीचिकलायै नमः ॥ ३ ञं णं बोधिनीकलायै नमः ॥

३ ङं नं ज्वालिनीकलायै नमः ॥ ३ टं ढं धारिणीकलायै नमः ॥

३ चं धं रुचिकलायै नमः ॥ ३ ठं डं क्षमाकलायै नमः ॥

श्रीं ह्रीं क्लीं मं सोममण्डलाय कामप्रदषोडशकलात्मने श्रीसिद्ध-लक्ष्मीसहितश्रीमहागणपतेः विशेषार्घ्यामृताय नमः—इति तत्त्वमुद्रया अकारादि क्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितेन-अमृतेन-आपूर्य अष्टगंधलोलितं पुष्पं निधाय नागरखण्डं निक्षिप्य ॥

श्रीं ह्रीं क्लीं आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् । भवा-वाजस्य सङ्गथे ॥ सां सीं सूं सैं सौं सः समलवरयूं सोममण्डलाय नमः—
इति सोममण्डलं विभाव्य षोडशसोमकलाः पूजयेत् । यथा—

| | | | |
|---|---|---|---|
| श्रींह्रींक्लीं अं अमृताकलायैः | नमः ॥ | ३ लृं चन्द्रिकाकलायै | नमः ॥ |
| ३ आं मानदाकलायै | नमः ॥ | ३ लॄं कान्तिकलायै | नमः ॥ |
| ३ इं पूषाकलायै | नमः ॥ | ३ एं ज्योत्स्नाकलायै | नमः ॥ |
| ३ ईं तुष्टिकलायै | नमः ॥ | ३ ऐं श्रीकलायै | नमः ॥ |
| ३ उं पुष्टिकलायै | नमः ॥ | ३ ओं प्रीतिकलायै | नमः ॥ |
| ३ ऊं रतिकलायै | नमः ॥ | ३ औं अङ्गदाकलायै | नमः ॥ |
| ३ ऋं धृतिकलायै | नमः ॥ | ३ अं पूर्णाकलायै | नमः ॥ |
| ३ ॠं शशिनीकलायै | नमः ॥ | ३ अः पूर्णामृताकलायै | नमः ॥ |

ततः, श्रीं ह्रीं क्लीं ॐ जुं सः स्वाहा । (इति अष्टवारमभिमन्त्र्य) ॥

तत्राघ्यामृते स्वाग्राद्यप्रादक्षिण्येन अकथादिषोडशवर्णात्मकरेखात्रयं त्रिकोणं विलिख्य, तदन्तः स्वाग्रादि कोणेषु अप्रादक्षिण्येन हलक्षान् बहिः-प्रादक्षिण्येन महागणपतिमूलखण्डत्रयं बिन्दौ सबिन्दुतुरीयस्वरम्, तद्वाम-दक्षयोः क्रमेण हंसः इति विलिख्य—

श्रीं ह्रीं क्लीं हंसः नमः (इति आराध्य) त्रिकोणस्य परितः वृत्तं तद्ब-हिश्च षट्कोणं निर्माय स्वाग्रकोणादि प्रादक्षिण्येन षडङ्गमन्त्रैः षट्कोण-मभ्यर्च्य ।

श्रीं ह्रीं क्लीं मूलं तां चिन्मयीं आनन्दलक्षणां अमृतकलशपिशित-हस्तद्वयां प्रसन्नां देवीं पूजयामि नमः स्वाहा (इति सुधादेवीं समभ्यर्च्य) तदर्घ्यात् किञ्चित् पात्रान्तरेण,

श्रीं ह्रीं क्लीं वषट् । इति उद्धृत्य

३ स्वाहा । इति तत्रैव निक्षिप्य

३ हुं । इति अवगुंठ्य

३ वौषट् । इति धेनुमुद्रया अमृतीकृत्य

३ फट् । इति संरक्ष्य

३ नमः । इति पुष्पं दत्वा

३ मूलेन गालिन्या निरीक्ष्य

३ ऐं इति योनिमुद्रया नत्वा

श्रीं ह्रीं क्लीं मूलेन सप्तवारमभिमन्त्र्य सुधादेवीं षोडशोपचारैः सम्पूज्य । तद्बिन्दुभिः सपर्यासाधनानि प्रोक्ष्य । सर्वं महागणपतिमयं विभावयेत् ॥

ततः विशेषार्घ्यपात्रं करेण संस्पृश्य वक्ष्यमाणगणपतिगायत्र्या ऋचा च अभिमन्त्रयेत्—

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥
गणानां त्वा गणपतिं हवामहे कविं कवीनामुपश्रवस्तमम् ।
जेष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥
(श्रीक्रमोक्तचतुर्नवतिमन्त्राद्यभिमन्त्रणमत्र नास्ति) ॥

विशेषार्घ्यपात्रस्याधः त्रिकोण-वृत्त-चतुरस्रात्मकं मण्डलद्वयं विलिख्य, प्रथममण्डले—

श्रीं ह्रीं क्लीं हंसः शिवः सोहं सोहं हंसश्शिवः, हंसश्शिवस्सोहं नमः । इत्यभ्यर्च्य, गुरुपात्रं निधाय । द्वितीयमण्डले—

श्रीं ह्रीं क्लीं हंसः नमः । इत्यभ्यर्च्य आत्मपात्रं निधाय । ततः विशेषार्घ्यामृतात् किंचित् गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत् । पुनः आत्मपात्रे तं विशेषार्घ्यामृतमुद्धृत्य, मूलधारे बालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितचिदग्निमण्डलं ध्यात्वा,

श्रीं ह्रीं क्लीं कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः ।

(इति मनसा संपूज्य),

श्रीं ह्रीं क्लीं मूलं पुण्यं जुहोमि स्वाहा

| | |
|---|---|
| ,, पापं जुहोमि स्वाहा | ३ विकल्पं जुहोमि स्वाहा |
| ,, कृत्यं जुहोमि स्वाहा | ३ धर्मं जुहोमि स्वाहा |
| ,, अकृत्यं जुहोमि स्वाहा | ३ अधर्मं जुहोमि स्वाहा |
| ,, सङ्कल्पं जुहोमि स्वाहा | ३ अधर्मं जुहोमि वौषट् |

श्रीं ह्रीं क्लीं इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्य-वस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा—इति पूर्णाहुतिं विभाव्य—

श्रीं ह्रीं क्लीं आर्द्रं ज्वलति ज्योतिरहमस्मि ।
ज्योतिर्ज्वलति ब्रह्माहमस्मि ।
योऽहमस्मि ब्रह्माहमस्मि ।
अहमस्मि ब्रह्माहमस्मि ।
अहमेवाहं मां जुहोमि स्वाहा ॥

(इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्) विशेषार्घ्य-पात्रात् किञ्चित् क्षीरं कारणकलशे निक्षिपेत् ॥

## पीठे प्राणप्रतिष्ठा

पुरतो रक्तचन्दनादिभिः निर्मिते पीठे कलधौतादिविरचितां महा-गणपतिप्रतिमां वा ध्यानोक्तरूपां चतुरस्राष्टदलषडरत्रिकोणात्मकं सिन्दूरा-दिना लिखितं लेखितं वा यन्त्रं धातुमयं वा निवेश्य—

श्रीगणेशयन्त्रस्य प्राणाः इह प्राणाः, श्रीगणेशयन्त्रस्य जीव इह स्थितः, श्रीगणेशयन्त्रस्य सर्वेन्द्रियाणि श्रीगणेशयन्त्रस्य वाङ्मनः प्राणाः इह आयान्तु स्वाहा ॥ (इति मन्त्रेण प्राणप्रतिष्ठां विदध्यात्) ॥

## पीठशक्तिपूजा

यन्त्रस्य त्रिकोणे स्वाग्रादि प्रादक्षिण्येन परितो मध्ये च क्रमेण—

| | | | | | |
|---|---|---|---|---|---|
| श्रीं ह्रीं क्लीं | तीव्रायै | नमः ॥ | श्रीं ह्रीं क्लीं | उग्रायै | नमः ॥ |
| ३ | ज्वालिन्यै | नमः ॥ | ३ | तेजोवत्यै | नमः ॥ |
| ३ | नन्दायै | नमः ॥ | ३ | सत्यायै | नमः ॥ |
| ३ | भोगदायै | नमः ॥ | ३ | विघ्ननाशिन्यै | नमः ॥ |
| ३ | कामरूपिण्यै | नमः ॥ | ३ | सर्वशक्तिकमलासनायै | नमः ॥ |

(इति नवगणेशपीठशक्तिरभ्यर्च्य) ॥

## धर्माद्यष्टकपूजा

तत्रैव आग्नेयादि विदिक्षु प्रागादि दिक्षु च क्रमेण

श्रीं ह्रीं क्लीं ऋं धर्माय नमः ॥ श्रीं ह्रीं क्लीं ॠं अधर्माय नमः ॥
३ ऋं ज्ञानाय नमः ॥ ३ ॠं अज्ञानाय नमः ॥
३ ऌं वैराग्याय नमः ॥ ३ ॡं अवैराग्याय नमः ॥
३ ॡं ऐश्वर्याय नमः ॥ ३ ॡं अनैश्वर्याय नमः ॥
(इति-अर्चयेत्)

## अन्तर्यागः

द्वादशान्ते सहस्रदलकमलकर्णिकामध्ये निविष्टगुरुचरणयुगलविगलदमृतरसविसरपरिप्लुताखिलाङ्गो हृदयकमलमध्ये ज्वलन्तमुद्यदरुणकोटिपाटलमशेषदोषनिर्विषभूतमनेकपाननं पुर्यष्टकाकारं साङ्गं सावरणम् भक्तानुग्रहार्थं तेजोरूपेण परिणतं प्रापय्य ब्रह्मरन्ध्रं बहन्नासापुटेन निर्गमय्य त्रिखण्डामुद्रामण्डितशिखण्डे कुसुमाञ्जलौ हस्ते समानीय—

ऐक्षवे जलधौ द्वीपे नवरत्नमये शुभे ।
तत्तरङ्गोल्लसत्तोयैं धौते शीततलेऽमले ॥ १ ॥
तत्तोयकणसंपृक्तगंधवाहनिषेविते ।
कल्पपादपसंशोभिभूभागसमलङ्कृते ॥ २ ॥
नानाकुसुमसंकीर्णे नानापक्षिविराजिते ।
अनेकफलसंकीर्णे भाविते वाप्सरोगणैः ॥ ३ ॥
उद्यद्बालातपोद्योतिचंद्रज्योत्स्नासमाकुले ।
विलसत्पद्मरागौघकुट्टिमारुणभूतले ॥ ४ ॥
कल्पपादपपुष्पस्थषट्पदस्वनमञ्जुले ।
पारिजातं कल्पतरुं तस्य मध्ये विचिन्तयेत् ॥ ५ ॥
युगपद् ऋतुषट्केन सेवितं पुष्पशोभितम् ।
नवरत्नमयं तस्याऽधस्तात् सिंहासनं स्मरेत् ॥ ६ ॥
तन्मध्ये लिपिपद्मं च षडस्रं तस्य मध्यतः ।
कर्णिकायां त्रिकोणं च तत्संस्थं च महाग्रणम् ॥ ७ ॥

नानारत्नविभूषाढ्यं एकदन्तं गजाननम् ।
बीजापूरगदाचापशूलचक्राम्बुजान्यपि ॥ ८ ॥
पाशोत्पले च व्रीह्यग्रं स्वदन्तं रत्नपात्रकम् ।
धारयन्तं दशभुजैः भक्ताभीष्टप्रदायकम् ॥ ९ ॥
सर्वाङ्गभूषोज्वलया पद्मसंशोभिहस्तया ।
आश्लिष्टवामपार्श्वं च देव्या वल्लभया सदा ॥ १० ॥
विघ्नेशं विघ्नहर्तारं फुल्लपद्माभविग्रहम् ।
पुष्करोद्घृतरत्नौघमयकुम्भमुखस्नुतात् ॥ ११ ॥
मणिमुक्ताप्रवालादीन् वर्षन्तं धारया मुहुः ।
सर्वतः साधकस्याग्रे स्वदानजललोलुपान् ॥ १२ ॥
षट्पदालीन् कर्णतालैः वारयन्तं मुहुर्मुहुः ।
अमरासुरसंसेव्यं सद्रत्नमुकुटोज्ज्वलं ॥ १३ ॥
उरूदरं गजमुखं नानाभरणभूषितम् ।
इति ध्यात्वा गणपतिं यजेत् सर्वोपचारकैः ॥ १४ ॥
बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल-
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरयाश्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥१५॥ (इति ध्यात्वा)

गणानांत्वेति मंत्रेण मूलमन्त्रेण च अस्मिन् यन्त्रे (बिम्बे वा)

श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिं साङ्गम् सपरिवारम् सावरणम् आवाहयामि नमः ॥

श्रीं ह्रीं क्लीं मूलं आवाहितो भव ॥ ३ मूलं सम्मुखो भव ॥
३ मूलं संस्थापितो भव ॥ ३ मूलं अवगुण्ठितो भव ॥
३ मूलं सन्निधापितो भव ॥ ३ मूलं सुप्रसन्नो भव ॥
३ मूलं सन्निरुद्धो भव ॥ ३ मूलं वरदो भव ॥

स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम् ।
तावत्त्वं प्रीति भावेन यन्त्रेऽस्मिन् सन्निधि कुरु (बिम्बेऽस्मिन्) ॥

इति मन्त्रैरावाहनादि षट्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् । अथ हृदयादि षडङ्गमुद्राश्चः प्रदर्शयेत् ॥

महागणपतिप्रियपाशादि सप्तमुद्राः प्रदर्शयेत् ॥

## अथ षोडशोपचारपूजा

(श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतिदेवतायाः षोडशोपचारानाचरेत्) ।

श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहितश्रीमहागणपतये पाद्यं कल्पयामि नमः ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| ३ | ,, | ,, | अर्घ्यं | ,, | ,, | ॥ |
| ३ | ,, | ,, | आचमनीयं | ,, | ,, | ॥ |
| ३ | ,, | ,, | स्नानं* | ,, | ,, | ॥ |
| ३ | ,, | ,, | वस्त्रोत्तरीयं | ,, | ,, | ॥ |
| ३ | ,, | ,, | भूषणम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | गन्धम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | पुष्पम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | धूपम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | दीपम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | नैवेद्यं | ,, | ,, | ॥ |
| ३ | ,, | ,, | ताम्बूलम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | नीराजनम् | ,, | ,, | ॥ |
| ३ | ,, | ,, | प्रदक्षिणाः | ,, | ,, | ॥ |
| ३ | ,, | ,, | नमस्कारान् | ,, | ,, | ॥ |

श्रीं ह्रीं क्लीं दन्त-पाश-अङ्कुश-विघ्न-परशु-लड्डूक बीजापूराह्वयाः सप्तमुद्राः गणेशस्य प्रियाः मताः ॥

इति सप्तमुद्राः प्रदर्शयेत् ॥

---

* स्नानसमये दुग्ध-पञ्चामृत-मधु फलरसादिना अभिसिञ्चेत्, पुरुष-सूक्तगणपत्युपनिषद् गणपतिगायत्र्यादि वेदमन्त्रान् उच्चरेत् ।

## चतुरायतनपूजा

विष्णुशिवसूर्यदेव्याह्वयाः चतुरायतनदेवताः ।
आग्नेय-ईशान-नैर्ऋत-वायव्येषु तत्तन्मूलमन्त्रेण यजेत् ॥

## श्रीमहागणपतितर्पणम् ।

(ततो मूलान्ते, श्रीमहागणपति श्रीपादुकां पूजयामि, इति देवं दशवारं पूजयेत्) यथा—

श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहितमहागणपति श्रीपादुकां पूजयामि नमः
(इति दशवारं सन्तर्पयेत्)

### षडङ्गपूजा

ततो देवस्याङ्गे अग्नीशासुरवायुकोणेषु मौलौ दिक्षु च—

| | | | | | |
|---|---|---|---|---|---|
| श्रीं ह्रींक्लींॐगां हृदयाय नमः । | हृदयशक्तिश्रीपादुकां | पूजयामि | | नमः ॥ |
| ३ श्रीं गीं शिरसे स्वाहा । | शिरः शक्तिश्रीपादुकां | पू० | | नमः ॥ |
| ३ ह्रीं गूं शिखायै वषट् । | शिखाशक्ति | ,, | ,, | ,, ॥ |
| ३ क्लीं गैं कवचाय हुं । | कवचशक्ति | ,, | ,, | ,, ॥ |
| ३ ग्लौं गौं नेत्रत्रयाय वौषट् । | नेत्रशक्ति | ,, | ,, | ,, ॥ |
| ३ गं गः अस्त्राय फट् । | अस्त्रशक्ति | ,, | ,, | ,, ॥ |

## गुरुमण्डलार्चनम् ।

देवस्य पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्था क्रमेण गुर्वोघत्रयं यजेत् ॥

यथा—

### दिव्यौघः

| | | | | |
|---|---|---|---|---|
| श्रीं ह्रीं क्लीं विनायकसिद्धाचार्य | श्रीपादुकां | पूजयामि | | नमः ॥ |
| ३ कवीश्वरसिद्धाचार्य | ,, | ,, | ,, | ॥ |
| ३ विरूपाक्षसिद्धाचार्य | ,, | ,, | ,, | ॥ |
| ३ विश्वसिद्धाचार्य | ,, | ,, | ,, | ॥ |
| ३ ब्रह्मण्यसिद्धाचार्य | ,, | ,, | ,, | ॥ |
| ३ निधीशसिद्धाचार्य | ,, | ,, | ,, | ॥ |

## सिद्धौघः

श्रीं ह्लीं क्लीं गजाधिराजसिद्धाचार्य श्रीपादुकां पूजयामि नमः ॥
,, वरप्रदसिद्धाचार्य ,, ,, ,,

## मानवौघः

३ विजयसिद्धाचार्य श्रीपादुकां पू० नमः ॥
३ दुर्जयसिद्धाचार्य ,, ,, ,, ॥
३ जयसिद्धाचार्य ,, ,, ,, ॥
३ दुःखारिसिद्धाचार्य ,, ,, ,, ॥
३ सुखावहसिद्धाचार्य ,, ,, ,, ॥
३ परमात्मसिद्धाचार्य ,, ,, ,, ॥
३ सर्वभूतात्मसिद्धाचार्य ,, ,, ,, ॥
३ महानन्दसिद्धाचार्य ,, ,, ,, ॥
३ फालचन्द्रसिद्धाचार्य ,, ,, ,, ॥
३ सद्योजातसिद्धाचार्य ,, ,, ,, ॥
३ वृद्धसिद्धाचार्य ,, ,, ,, ॥
३ शूरसिद्धाचार्य ,, ,, ,, ॥

ततः परमेष्ठिगुरुमन्त्रेण परमेष्ठिगुरुं, परमगुरुमन्त्रेण परमगुरुं, स्वगुरुमन्त्रेण स्वगुरुं च यजेत् ॥

## ॥ आवरणदेवता ध्यानम् ॥

त्रिकोणबाह्ये पूर्वादिचतुर्दिक्षु समर्चयेत् ।
अग्रस्थविल्ववृक्षाधः श्रियं श्रीपतिमर्चयेत् ॥
पद्मायुधधरा पद्मा शङ्खचक्रधरो हरिः ।
दक्षिणे वटवृक्षाधः गौरीं गौरीपतिं यजेत् ॥
पाशाङ्कुशधरा गौरी टङ्कशूलधरो हरः ।
पश्चिमे पिप्पलस्याधो रतिं रतिपतिं यजेत् ॥

रतिरुत्पलहस्ताढ्या कोदण्डास्त्रधरः स्मरः ।
सौम्ये प्रियङ्गुवृक्षाधः महापोत्त्रिणमर्चयेत् ॥
शूकव्रीह्यग्रहस्ताभूर्गदाचक्रधरःपतिः ।
षट्कोणेषु च सम्पूज्याः आमोदाद्याः प्रियान्विताः ॥
आमोदं सिद्धिसहितमग्रकोणे प्रपूज्येत् ।
समृद्धया युक्तमभ्यर्च्य प्रमोदं वह्निकोणके ॥
सुमुखं कान्तिसंयुक्तमीशकोणे समर्चयेत् ।
दुर्मुखं मदनावत्या यजेद्वरुणकोणके ॥
विघ्नं मदद्रवायुक्तं कोणे नैशाचरे यजेत् ।
वायव्ये विघ्नकर्तारं द्राविण्या सह संयजेत् ॥
पाशाङ्कुशाभयाऽभीष्टधारिणोऽरुणविग्रहाः ।
गण्डभित्तिगलद्दानपूरधौतमुखाम्बुजाः ॥
विघ्नस्तत्प्रमदास्सर्वाः मदाघूर्णितलोचनाः ।
एकहस्तधृताम्भोजाः इतरालिङ्गितप्रियाः ॥
षट्कोणपार्श्वयोः पूज्यौ शङ्खपद्मनिधी क्रमात् ।
निजप्रियाभ्यां सहितौ सर्वाभरणभूषितौ ॥
केशरेष्वङ्गपूजा स्यात् ब्राह्म्याद्याः पत्रमध्यगाः ।
बहिर्लोकेश्वराः पूज्याः वज्रादीनि यथाक्रमम् ॥

## प्रथमावरणम्

त्र्यस्रषडस्रोरन्तराले प्रागादिदिक्षु क्रमेण—

| | | | | |
|---|---|---|---|---|
| श्रीं ह्रीं क्लीं | श्रीश्रीपति | श्रीपादुकां | पूजयामि नमः | ॥ |
| ३ | गिरिजागिरिजापति | ,, | ,, | ॥ |
| ३ | रतिरतिपति | ,, | ,, | ॥ |
| ३ | महीमहीपति | ,, | ,, | ॥ |

एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः संतुष्टाःसन्तु नमः । (इति पुष्पं दत्वा) । मूलेन देवं त्रिः सन्तर्प्य, पञ्चोपचारं कृत्वा ।

श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन प्रथमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम् ।

(इति योनिमुद्रया प्रणमेत्)

## द्वितीयावरणम्

(षडस्रे देवाग्रकोणमारभ्य प्रादक्षिण्येन तद्दक्षवामपार्श्वयोश्च क्रमेण यजेत्)

श्रीं ह्रीं क्लीं ऋद्ध्यामोद श्रीपादुकां पू० नमः ॥

| | | | | | |
|---|---|---|---|---|---|
| ३ | समृद्धिप्रमोद | ,, | ,, | ,, | ॥ |
| ३ | कान्तिसुमुख | ,, | ,, | ,, | ॥ |
| ३ | मदनावतीदुर्मुख | ,, | ,, | ,, | ॥ |
| ३ | मदद्रवा-अविघ्न | ,, | ,, | ,, | ॥ |
| ३ | द्राविणीविघ्नकर्तृ | ,, | ,, | ,, | ॥ |
| ३ | वसुधाराशङ्खनिधि | ,, | ,, | ,, | ॥ |
| ३ | वसुमतीपद्मनिधि | ,, | ,, | ,, | ॥ |

एताः द्वितीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः । इति पुष्पं दत्वा । मूलेन देवं त्रिः सन्तर्प्य, पञ्चोपचारं कृत्वा ।

श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल ।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)

अनेन द्वितीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम् ।

(इति योनिमुद्रया प्रणमेत्)

———

## तृतीयावरणम्

षडस्रसन्धिषट्के प्राग्वत् षडङ्गदेवताऽर्चनम् ।—

श्रीं ह्रीं क्लीं ॐ गां हृदयशक्ति श्रीपादुकां पू० नमः ॥
३ श्रीं गीं शिरःशक्ति ,, ,, ,, ॥
३ ह्रीं गूं शिखाशक्ति ,, ,, ,, ॥
३ क्लीं गैं कवचशक्ति ,, ,, ,, ॥
३ ग्लौं गौं नेत्रशक्ति ,, ,, ,, ॥
३ गं गः अस्त्रशक्ति ,, ,, ,, ॥

एताः तृतीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टा सन्तु नमः ॥ इति पुष्पं दत्वा । मूलेन देवं त्रिः सन्तर्प्य । पञ्चोपचारं कृत्वा ।

श्रीं ह्रीं क्लीं अभीष्टसिद्धि..........................तृतीयावरणार्चनम् ॥
इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य—

अनेन तृतीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम् ।

(इति योनिमुद्रया प्रणमेत्)

---

## तुरीयावरणम्

अष्टदले पश्चिमादि दिक्षु वायव्यादि विदिक्षु च प्रादक्षिण्यक्रमेण—

श्रीं ह्रीं क्लीं आं ब्राह्मी श्रीपादुकां पू० नमः ॥
३ ईं माहेश्वरी ,, ,, ,, ॥
३ ऊं कौमारी ,, ,, ,, ॥
३ ॠं वैष्णवी ,, ,, ,, ॥
३ ॡं वाराही ,, ,, ,, ॥
३ ऐं माहेन्द्री ,, ,, ,, ॥
३ औं चामुण्डा ,, ,, ,, ॥
३ अः महालक्ष्मी ,, ,, ,, ॥

एताः तुरीयावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः संतुष्टाः सन्तु नमः ॥ इति पुष्पं दत्वा ॥ मूलेन देवं त्रिः सन्तर्प्य । पञ्चोपचारं कृत्वा ।

श्रीं ह्रीं क्लीं अभीष्ट·················तुरीयावरणार्चनम् । (इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)—

अनेन तुरीयावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम् ।

(इति योनिमुद्रया प्रणमेत्) ॥

## पञ्चमावरणम् ।

अथ चतुरस्रस्य रेखायां प्रागाद्यासु अष्टसु दिक्षु क्रमेण—

श्रीं ह्रीं क्लीं लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः, इन्द्रश्रीपादुकां पूजयामि नमः ॥

३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः, अग्निश्रीपादुकां पू० नमः ॥

३ टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराय नमः, यमश्रीपादुकां पू० नमः ॥

३ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः, निर्ऋतिश्रीपादुकां पू० नमः ॥

३ वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः, वरुणश्रीपादुकां पू० नमः ॥

३ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः, वायुश्रीपादुकां पू० नमः ॥

३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः, सोमश्रीपादुकां पू० नमः ॥

३ हां ईशानाय त्रिशूलहस्ताय विद्याऽधिपतये वृषभवाहनाय सपरिवाराय नमः, ईशानश्रीपादुका पू० नमः ॥

एताः पञ्चमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः सर्वोपचारैः सम्पूजिताः सन्तर्पिता सन्तुष्टाः सन्तु नमः ॥ इति पुष्पं दत्वा। मूलेन देवं त्रिः सन्तर्प्य। पञ्चोपचारं कृत्वा।

श्रीं ह्रीं क्लीं अभीष्टसिद्धिं मे देहि शरणागतवत्सल।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥

(इति सामान्यार्घ्योदकेन देवताहस्ते पूजां समर्प्य)—

अनेन पञ्चमावरणार्चनेन भगवान् श्रीमहागणपतिः प्रीयताम्।

(इति योनिमुद्रया प्रणमेत्) ॥

पुनः मूलेन दशवारं सन्तर्पयेत्

श्रीं ह्रीं क्लीं 'मूलं' श्रीसिद्धलक्ष्मीसहित श्रीमहागणपति श्रीपादुकां पू. नमः ॥

(इति दशवारं सन्तर्पयेत्) ॥

## षोडशनामार्चनम्

| | | | | | |
|---|---|---|---|---|---|
| श्रीं ह्रीं क्लीं | सुमुखाय | नमः ॥ | ३ | धूमकेतवे | नमः ॥ |
| ३ | एकदन्ताय | नमः ॥ | ३ | गणाध्यक्षाय | नमः ॥ |
| ३ | कपिलाय | नमः ॥ | ३ | फालचन्द्राय | नमः ॥ |
| ३ | गजकर्णकाय | नमः ॥ | ३ | गजाननाय | नमः ॥ |
| ३ | लम्बोदराय | नमः ॥ | ३ | वक्रतुण्डाय | नमः ॥ |
| ३ | विकटाय | नमः ॥ | ३ | शूर्पकर्णाय | नमः ॥ |
| ३ | विघ्नराजाय | नमः ॥ | ३ | हेरम्बाय | नमः ॥ |
| ३ | गणाधिपाय | नमः ॥ | ३ | स्कन्दपूर्वजाय | नमः ॥ |

पुनः पूर्वोक्तषोडशभिरुपचारैः पूजयेत्।

श्रीं ह्रीं क्लीं श्रीमहागणपतये नमः नानाविधपरिमलपत्रपुष्पाणिदूर्वादीनि समर्पयामि ॥ अथ यथावकाशं सहस्रनामादिना—अर्चनं कुर्यात् ॥

## धूपः

श्रीं ह्रीं क्लीं धूरसि धूर्व धूर्वन्तं धूर्वयं योऽस्मान् धूर्वति तं धूर्वयं वयं धूर्वामस्त्वं देवानामसि सस्नितमं पप्रितमं जुष्टतमं वह्नितमं देवहूतममहृनु-

तससि हविर्धानं दृँहस्व माह्वार्मित्रस्यत्वाचक्षुषा प्रेक्षे माभेर्मा संविक्था मात्वा हिँसिषम् ॥

३ श्रीसिद्धलक्ष्मीसहित श्रीमहागणपतये नमः धूपमाघ्रापयामि। धूपानन्तरं आचमनीयं समर्पयामि ॥

## ॥ दीपः ॥

श्रीं ह्रीं क्लीं उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं मम। पशूँश्च मह्यमावह जीवनं च दिशो दिश। मानो हिँसीर्जातवेदो गामश्वं पुरुषं जगत्। अबिभ्रदग्न आगहि श्रिया मा परिपातय ॥

३ श्रीसिद्धलक्ष्मीसहित श्रीमहागणपतये नमः, दीपं दर्शयामि। दीपानन्तरं आचमनीयं समर्पयामि ॥

ततः—दन्त-पाश-अङ्कुश-विघ्न-परशु लड्डुक बीजापूराख्याः सप्तमुद्राः प्रदर्शयेत् ॥

## ॥ नैवेद्यम् ॥

श्रीदेवाग्रे, चतुरस्रमण्डलं, सामान्यार्घ्योदकेन विधाय, तत्र आधारोपरि स्थापितं, सौवर्ण - रौप्य - कांस्यादि - स्थाली - चषकभरितं भक्ष्य-भोज्य-चोष्यलेह्यपेयात्मकं रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमधु यथा-सम्भवं वा नैवेद्यं निधाय मूलेन निरीक्ष्य—

श्रीं ह्रीं क्लीं ऐं ह्रः—इति अस्त्रेण प्रोक्ष्य—

३ ॐ जुं सः वौषट्-इति सप्तवारमभिमन्त्रितजलेन प्रोक्ष्य—

३ चक्रमुद्रां प्रदर्श्य—

३ यं—इति वायुबीजेनाधोमुखवामकरेण सप्तवारम् जपन् तद्गतदोषान् संशोष्य—

३ रं—इति वह्निबीजेन अधोमुखदक्षकरेण सन्दह्य—

३ वं—इति धेनुमुद्रया अमृतीकृत्य—

३ मूलेन विशेषार्घ्यबिन्दुभिः प्रोक्ष्य—

३ मूलेन सप्तवारमभिमन्त्र्य—

३ ॐ क्लीं कामदुघे अमोघे वरदे विच्चे स्फुरस्फुर श्रीं परश्रीं, इति कामधेनुविद्यया धेनुमुद्रयाऽमृतीकृत्य, देवस्य पाद्यं अर्घ्यं आचमनीयं च दत्वा—

३ मूलेन देवं त्रिः सन्तर्प्य—

पात्रान्तरे विशेषार्घ्यं किञ्चित् गृहीत्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन्—

३ 'मूलं' साङ्गाय सपरिवाराय सशक्तये श्रीसिद्धलक्ष्मीसहित—श्रीमहागणपतये नैवेद्यं कल्पयामि नमः—इति नैवेद्यपरिसरे संस्थाप्य। कृताञ्जलिः—

३ हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्।
पञ्चधा षड्रसोपेतं गृहाण परमेश्वर॥
शर्करापायसापूपघृतव्यञ्जनसंयुतम्।
विचित्ररुचि नैवेद्यं हृद्यमावेदयाम्यहम्॥ इति निवेद्य—

ॐ भूर्भुवस्वः+परिषिञ्चामि। अमृतोपस्तरणमसि—इति देवतायै आपोशनं दत्वा—वामकरेण ग्रासमुद्रां प्रदर्श्य, दक्षकरेण प्राणादिपञ्चमुद्रा-प्रदर्शनपूर्वकं पञ्चप्राणाहुतीः कल्पयेत्। यथा—

श्रीं ह्रीं क्लीं प्राणाय स्वाहा॥ श्रीं ह्रीं क्लीं उदानाय स्वाहा॥
३ अपानाय स्वाहा॥ ३ समानाय स्वाहा॥
३ व्यानाय स्वाहा॥ ३ ब्रह्मणे स्वाहा॥

श्रीं ह्रीं क्लीं ॐ गं आत्मतत्त्वव्यापकः श्रीसिद्धलक्ष्मीसहित—
श्रीमहागणपतिस्तृप्यतु

३ ॐ गं विद्यातत्त्वव्यापकः " "
३ ॐ गं शिवतत्त्वव्यापकः " "
३ ॐ गं सर्वतत्त्वव्यापकः " "

(इति किञ्चित्किञ्चित् सामान्यार्घ्योदकं दद्यात्)।

श्रीं ह्रीं क्लीं चित्पात्रे सद्धविस्सौख्यं विविधानेकभक्षणम् ।
निवेदयामि ते देव सानुगस्त्वं जुषाण तत् ॥

श्रीं ह्रीं क्लीं मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । मधुनक्तमुतोषसि मधुमत्पार्थिवँ रजः । मधुद्यौरस्तु नः पिता । मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः ।

(इति पुष्पाञ्जलिं विन्यस्य नैवेद्यजातं तादात्म्येन समर्पयेत्)

श्रीं ह्रीं क्लीं नमस्ते देवदेवेश सर्वतृप्तिकरं परम् ।
अन्यानिवेदितं शुद्धं प्रकृतिस्थं सुशीतलम् ॥
अमृतानन्दसम्पूर्णं गृहाण जलमुत्तमम् ॥

३ श्रीसिद्धलक्ष्मीसहित - श्रीमहागणपतये अमृतपानीयं समर्पयामि ॥

(देवं भुक्तवन्तं सुतृप्तं ध्यात्वा)

ॐ अमृतापिधानमसि । इत्युत्तरापोशनं दत्वा—

श्रीं ह्रीं क्लीं हस्तप्रक्षालनं, गण्डूषं, पादप्रक्षालनं, आचमनीयं कल्पयामि नमः ।

(ताम्रबलिपात्रे निवेदन-सामग्रीः किंचित्किंचिदादाय निवेदनपात्राणि निर्गमय्य तत्स्थलं अस्त्रेण शोधयेत्)

## ताम्बूलम्

श्रीं ह्रीं क्लीं वनस्पतिदैवत्याय ताम्बूलाय नमः । इति सामान्यार्घ्योदकेन प्रोक्ष्य—

श्रीं ह्रीं क्लीं तमालदलकर्पूरपूगभागसमन्वितम् ।
एलापत्रसुसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

३ श्रीसिद्धलक्ष्मीसहित-श्रीमहागणपतये ताम्बूलं कल्पयामि नमः ॥

## । कुलदीपः ।

३ 'मूलं'—अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।
त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ॥

## कर्पूरनीराजनम्

श्रीं ह्रीं क्लीं सोमो वा एतस्य राज्यमादत्ते। यो राजा सम्राज्यो वा सोमेन यजते। देवसुवामेतानि हवींषि भवन्ति। एतावन्तो वै देवानाँ सवाः। त एवास्मै सवान् प्रयच्छन्ति। त एनं पुनः सुवन्ते राज्याय। देवसू राजा भवति॥

श्रीं ह्रीं क्लीं ॐ स्वस्ति साम्राज्यं भोज्यं स्वाराज्यं वैराज्यं पारमेष्ठिकं राज्यं महाराज्यमाधिपत्यम्। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति।

राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय–महाराजाय नमः॥ महागणपतये नमः कर्पूरनीराजनं दर्शयामि!

## मन्त्रपुष्पम्

योऽपां पुष्पं वेद। पुष्पवान् प्रजावान् पशुमान् भवति।
चन्द्रमा वा अपां पुष्पम्। पुष्पवान् पशुमान् भवति।
श्रीं ह्रीं क्लीं ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धिमही।
तन्नो दन्तिः प्रचोदयात्॥

श्रीं ह्रीं क्लीं नमो नरगजाकृते नलिनवर्णदेहाकृते
नरासुरेडित–श्रुतिशिरोद्यदङ्घ्रिद्वय।
नगेश्वरवरात्मजानयनपद्मभानो नमः
नतार्तिहरणाङ्घ्रियुक् कलित एष पुष्पाञ्जलिः॥

श्रीं ह्रीं क्लीं श्रीसिद्धलक्ष्मीसहित–श्रीमहागणपतये नमः पुष्पाञ्जलिं समर्पयामि॥

## तान्त्रिकनित्यहोमविधि

साधकः स्वस्तिपद्मं विरच्य तस्मिन् गणेशं साङ्गं सावरणं षोडषोपचारैः सम्पूज्य तदुत्तरतः लौकिकाग्निम् प्रतिष्ठाप्य। तस्मिन्नग्नौ साङ्गं सावरणं

गणपतिं सम्पूज्य अष्टद्रव्यैः मध्वाज्यमिश्रितैः ग्रासमितैः त्रिसंख्यं पञ्चसंख्यं वा हुनेत्। संभृताष्टद्रव्यं त्रिधा कृत्वा एकमंशं निवेदयेत्—द्वावंशौ जुहुयात्। ततः जपं कृत्वा गणपत्युपनिषदादिभिः स्तुवीत। पुनः पञ्चोपचारान् उपचर्य, नीराजनं प्रदक्षिणनमस्कारादि कृत्वा। अग्नेः स्वस्तिपद्मादपि गणपतिं उद्वासयेत्। अष्टद्रव्यालाभे तु नारिकेलेन मध्वाज्यगुडमिश्रितेन यथासम्भवद्रव्येण जुहुयात्। इति नित्यहोमविधिः।

विस्तरे तु गुरुपदिष्टमार्गेण चतुष्पात्रप्रयोगेणापि होमः कर्तव्यः। तस्मिन् प्रयोगे अग्निमुखानन्तरं, अग्नौ गणपतिमावाह्य पञ्चोपचारं कृत्वा गणपतिमूलमन्त्रेण प्रधानाहुतिं दत्वा दशवारं मूलमन्त्रेण-अङ्गावरणदेवतानां एकैकामाज्याहुतिं जुहुयात्। ततो होमशेषः॥ स्वस्वशाखोक्तविधिना अग्निप्रतिष्ठापनं कुर्यात्॥

## बलिदानम्

देवतादक्षभागे सामान्यार्घ्योदकेन वृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य श्रीं ह्रीं क्लीं ऐं व्यापकमण्डलाय नमः। इति गन्धाक्षतैरभ्यर्च्य अर्धभक्तपूरितोदकं सक्षीरादित्रयं बलिपात्रं तत्र विन्यस्य—

श्रीं ह्रीं क्लीं ॐ गां गीं गूं गैं गौं गः महागणपतये वरवरद सर्वजनं मे वशमानय सर्वोपचारसहितं इमं बलिं गृह्ण गृह्ण स्वाहा। इत्युच्चरन्। बलिपात्रे सामान्यार्घ्योदकं विसृजेत्। ततः पादौ प्रक्षाल्य आचम्य त्रिः प्रदक्षिणनमस्कारान् कृत्वा यथाशक्ति मूलमन्त्रजपमाचरेत्। उत्तराङ्गं विधाय—

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादान्मयि स्थिरा॥

(इति देवस्य हस्ते जपं समर्पयेत्)॥

## गणेशाष्टकम्

विनायकैकभावनासमर्चनासमर्पितं,
प्रमोदकैः प्रमोदकैः प्रमोदमोदमोदकम्।
यदर्पितं समर्पितं नवन्यधान्यनिर्मितं,
न खण्डितं न खण्डितं न खण्डमण्डनं कृतम्॥१॥

सजातिकृद्विजातिकृत्स्वनिष्ठभेदवर्जितं
निरञ्जनं च निर्गुणं निराकृतिं च निष्क्रियम् ।
सदात्मकं चिदात्मकं सुखात्मकं परं पदं
भजामि तं गजाननं स्वमाययाऽऽत्तविग्रहम् ॥२॥

गणाधिप त्वमष्टमूर्तिरीशसूनुरीश्वरः
त्वमम्बरं च शम्बरं धनञ्जयः प्रभञ्जनः ।
त्वमेव दीक्षितः क्षितिर्निशाकरः प्रभाकरः
चराचरप्रचारहेतुरन्तरायशान्तिकृत् ॥३॥

अनेकदं तमालनीलमेकदन्तसुन्दरं
गजाननं नुमो गजाननामृताब्धिमन्दिरम् ।
समस्तवेदवादसत्कलाकलापमन्दिरं
महान्तरायदुस्तमश्शमार्कमाश्रितोदरम् ॥४॥

सरत्नहेमघण्टिकानिनादनूपुरस्वनैः
मृदङ्गतालनादभेदसाधनानुरूपतः ।
धिमिद्धिमित्ततोऽङ्गतोङ्ग थेयिथेयिशब्दतो-
विनायकश्शशाङ्कशेखराग्रतः प्रनृत्यति ॥५॥

नमामि नाकनायकैकनायकं विनायकं
कलाकलापकल्पनानिदानमादिपूरुषम् ।
गणेश्वरं गुणेश्वरं महेश्वरात्मसम्भवं
स्वपादमूलसेविनामपारवैभवप्रदम् ॥६॥

भजे प्रचण्डतुन्दिलं सदन्तशूकभूषणं
सनन्दनादिवन्दितं समस्तसिद्धसेवितम् ।
सुरासुरौघयोस्तदा जयप्रदं भयप्रदं
समस्तविघ्नघातिनं स्वभक्तपक्षपातिनम् ॥७॥

कराम्बुजात्तकङ्कणःपदाब्जकिङ्किणिगणो-
गणेश्वरो गुणार्णवः फणीश्वराङ्गभूषणः ।
जगत्त्रयान्तरायशान्तिकारकोस्तुतारको-
भवार्णवादनेकदुर्गृहाच्चिदेकविग्रहः ॥८॥
यो भक्तिप्रवणः परावरगुरोस्स्तोत्रं गणेशाष्टकं
शुद्धस्संयतचेतसा यदि पठेन्नित्यं त्रिसन्ध्यं पुमान् ।
तस्य श्रीरतुला स्वसिद्धिसहिता श्रीशारदा सारदा
स्यातां तत्परिचारिके किल तदा काः कामनानां कथाः ॥

## सुवासिनीपूजा

श्रीं ह्रीं क्लीं प्राङ्निमन्त्रितां सुवासिनीमाहूय तां देवीरूपां विभाव्य ३ ऐं क्लीं सौः सुवासिन्यै-अर्घ्यं कल्पयामि नमः । इत्यादिरीत्या अर्घ्यं-आचमन-स्नान-गन्ध-हरिद्राकुङ्कुम-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात् । (सति विभवे वसनादीनि च) ॥

## बटुकपूजा

श्रीं ह्रीं क्लीं प्राङ्निमन्त्रितबटुकममाहूय तं गणपतिरूपं विभाव्य, ३ वं वटुकाय अर्घ्यं कल्पयामि नमः । इत्यादिरीत्या, अर्घ्य-आचमन-स्नान वस्त्र-यज्ञोपवीत-गन्ध-पुष्प-धूप-दीप-नैवेद्य-ताम्बूलानि दद्यात् ॥

## सामयिकपूजा

ततः संनिहिते गुरौ गुरुं नत्वा गन्धकुङ्कुमादिभिरुपचर्य, गुरुपादुकामन्त्रेण अभिपूज्य पात्राणि समर्पयेत् । असन्निहिते गुरौ स्वशिरसि गुरुत्रयं यजेत् । ततः सन्निहितान् सामयिकानाहूय गन्धकुङ्कुमादिभिरुपचर्य पात्राणि दद्यात् । पश्चात् तत्त्वशोधनं कुर्यात् । सामयिकाश्च पात्रमादाय समस्तप्रकटेत्यादि-

समष्टिमन्त्रेण पुष्पाञ्जलिं दत्वा स्वशिरसि गुरुत्रयं, हृदये आत्मचतुष्टयं च इष्ट्वा देवं सन्तर्प्य तत्वशोधनं यथोपदिष्टं कुर्युः ॥

## तत्त्वशोधनं

श्रीं ह्रीं क्लीं ॐ गं आत्मतत्त्वं शोधयामि स्वाहा ॥

३ ,, ,, विद्यातत्त्वं ,, ,, ॥

३ ,, ,, शिवतत्त्वं ,, ,, ॥

३ ,, ,, सर्वतत्त्वं ,, ,, ॥

## पूजासमर्पण-देवतोद्वासने

श्रीं ह्रीं क्लीं साधु वाऽसाधु वा कर्म यद्यदाचरितं मया ।
तत्सर्वं कृपया देव गृहाणाराधनं मम ॥

३ देवनाथगुरोस्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥

इति देवतादक्षिणहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देवतोपरि त्रिः परिभ्राम्य, तज्जलं हस्ते समादाय सामयिकानात्मानं च मूलेन प्रोक्ष्य शङ्खं प्रक्षाल्य निदध्यात् । ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

श्रीं ह्रीं क्लीं ज्ञानतोऽज्ञानतो वापि यन्मयाचरितं विभो ।
तवकृत्यमिति ज्ञात्वा क्षमस्व परमेश्वर ॥

इति क्षमाप्य, सर्वासामावरणदेवतानां देवताङ्गे विलयं विभाव्य खेचरीं बद्ध्वा—

श्रीं ह्रीं क्लीं हृत्पद्मकर्णिकामध्ये शक्त्या सह गजानन ॥
प्रविश त्वं गणेशान सर्वैरावरणैः सह ॥

इति तेजोरूपेण परिणतं देवं पूर्ववत् हृदयं नित्त्वा, तत्र च मूर्तिं पञ्चोपचारैः सम्पूज्य पुनः आत्माभिन्नसंविद्रूपेण भावयेत् ॥

## शान्तिस्तवः

सम्पूजकानां परिपालकानां यतेन्द्रियाणां च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः ॥
नन्दन्तु साधककुलान्यणिमाऽऽदिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥

इत्यादिशान्तिश्लोकान् पठित्वा—

## विशेषार्घ्योद्वासनम्

मूलेन विशेषार्घ्यपात्रं आमस्तकमुद्धृत्य तत्क्षीरं पात्रान्तरेण-आदाय आर्द्रं ज्वलति इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयमपि भुक्त्वा यथासुखं विहरेत् ॥

॥ इति शिवम् ॥

---

## श्रीगणेशपञ्चरत्नस्तोत्रम्

मुदाकरात्तमोदकं सदाविमुक्तिसाधकम् ॥
कलाधरावतंसकं विलासिलोकरक्षकम् ॥
अनायकैकनायकं विनाशितेभदैत्यकम् ॥
नताशुभाशुनाशकं नमामि तं विनायकम् ॥ १
नतेतरातिभीकरं नवोदितार्कभास्वरम् ॥
नमत्सुरारिनिर्जरं नताधिकापदुद्धरम् ॥
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं ॥
महेश्वरं तमाश्रये परात्परं निरन्तरम् ॥ २

समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरम् ॥
दरेतरोदरं वरं वरेभवक्त्रमक्षरम् ॥
कृपाकरं क्षमाकरं मुदाकरं यशस्करम् ॥
मनस्करं नमस्कृतां नमस्करोमि भास्वरम् ॥ ३
अकिञ्चनार्तिमार्जनं चिरन्तनोक्तिभाजनम् ॥
पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम् ॥
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणम् ॥
कपोलदानवारिणं भजे पुराणवारणम् ॥ ४
अचिन्त्यरूपमन्तहीनमन्तरायकृन्तनं ॥
नितान्तकान्तिदन्तकान्तमन्तकान्तकात्मजम् ॥
हृदन्तरे निरन्तरं वसन्तमेव योगिनां ॥
तमेकदन्तमेव संविचिन्तयामि सन्ततम् ॥ ५
महागणेशपञ्चरत्नमादरेण योऽन्वहम् ॥
प्रजल्पति प्रदोषके हृदि स्मरन् गणेश्वरम् ॥
अरोगतामदोषतां सुसाहितीं सुपुत्रताम् ॥
समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात् ॥ ६

---

## अथ गणपत्यथर्वशीर्षम्

श्रीगणेशाय नमः ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवाः ॥ भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेम हि देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्तिनो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ अथ गणेशाथर्वशीर्षव्याख्यास्यामः ॥

ॐ नमस्तेगणपतये ॥ त्वमेवप्रत्यक्षं तत्त्वमसि ॥ त्वमेवकेवलं कर्त्तासि ॥ त्वमेवकेवलं धर्तासि ॥ त्वमेवकेवलं हर्तासि ॥ त्वमेवसर्वं खल्विदंब्रह्मासि ॥ त्वंसाक्षादात्मासि नित्यं ॥ ऋतंवच्मि ॥ सत्यंवच्मि ॥ अवत्वंमां ॥ अववक्तारं॥ अवश्रोतारं॥ अवदातारं॥ अवधातारं॥ अवानूचानमवशिष्यं॥ अवपश्चात्तात् ॥ अवपुरस्तात् ॥ अवोत्तरातात् ॥ अवदक्षिणातात् ॥ अवचोर्ध्वातात् ॥ अवाधरातात् ॥ सर्वतोमांपाहिपाहिसमंतात् ॥ त्वंवाङ्मयस्त्वंचिन्मयः ॥ त्वमानन्दमयस्त्वं ब्रह्ममयः ॥ त्वंसच्चिदानन्दाद्वितीयोसि॥ त्वंप्रत्यक्षंब्रह्मासि ॥ त्वंज्ञानमयोविज्ञानमयोसि ॥ सर्वजगदिदंत्वत्तोजायते ॥ सर्वंजगदिदंत्वत्तस्तिष्ठति ॥ सर्वंजगदिदंत्वयिलयमेष्यति ॥ सर्वजगदिदंत्वयिप्रत्येति ॥ त्वंभूमिरापोऽनिलोऽनलोनभः ॥ त्वंचत्वारिवाक्पदानि ॥ त्वंगुणत्रयातीतः ॥ त्वंकालत्रयातीतः ॥ त्वंदेहत्रयातीतः ॥ त्वंमूलाधारस्थितोऽसिनित्यं ॥ त्वंशक्तित्रयात्मकः ॥ त्वांयोगिनोध्यायन्तिनित्यं ॥ त्वंब्रह्मात्वंविष्णुस्त्वंरुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वंवायुस्त्वंसूर्यस्त्वंचंद्रमास्त्वं ब्रह्मभूर्भुवःस्वरोम् ॥ गणादीन् ॥ पूर्वमुच्चार्य वर्णादींस्तदनन्तरं ॥ अनुस्वारः परतरः ॥ अर्धेन्दुलसितं ॥ तारेणरुद्धं ॥ एतत्तवमनुस्वरूपं ॥ गकारः पूर्वरूपं ॥ अकारोमध्यमरूपं ॥ अनुस्वारश्चांत्यरूपं बिंदुरुत्तररूपं ॥ नादः सन्धानं ॥ संहितासन्धिः ॥ सैषागणेशविद्या ॥ गणकऋषिः ॥ निचृद्गायत्रीछन्दः ॥ गणपतिर्देवता ॥ ॐ गं गणपतये नमः ॥

ॐ एकदन्तायविद्महे वक्रतुण्डायधीमहि ॥ तन्नो दन्तिः प्रचोदयात् ॥ एकदन्तञ्चतुर्हस्तंपाशमङ्कुशधारिणम् ॥ रदंचवरदंहस्तैर्विभ्राणं मूषकध्वजम् ॥ रक्तंलंवोदरंशूर्पकर्णकंरक्तवाससं ॥ रक्तगंधानुलिप्ताङ्गंरक्तपुष्पैः सुपूजितम् ॥ भक्तानुकंपिनंदेवंजगत्कारणमच्युतं ॥ आविर्भूतञ्चसृष्ट्यादौप्रकृतेः पुरुषात्परं ॥ एवं ध्यायति यो नित्यं स योगीयोगिनाम्वरः ॥ नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्ते अस्तु लम्बोदरायैकदन्तायविघ्नाशिनेशिवसुतायश्रीवरदमूर्तयेनमः ॥ एतदथर्वशीर्षंयोऽधीते ॥ सब्रह्मभूयायकल्पते ॥ ससर्वतः सुखमेधते ॥ ससर्वविघ्नैर्नबाध्यते ॥ सपञ्चमहापापात्प्रमुच्यते ॥ सायमधी-

यानोदिवसकृतंपापंनाशयति ॥ प्रातरधीयानोरात्रिकृतंपापंनाशयति ॥ सायंप्रातः प्रयुञ्जानोऽपापोभवति ॥

सर्वत्राधीयानोऽपविघ्नोभवति ॥ धर्मार्थकाममोक्षंचविंदति ॥ इदमथर्वशीर्षमशिष्यायनदेयं ॥ योयदिमोहाद्दास्यति ॥ सपापीयान् भवति ॥ सहस्रावर्तनात् यंयंकाममधीते ॥ तं तमनेनसाधयेत् ॥ अनेनगणपतिमभिषिञ्चति ॥ सवाग्मीभवति ॥ चतुर्थ्यामनश्नन् जपति ॥ सविद्यावान् भवति ॥ इत्यथर्वणवाक्यं ॥ ब्रह्माद्याचरणंविद्यात् ॥ नबिभेतिकदाचनेति ॥ योदूर्वांकुरैर्यजति ॥ सवैश्रवणोपमोभवति ॥ योलाजैर्यजति ॥ सयशोवान्भवति ॥ समेधावान्भवति ॥ योमोदकसहस्रेणयजति ॥ सवांछितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति ॥ ससर्वंलभते ससर्वंलभते ॥ अष्टौब्राह्मणान् सम्यग्ग्राहयित्वा ॥ सूर्यवर्चस्वीभवति ॥ सूर्यग्रहेमहानद्यांप्रतिमासन्निधौवाजप्त्वा ॥ सिद्धमन्त्रो भवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते ॥ महापापात्प्रमुच्यते ॥ ससर्वविद्भवतिससर्वविद्भवति ॥ यएवंवेद ॥ इत्युपनिषत् ॥ ॐ भद्रंकर्णेभिः० ॥ १ ॥ स्वतिनइन्द्रो० ॥ १ ॥

॥ इति गणपत्यथर्वशीर्षं समाप्तम् ॥

## पुरश्चरणविधिः

एवं नित्यक्रमं प्रवर्तयन् श्यामाक्रमे वक्ष्यमाणेन विधिना अष्टाविंशतिसहस्रसंख्या पुरश्चरणजपः। प्रकृते कलियुगत्वाच्चतुर्गुणितम्। प्रथमेऽह्निसहस्रम्। ततः प्रत्यहं सहस्रसंख्यञ्च कृत्वा जपदशांशेन होमः। दद्दशांशेन तर्पणम्, तद्दशांशेन ब्राह्मणभोजनानि च विदध्यात्।

होमे द्रव्याणि

मोदकैः पृथुकैर्लाजैः सक्तुभिश्चेक्षुपर्वभिः।
नारिकेलैस्तिलैश्शुद्धैस्सुपक्वैः कदलीफलैः॥

इत्युक्तान्यष्टौ, एतेषां प्रमाणन्तु—

मोदकाः-अखण्डिताः ग्रासमिताः, पृथुकलाजसक्तवो मुष्टिपरिमिताः। इक्षुप्रमाणं श्लोक एवोक्तम्। नारिकेलम् अष्टधा खण्डितम्। तिलाःचुलुकप्रमाणाः शतसंख्याकाः वा। कदली फलमल्पम् यद्यखण्डितम् पृथु चेद्यथारूचि खण्डितम्। अमीषां द्रव्याणां मधुक्षीरघृतसिक्तानां पृथक् पृथगाहुतयो होमसंख्या पिण्डाष्टमभागमिताः ३५० श्लोकपाठक्रमेण भवन्ति। अष्टद्रव्यहोमात् प्रागावरणदेवतानामेकैकाहुतिः प्रधानदेवतायैश्च दशाहुतयः ताआज्येनैव भवन्ति। तर्पणपूर्वाङ्गन्तु चतुरावृतितर्पणवदेव। इत्थं पुरश्चरणेन सिद्धमनुः, स्वातन्त्र्येणोपस्तौ च श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः काम्यापेक्षी चेत् श्यामा क्रमे वक्ष्यमाणेन तत्तत्कामानुगुणेन द्रव्येणेष्ट्वा सिद्धसङ्कल्पः सुखी विहरेत्, इति शिवम्।

अस्य श्रीमहागणपति-सहस्रनाम-स्तोत्रमन्त्रस्य महागणपतये-ऋषये नमः शिरसि अनुष्टुप्छन्दसे नमः मुखे श्रीमहागणपति-देवतायैः नमः हृदये गं बीजाय नमः गुह्ये, हुं शक्तये नमः पादयोः, स्वाहा कीलकाय नमः नाभौ, महागणपतिप्रसाद सिद्धये जपे विनियोगाय नमः करसम्पुटे।

| | | |
|---|---|---|
| ॐ गां | अङ्गुष्ठाभ्यां नमः, | हृदयाय नमः |
| ॐ गीं | तर्जनीभ्यां नमः, | शिरसे स्वाहा |
| ॐ गूं | मध्यमाभ्यां नमः, | शिखायै वषट् |
| ॐ गैं | अनामिकाभ्यां नमः, | कवचाय हुम् |
| ॐ गौं | कनिष्ठिकाभ्यां नमः, | नेत्रत्रयाय वौषट् |
| ॐ गः | करतलकरपृष्ठाभ्यां नमः, | अस्त्राय फट् |

वीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल।
व्रीह्यग्रस्वविषाणरत्नकलश — प्रोद्यत्कराम्भोरुहः॥
ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया।
विश्वोत्पत्ति-विपत्ति-संस्थितिकरो विघ्नेश इष्टार्थदः॥

॥ श्रीः ॥

# श्रीमहागणपतिसहस्रनामावलिः

गं गणेश्वराय नमः
गणक्रीडाय
गणनाथाय
गणाधिपाय
एकदंष्ट्राय
वक्रतुण्डाय
गजवक्त्राय
महोदराय
लम्बोदराय
धूम्रवर्णाय १०
विकटाय
विघ्ननायकाय
सुमुखाय
दुर्मुखाय
वुद्धाय
विघ्नराजाय
गजाननाय
भीमाय
प्रमोदाय
आमोदाय २०
सुरानन्दाय
मदोत्कटाय
हेरम्बाय
शम्बराय
गं शम्भवे नमः
लम्बकर्णाय
महाबलाय
नन्दनाय
अलम्पटाय
अभीरवे ३०
मेघनादाय
गणञ्जयाय
विनायकाय
विरूपाक्षाय
धीरशूराय
वरप्रदाय
महागणपतये
बुद्धिप्रियाय
क्षिप्रप्रसादनाय
रुद्रप्रियाय ४०
गणाध्यक्षाय
उमापुत्राय
अघनाशनाय
कुमारगुरवे
ईशानपुत्राय
मूषकवाहनाय
सिद्धिप्रियाय
सिद्धिपतये

गं सिद्धाय नमः
सिद्धिविनायकाय ५०
अविघ्नाय
तुम्बुरवे
सिंहवाहनाय
मोहिनीप्रियाय
कटङ्कटाय
राजपुत्राय
शालकाय
सम्मिताय
अमिताय
कूश्माण्डसामसम्भूतये ६०
दुर्जयाय
धूर्जयाय
जयाय
भूपतये
भुवनपतये
भूतानां-पतये
अव्ययाय
विश्वकर्त्रे
विश्वमुखाय
विश्वरूपाय ७०
निधये
घृणये
कवये
कवीनामृषभाय

गं ब्रह्मण्याय नमः
ब्रह्मणस्पतये
ज्येष्ठराजाय
निधिपतये
निधिप्रियपतिप्रियाय
हिरण्मयपुरान्तःस्थाय ८०
सूर्यमण्डलमध्यगाय
कराहतिध्वस्तसिन्धुसलिलाय
पूषदन्तभिदे
उमाङ्ककेलिकुतुकिने
मुक्तिदाय
कुलपालनाय
किरीटिने
कुण्डलिने
हारिणे
वनमालिने ९०
मनोमयाय
वैमुख्यहतदैत्यश्रिये
पादाहतिजितक्षितये
सद्योजातस्वर्णमुञ्जमेखलिने
दुर्निमित्तहृते
दुस्स्वप्नहृते
प्रसहनाय
गुणिने
नादप्रतिष्ठिताय
सुरूपाय १००

गं सर्वनेत्राधिवासाय नमः
वीरासनाश्रयाय
पीताम्बराय
खण्डरदाय
खण्डेन्दुकृतशेखराय
चित्राङ्कश्यामदशनाय
भालचन्द्राय
चतुर्भुजाय
योगाधिपाय
तारकस्थाय ११०
पुरुषाय
गजकर्णकाय
गणाधिराजाय
विजयस्थिराय
गजपतिध्वजिने
देवदेवाय
स्मरप्राणदीपकाय
वायुकीलकाय
विपश्चिद्वरदाय
नादोन्नादभिन्नवलाह-
काय १२०
वराहरदनाय
मृत्युञ्जयाय
व्याघ्राजिनाम्बराय
इच्छाशक्तिधराय
देवत्रात्रे

गं दैत्यविमर्दनाय नमः
शम्भुवक्त्रोद्भवाय
शम्भुकोपघ्ने
शम्भुहास्यभुवे
शम्भुतेजसे १३०
शिवाशोकहारिणे
गौरीसुखावहाय
उमाङ्गमलजाय
गौरीतेजोभुवे
स्वर्धुनीभवाय
यज्ञकायाय
महानादाय
गिरिवर्ष्मणे
शुभाननाय
सर्वात्मने १४०
सर्वदेवात्मने
ब्रह्ममूर्ध्ने
ककुप्छ्रुतये
ब्रह्माण्डकुम्भाय
चिद्व्योमभालाय
सत्यशिरोरुहाय
जगज्जन्मलयोन्मेषनिमेषाय
अग्न्यर्कसोमदृशे
गिरीन्द्रैकरदाय
धर्माधर्मोष्ठाय १५०
सामबृंहिताय

गं ग्रहर्क्षदशनाय नमः
वाणीजिह्वाय
वासवनासिकाय
कुलाचलांसाय
सोमार्कघण्टाय
रुद्रशिरोधराय
नदीनदभुजाय
सर्पाङ्गुलीकाय
तारकानखाय १६०
भ्रूमध्यसंस्थितकराय
ब्रह्मविद्यामदोत्कटाय
व्योमनाभये
श्रीहृदयाय
मेरुपृष्ठाय
अर्णवोदराय
कुक्षिस्थयक्षगन्धर्वरक्षः-
किन्नरमानुषाय
पृथ्वीकटये
सृष्टिलिङ्गाय
शैलोरवे १७०
दस्रजानुकाय
पातालजङ्घाय
मुनिपदे
कालाङ्गुष्ठाय
त्रयीतनवे
ज्योतिर्मण्डललाङ्गूलाय

गं हृदयालाननिश्चलाय नमः
हृत्पद्मकर्णिकाशालि-
वियत्केलिसरोवराय
सद्भक्तध्याननिगडाय
पूजावारीनिवारिताय १८०
प्रतापिने
कश्यपसुताय
गणपाय
विष्टपिने
बलिने
यशस्विने
धार्मिकाय
स्वोजसे
प्रथमाय
प्रथमेश्वराय १९०
चिन्तामणिद्वीपपतये
कल्पद्रुमवनालयाय
रत्नमण्डपमध्यस्थाय
रत्नसिंहासनाश्रयाय
तीव्राशिरोधृतपदाय
ज्वालिनीमौलिलालिताय
नन्दानन्दितपीठश्रिये
भोगदाभूषितासनाय
सकामदायिनीपीठाय
स्फुरदुग्रासनाश्रयाय २००
तेजोवतीशिरोरत्नाय

गं सत्यानित्यावतंसिताय नमः
सविघ्ननाशिनीपीठाय
सर्वशक्त्यम्बुजाश्रयाय
लिपिपद्मासनाधाराय
वह्निधामत्रयाश्रयाय
उन्नतप्रप्रदाय
गूढगुल्फाय
संवृत्तपार्ष्णिकाय
पीनजङ्घाय २१०
श्लिष्टजानवे
स्थूलोरवे
प्रोन्नमत्कटये
निम्ननाभये
स्थूलकुक्षये
पीनवक्षसे
बृहद्भुजाय
पीनस्कन्धाय
कम्बुकण्ठाय
लम्बोष्ठाय २२०
लम्बनासिकाय
भग्नवामरदाय
तुङ्गाय सव्यदन्ताय
महाहनवे
ह्रस्वनेत्रत्रयाय
शूर्पकर्णाय
निबिडमस्तकाय

गं स्तवकाकारकुम्भाग्राय नमः
रत्नमौल्ये
निरङ्कुशाय २३०
सर्पहारकटीसूत्राय
सर्पयज्ञोपवीतवते
सर्पकोटीरकटकाय
सर्पग्रैवेयकाङ्गदाय
सर्पकक्ष्योदराबन्धाय
सर्पराजोत्तरीयकाय
रक्ताय
रक्ताम्बरधराय
रक्तमाल्यविभूषणाय
रक्तेक्षणाय २४०
रक्तकराय
रक्तताल्वोष्ठपल्लवाय
श्वेताय
श्वेताम्बरधराय
श्वेतमाल्यविभूणाय
श्वेतातपत्ररुचिराय
श्वेतचामरवीजिताय
सर्वावयवसम्पूर्णसर्वलक्षण-
लक्षिताय
सर्वाभरणशोभाढ्याय
सर्वशोभासमन्विताय २५०
सर्वमङ्गलमाङ्गल्याय
सर्वकारणकारणाय

गं सर्वदैककराय नमः
शार्ङ्गिणे
बीजापूरिणे
गदाधराय
इक्षुचापधराय
शूलिने
चक्रपाणये
सरोजभृते २६०
पाशिने
घृतोत्पलाय
शालीमञ्जरीभृते
स्वदन्तभृते
कल्पवल्लीधराय
विश्वाभयदैककराय
वशिने
अक्षमालाधराय
ज्ञानमुद्रावते
मुद्गरायुधाय २७०
पूर्णपात्रिणे
कम्बुधराय
विधृतालिसमुद्गकाय
मातुलिङ्गधराय
चूतकलिकाभृते
कुठारवते
पुष्करस्थस्वर्णघटीपूर्णरत्नाभिवर्षकाय

गं भारतीसुन्दरीनाथाय नमः
विनायकरतिप्रियाय
महालक्ष्मीप्रियतमाय २८०
सिद्धलक्ष्मीमनोरमाय
रमारमेशपूर्वाङ्गाय
दक्षिणोमामहेश्वराय
महीवराहवामाङ्गाय
रतिकन्दर्पपश्चिमाय
आमोदमोदजननाय
सप्रमोदप्रमोदनाय
समेधितसमृद्धश्रिये
ऋद्धिसिद्धिप्रवर्तकाय
दत्तसौमुख्यसुमुखाय २९०
कान्तिकन्दलिताश्रयाय
मदनावत्याश्रिताङ्घ्रये
कृत्तदौर्मुख्यदुर्मुखाय
विघ्नसम्पल्लवोपघ्नसेवाय
उन्निद्रमदद्रवाय
विघ्नकृन्निघ्नचरणाय
द्राविणीशक्तिसत्कृताय
तीव्राप्रसन्ननयनाय
ज्वालिनीपालितैकदृशे
मोहिनीमोहनाय ३००
भोगदायिनीकान्तिमण्डिताय
कामिनीकान्तवक्त्रश्रिये
अधिष्ठितवसुन्धराय

गं वसुन्धरामदोन्नद्धमहाशङ्ख-
निधिप्रभवे नमः
नमद्वसुमतीमौलिमहापद्म-
निधिप्रभवे
सर्वसद्गुरुसंसेव्याय
शोचिष्केशहृदाश्रयाय
ईशानमूर्ध्ने
देवेन्द्रशिखाय
पवननन्दनाय ३१०
अग्रप्रत्यग्रनयनाय
दिव्यास्त्राणां प्रयोगविदे
ऐरावतादिसर्वाशावारणाव-
रणप्रियाय
वज्राद्यस्त्रपरीवाराय
गणचण्डसमाश्रयाय
जयाजयपरीवाराय
विजयाविजयावहाय
अजितार्चितपादाब्जाय
नित्यानित्यावतंसिताय
विलासिनीकृतोल्लासाय ३२०
शौंडीसौन्दर्यमण्डिताय
अनन्तानन्तसुखदाय
सुमङ्गलसुमङ्गलाय
इच्छाशक्तिज्ञानशक्तिक्रिया-
शक्तिनिषेविताय
सुभगासंश्रितपदाय

गं ललिताललिताश्रयाय नमः
कामिनीकामनाय
काममालिनीकेलिलालिताय
सरस्वत्याश्रयाय
गौरीनन्दनाय ३३०
श्रीनिकेतनाय
गुरुगुप्तपदाय
वाचासिद्धाय
वागीश्वरीपतये
नलिनीकामुकाय
वामारामाय
ज्येष्ठामनोरमाय
रौद्रीमुद्रितपादाब्जाय
हुंबीजाय
तुङ्गशक्तिकाय ३४०
विश्वादिजननत्राणाय
स्वाहाशक्तये
सकीलकाय
अमृताब्धिकृतावासाय
मदघूर्णितलोचनाय
उच्छिष्टगणाय
उच्छिष्टगणेशाय
गणनायकाय
सार्वकालिकसंसिद्धये
नित्यशैवाय ३५०
दिगम्बराय

गं अनपायाय नमः
अनन्तदृष्टये
अप्रमेयाय
अजरामराय
अनाविलाय
अप्रतिरथाय
अच्युताय
अमृताय
अक्षराय ३६०
अप्रतर्क्याय
अक्षयाय
अजय्याय
अनाधाराय
अनामयाय
अमलाय
अमोघसिद्धये
अद्वैताय
अघोराय
अप्रतिमाननाय ३७०
अनाकाराय
अब्धिभूम्यग्निवलघ्नाय
अव्यक्तलक्षणाय
आधारपीठाय
आधाराय
आधाराधेयवर्जिताय
आखुकेतनाय
गं आशापूरकाय नमः
आखुमहारथाय
इक्षुसागरमध्यस्थाय ३८०
इक्षुभक्षणलालसाय
इक्षुचापातिरेकश्रिये
इक्षुचापनिषेविताय
इन्द्रगोपसमानश्रिये
इन्द्रनीलसमद्युतये
इन्दीवरदलश्यामाय
इन्दुमण्डलनिर्मलाय
इध्मप्रियाय
इडाभागाय
इडाधाम्ने ३९०
इन्दिराप्रियाय
इक्ष्वाकुविघ्नविध्वंसिने
इतिकर्तव्यतेप्सिताय
ईशानमौलये
ईशानाय
ईशानसुताय
ईतिघ्ने
ईषणात्रयकल्पान्ताय
ईहामात्रविवर्जिताय
उपेन्द्राय ४००
उडुभृन्मौलये
उण्डेरकबलिप्रियाय
उन्नताननाय

गं उत्तुङ्गाय नमः
उदारत्रिदशाग्रगण्ये
ऊर्जस्वते
ऊष्मलमदाय
ऊहापोहदुरासदाय
ऋग्यजुस्सामसम्भूतये
ऋद्धिसिद्धिप्रवर्तकाय ४१०
ऋजुचित्तैकसुलभाय
ऋणत्रयविमोचकाय
स्वभक्तानां लुप्तविघ्नाय
सुरद्विषां लुप्तशक्तये
विमुखार्चानां लुप्तश्रिये
लूताविस्फोटनाशनाय
एकारपीठमध्यस्थाय
एकपादकृतासनाय
एजिताखिलदैत्यश्रिये
एधिताखिलसंश्रयाय ४२०
ऐश्वर्यनिधये
ऐश्वर्याय
ऐहिकामुष्मिकप्रदाय
ऐरम्मदसमोन्मेषाय
ऐरावतनिभाननाय
ओङ्कारवाच्याय
ओङ्काराय
ओजस्वते
ओषधिपतये

गं औदार्यनिधये नमः ४३०
औद्धात्यधुर्याय
औन्नत्यनिस्वनाय
सुरनागानामङ्कुशाय
सुरविद्विषामङ्कुशाय
अःसमस्तविसर्गान्तपदेषु-
परिकीर्तिताय
कमण्डलुधराय
कल्पाय
कपर्दिने
कलभाननाय
कर्मसाक्षिणे ४४०
कर्मकर्त्रे
कर्माकर्मफलप्रदाय
कदम्बगोलकाकाराय
कूष्माण्डगणनायकाय
कारुण्यदेहाय
कपिलाय
कथकाय
कटिसूत्रभृते
खर्वाय
खङ्गप्रियाय ४५०
खड्गखांतान्तस्थाय
खनिर्मलाय
खल्वाटशृङ्गनिलयाय
खट्वाङ्गिने

गं खदुरासदाय नमः
गुणाढ्याय
गहनाय
गस्थाय
गद्यपद्यसुधार्णवाय
गद्यगानप्रियाय ४६०
गर्जाय
गीतगीर्वाणपूर्वजाय
गुह्याचाररताय
गुह्याय
गुह्यागमनिरूपिताय
गुहाशयाय
गुहाब्धिस्थाय
गुरुगम्याय
गुरोर्गुरवे
घण्टाघर्घरिकामालिने ४७०
घटकुम्भाय
घटोदराय
चण्डाय
चण्डेश्वरसुहृदे
चण्डीशाय
चण्डविक्रमाय
चराचरपतये
चिन्तामणिचर्वणलालसाय
छन्दसे
छन्दोवपुषे ४८०

गं छन्दोदुर्लक्ष्याय नमः
छन्दविग्रहाय
जगद्योनये
जगत्साक्षिणे
जगदीशाय
जगन्मयाय
जपाय
जपपराय
जप्याय
जिह्वासिंहासनप्रभवे ४९०
झलज्झलोल्लसद्दान-
झङ्कारिभ्रमराकुलाय
टङ्कारस्फारसंरावाय
टङ्कारिमणिनूपुराय
ठद्वयीपल्लवान्तस्थसर्व-
मन्त्रैकसिद्धिदाय
डिण्डिमुण्डाय
डाकिनीशाय
डामराय
डिण्डिमप्रियाय
ढक्कानिनादमुदिताय
ढौकाय ५००
ढुण्ढिविनाकाय
तत्वानां परमाय तत्त्वाय
तत्त्वम्पदनिरूपिताय
तारकान्तरसंस्थानाय

गं तारकाय नमः
तारकान्तकाय
स्थाणवे
स्थाणुप्रियाय
स्थात्रे
स्थावराय जङ्गमाय जगते ५१०
दक्षयज्ञप्रमथनाय
दात्रे
दानवमोहनाय
दयावते
दिव्यविभवाय
दण्डभृते
दण्डनायकाय
दन्तप्रभिन्नाभ्रमालाय
दैत्यवारणदारणाय
दंष्ट्रालग्नद्विपघटाय ५२०
देवार्थनृगजाकृतये
धन्यधान्यपतये
धन्याय
धनदाय
धरणीधराय
ध्यानैकप्रकटाय
ध्येयाय
ध्यानाय
ध्यानपरायणाय
नन्दाय ५३०

गं नन्दिप्रियाय नमः
नादाय
नादमध्यप्रतिष्ठिताय
निष्कलाय
निर्मलाय
नित्याय
नित्यानित्याय
निरामयाय
परंव्योम्ने
परंधाम्ने ५४०
परमात्मने
परम्पदाय
परात्पराय
पशुपतये
पशुपाशविमोचकाय
पूर्णानन्दाय
परानन्दाय
पुराणपुरुषोत्तमाय
पद्मप्रसन्ननयनाय
प्रणताज्ञानमोचनाय ५५०
प्रमाणप्रत्ययातीताय
प्रणतार्तिनिवारणाय
फलहस्ताय
फणिपतये
फेत्काराय
फाणितप्रियाय

गं बाणार्चिताङ्घ्रियुगलाय नमः
बालकेलिकुतूहलिने
ब्रह्मणे
ब्रह्मार्चितपदाय ५६०
ब्रह्मचारिणे
बृहस्पतये
बृहत्तमाय
ब्रह्मपराय
ब्रह्मण्याय
ब्रह्मवित्प्रियाय
बृहन्नादाग्र्यचीत्काराय
ब्रह्माण्डावलिमेखलाय
भ्रूक्षेपदत्तलक्ष्मीकाय
भर्गाय ५७०
भद्राय
भयापहाय
भगवते
भक्तिसुलभाय
भूतिदाय
भूतिभूषणाय
भव्याय
भूतालयाय
भोगदात्रे
भ्रूमध्यगोचराय ५८०
मन्त्राय
मन्त्रपतये

गं मन्त्रिणे नमः
मदमत्तमनोरमाय
मेखलावते
मन्दगतये
मतिमत्कमलेक्षणाय
महाबलाय
महावीर्याय
महाप्राणाय ५९०
महामनसे
यज्ञाय
यज्ञपतये
यज्ञगोप्त्रे
यज्ञफलप्रदाय
यशस्कराय
योगगम्याय
याज्ञिकाय
याजकप्रियाय
रसाय ६००
रसप्रियाय
रस्याय
रञ्जकाय
रावणार्चिताय
रक्षोरक्षाकराय
रत्नगर्भाय
राज्यसुखप्रदाय
लक्ष्याय

गं लक्ष्यप्रदाय नमः
लक्ष्याय ६१०
लयस्थाय
लड्डुकप्रियाय
लानप्रियाय
लास्यपराय
लाभकृते
लोकविश्रुताय
वरेण्याय
वह्निवदनाय
वन्द्याय
वेदान्तगोचराय ६२०
विकर्त्रे
विश्वतश्चक्षुषे
विधात्रे
विश्वतोमुखाय
वामदेवाय
विश्वनेत्रे
वज्रिवज्रनिवारणाय
विश्वबन्धनविष्कम्भाधाराय
विश्वेश्वरप्रभवे
शब्दब्रह्मणे ६३०
शमप्राप्याय
शम्भुशक्तिगणेश्वराय
शास्त्रे
शिखाग्रनिलयाय
शरण्याय
शिखरीश्वराय
षड्ऋतुकुसुमस्रग्विणे
षडाधाराय
षडक्षराय
संसारवैद्याय ६४०
सर्वज्ञाय
सर्वभेषजभेषजाय
सृष्टिस्थितिलयक्रीडाय
सुरकुञ्जरभेदनाय
सिन्दूरितमहाकुम्भाय
सदसद्व्यक्तिदायकाय
साक्षिणे
समुद्रमथनाय
स्वसंवेद्याय
स्वदक्षिणाय ६५०
स्वतन्त्राय
सत्यसङ्कल्पाय
सामगानरताय
सुखिने
हंसाय
हस्तिपिशाचीशाय
हवनाय
हव्यकव्यभुजे
हव्याय
हुतप्रियाय ६६०

गं हर्षाय नमः
हृल्लेखामन्त्रमध्यगाय
क्षेत्राधिपाय
क्षमाभर्त्रे
क्षमापरपरायणाय
क्षिप्रक्षेमकराय
क्षेमानन्दाय
क्षोणीसुरद्रुमाय
धर्मप्रदाय
अर्थदाय ६७०
कामदात्रे
सौभाग्यवर्धनाय
विद्याप्रदाय
विभवदाय
भुक्तिमुक्तिफलप्रदाय
आभिरूप्यकराय
वीरश्रीप्रदाय
विजयप्रदाय
सर्ववश्यकराय
गर्भदोषघ्ने ६८०
पुत्रपौत्रदाय
मेधादाय
कीर्तिदाय
शोकहारिणे
दौर्भाग्यनाशनाय
प्रतिवादिमुखस्तम्भाय

गं रुष्टचित्तप्रसादनाय नमः
पराभिचारशमनाय
दुःखभञ्जनकारकाय
लवाय ६९०
त्रुटये
कलायै
काष्ठायै
निमेषाय
तत्पराय
क्षणाय
घट्यै
मुहूर्ताय
प्रहराय
दिवानक्ताय ७००
अहर्निशाय
पक्षाय
मासाय
अयनाय
वर्षाय
युगाय
कल्पाय
महालयाय
राशये
तारायै ७१०
तिथये
योगाय

गं वाराय नमः
करणाय
अंशकाय
लग्नाय
होरायै
कालचक्राय
मेरवे
सप्तर्षिभ्यो ७२०
ध्रुवाय
राहवे
मन्दाय
कवये
जीवाय
बुधाय
भौमाय
शशिने
रवये
कालाय ७३०
सृष्टये
स्थितये
विश्वस्मै स्थावराय जङ्गमाय
यस्मै
भुवे
अद्भ्यो
अग्नये
मरुते

गं व्योम्ने नमः
अहङ्कृतये
प्रकृतये ७४०
पुंसे
ब्रह्मणे
विष्णवे
शिवाय
रुद्राय
ईशाय
शक्तये
सदाशिवाय
त्रिदशेभ्यो
पितृभ्यो ७५०
सिद्धेभ्यो
यक्षेभ्यो
रक्षोभ्यो
किन्नरेभ्यो
साध्येभ्यो
विद्याधरेभ्यो
भूतेभ्यो
मनुष्येभ्यो
पशुभ्यो
खगेभ्यो ७६०
समुद्रेभ्यो
सरिद्भ्यो
शैलेभ्यो

गं भूताय नमः
भव्याय
भवोद्भवाय
साङ्ख्याय
पातञ्जलाय
योगाय
पुराणेभ्यो ७७०
श्रुत्यै
स्मृत्यै
वेदाङ्गेभ्यो
सदाचाराय
मीमांसायै
न्यायविस्तराय
आयुर्वेदाय
धनुर्वेदाय
गान्धर्वाय
काव्यनाटकाय ७८०
वैखानसाय
भागवताय
सात्वताय
पाञ्चरात्रकाय
शैवाय
पाशुपताय
कालामुखाय
भैरवशासनाय
शाक्ताय

गं वैनायकाय नमः ७९०
सौराय
जैनाय
आर्हतसंहितायै
सते
असते
व्यक्ताय
अव्यक्ताय
सचेतनाय
अचेतनाय
बन्धाय ८००
मोक्षाय
सुखाय
भोगाय
अयोगाय
सत्याय
अणवे
महते
स्वस्ति
हुं नमः
फट् नमः ८१०
स्वधा नमः
स्वाहा नमः
श्रौषड् नमः
वौषड् नमः
वषण्णमः

गं नमो नमः
ज्ञानाय
विज्ञानाय
आनन्दाय
बोधाय ८२०
संविदे
शमाय
यमाय
एकस्मै
एकाक्षराधाराय
एकाक्षरपरायणाय
एकाग्रधिये
एकवीराय
एकानेकस्वरूपधृते
द्विरूपाय ८३०
द्विभुजाय
द्व्यक्षाय
द्विरदाय
द्वीपरक्षकाय
द्वैमातुराय
द्विवदनाय
द्वन्द्वातीताय
द्वयादिगाय
त्रिधात्मे
त्रिकराय ८४०
त्रेतायै

गं त्रिवर्गफलदायकाय नमः
त्रिगुणात्मने
त्रिलोकादये
त्रिशक्तीशाय
त्रिलोचनाय
चतुर्बाहवे
चतुर्दन्ताय
चतुरात्मने
चतुर्मुखाय
चतुर्विधोपायमयाय ८५०
चतुर्वर्णाश्रमाश्रयाय
चतुर्विधवचोवृत्तिपरि-
वृत्तिप्रवर्तकाय
चतुर्थीपूजनप्रीताय
चतुर्थीतिथिसम्भवाय
पञ्चाक्षरात्मने
पञ्चात्मने
पञ्चास्याय
पञ्चकृत्यकृते
पञ्चाधाराय
पञ्चवर्णाय ८६०
पञ्चाक्षरपरायणाय
पञ्चतालाय
पञ्चकराय
पञ्चप्रणवभाविताय
पञ्चब्रह्ममयस्फूर्तये

गं पञ्चावरणवारिताय नमः
पञ्चभक्ष्यप्रियाय
पञ्चबाणाय
पञ्चशिवात्मकाय
षट्कोणपीठाय ८७०
षट्चक्रधाम्ने
षड्ग्रन्थिभेदकाय
षडध्वध्वान्तविध्वंसिने
षडङ्गुलमहाह्लदाय
षण्मुखाय
षण्मुखभ्रात्रे
षट्शक्तिपरिवारिताय
षड्वैरिवर्गविध्वंसिने
षडूर्मिभयभञ्जनाय
षट्तर्कदूराय ८८०
षट्कर्मनिरताय
षड्रसाश्रयाय
सप्तपातालचरणाय
सप्तद्वीपोरुमण्डलाय
सप्तस्वर्लोकमुकुटाय
सप्तसप्तिवरप्रदाय
सप्ताङ्गराज्यसुखदाय
सप्तर्षिगणमण्डिताय
सप्तछन्दोनिधये
सप्तहोत्रे ८९०
सप्तस्वराश्रयाय

गं सप्ताब्धिकेलिकासाराय
सप्तमातृनिषेविताय
सप्तच्छन्दोमोदमदाय
सप्तच्छन्दोमखप्रभवे
अष्टमूर्तिध्येयमूर्तये
अष्टप्रकृतिकारणाय
अष्टाङ्गयोगफलभुवे
अष्टपत्राम्बुजासनाय
अष्टशक्तिसमृद्धश्रिये ९००
अष्टैश्वर्यप्रदायकाय
अष्टपीठोपपीठश्रियै
अष्टमातृसमावृताय
अष्टभैरवसेव्याय
अष्टवसुवन्द्याय
अष्टमूर्तिभृते
अष्टचक्रस्फुरन्मूर्तये
अष्टद्रव्यहविःप्रियाय
नवनागासनाध्यासिने
नवनिध्यनुशासित्रे ९१०
नवद्वारपुराधाराय
नवाधारनिकेतनाय
नवनारायणस्तुत्याय
नवदुर्गानिषेविताय
नवनाथमहानाथाय
नवनागविभूषणाय
नवरत्नविचित्राङ्गाय

गं नवशक्तिशिरोधृताय नमः
दशात्मकाय
दशभुजाय ९२०
दशदिक्पतिवन्दिताय
दशाध्यायाय
दशप्राणाय
दशेन्द्रियनियामकाय
दशाक्षरमहामन्त्राय
दशाशाव्यापिविग्रहाय
एकादशादिभिरुद्रैः स्तुताय
एकादशाक्षराय
द्वादशोद्दण्डदोर्दण्डाय
द्वादशान्तनिकेतनाय ९३०
त्रयोदशाभिधाभिन्नविश्वेदेवाधिदैवताय
चतुर्दशेन्द्रवरदाय
चतुर्दशमनुप्रभवे
चतुर्दशादिविद्याढ्याय
चतुर्दशजगत्प्रभवे
सामपञ्चदशाय
पञ्चदशीशीतांशुनिर्मलाय
षोडशाधारनिलयाय
षोडशस्वरमातृकाय
षोडशान्तपदावासाय ९४०
षोडशेन्दुकलात्मकाय
कलासप्तदश्यै

गं सप्तदशाय नमः
सप्तदशाक्षराय
अष्टादशद्वीपपतये
अष्टादशपुराणकृते
अष्टादशौषधीसृष्टये
अष्टादशविधिस्मृताय
अष्टादशलिपिव्यष्टिसमष्टिज्ञानकोविदाय
एकविंशाय पुंसे ९५०
एकविंशत्यङ्गुलिपल्लवाय
चतुर्विंशतितत्त्वात्मने
पञ्चविंशाख्यपूरुषाय
सप्तविंशतितारेशाय
सप्तविंशतियोगकृते
द्वात्रिंशद्भैरवाधीशाय
चतुस्त्रिंशन्महाह्रदाय
षट्त्रिंशत्तत्त्वसम्भूतये
अष्टत्रिंशत्कलातनवे
नमदेकोनपञ्चाशन्मरुद्वर्गनिरर्गलाय ९६०
पञ्चाशदक्षरश्रेण्यै
पञ्चाशद्रुद्रविग्रहाय
पञ्चाशद्विष्णुशक्तीशाय
पञ्चाशन्मातृकालयाय
द्विपञ्चाशद्वपुःश्रेण्यै
त्रिषष्ट्यक्षरसंश्रयाय

गं चतुष्षष्ट्यर्णनिर्णेत्रे नमः
चतुष्षष्टिकलानिधये
चतुष्षष्टिमहासिद्धयोगिनी वृन्दवन्दिताय
अष्टषष्टिमहातीर्थक्षेत्रभैरव-भावनाय ९७०
चतुर्नवतिमन्त्रात्मने
षण्णवत्यधिकप्रभवे
शतानन्दाय
शतधृतये
शतपत्रायतेक्षणाय
शतानीकाय
शतमखाय
शतधारावरायुधाय
सहस्रपत्रनिलयाय
सहस्रफणभूषणाय ९८०
सहस्रशीर्षपुरुषाय
सहस्राक्षाय
सहस्रपदे
सहस्रनामसंस्तुत्याय
सहस्राक्षबलापहाय

गं दशसाहस्रफणभृत्फणिराज-कृतासनाय नमः
अष्टाशीतिसहस्राद्य-महर्षिस्तोत्रयन्त्रिताय
लक्षाधीशप्रियाधाराय
लक्षाधारमनोमयाय
चतुर्लक्षजपप्रीताय ९९०
चतुर्लक्षप्रकाशिताय
चतुरशीतिलक्षाणांजीवानां-देहसंस्थिताय
कोटिसूर्यप्रतीकाशाय
कोटिचन्द्रांशुनिर्मलाय
शिवाभवाध्युष्टकोटिविनायक-धुरन्धराय
सप्तकोटिमहामन्त्रमन्त्रितावयवद्युतये
त्रयस्त्रिंशत्कोटिसुरश्रेणी-प्रणतपादुकाय
अनन्तनाम्ने
अनन्तश्रिये
अनन्तानन्तसौख्यदाय नमः १०००

पुनरपि ऋष्यादि-कराङ्गन्यासौ विदध्यात् ।

**श्रीगणपतिसहस्रनामावली समाप्ता ॥**

## ॥ श्रीगणेश्वरैकविंशतिनामानि ॥

| | | |
|---|---|---|
| गं | गणञ्जयाय नमः | १ |
| | गणपतये नमः | २ |
| | हेरम्बाय नमः | ३ |
| | धरणीधराय नमः | ४ |
| | महागणपतये नमः | ५ |
| | लक्षप्रदाय नमः | ६ |
| | क्षिप्रप्रसादनाय नमः | ७ |
| | अमोघसिद्धये नमः | ८ |
| | अमिताय नमः | ९ |
| | मन्त्राय नमः | १० |
| | चिन्तामणये नमः | ११ |
| गं | निधये नमः | १२ |
| | सुमङ्गलाय नमः | १३ |
| | बीजाय नमः | १४ |
| | आशापूरकाय नमः | १५ |
| | वरदाय नमः | १६ |
| | शिवाय नमः | १७ |
| | काश्यपाय नमः | १८ |
| | नन्दनाय नमः | १९ |
| | वाचासिद्धाय नमः | २० |
| | ढुण्ढिविनायकाय नमः | २१ |

## ॥ इति-एकविंशतिनामानि ॥

गणञ्जयो गणपतिर्हेरम्बो धरणीधरः ।
महागणपतिर्लक्षप्रदः क्षिप्रप्रसादनः ॥
अमोघसिद्धिरमितो मन्त्रश्चिन्तामणिर्निधिः ।
सुमङ्गलो बीजमाशापूरको वरदःशिवः ॥
काश्यपो नन्दनो वाचासिद्धो ढुण्ढिविनायकः ।
मोदकैरेभिरत्रैकविंशत्यानामभिः पुमान् ॥
यः स्तौति मद्गतमना मदाराधनतत्परः ।
स्तुतो नाम्नां सहस्रेण तेनाहं नात्र संशयः ॥

नमो नमः सुरवरपूजिताङ्घ्रये नमो नमो निरुपममङ्गलात्मने ।
नमो नमो विपुलपदैकसिद्धये नमो नमः करिकलभाननाय ते ॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे ।
श्रीमहागणपतिक्रमः समाप्तः ।

॥ श्रीः ॥

# अथ श्री-क्रमः

## ब्राह्ममुहूर्तकृत्यम्

(मन्त्रमहार्णवश्रीविद्यार्णवनित्योत्सवादिषु प्रतिपादितम्)

ब्राह्मे मुहूर्ते चोत्थाय निद्रास्थानाद् बहिर्निर्गत्य हस्तौ पादौ मुखञ्च प्रक्षाल्याचम्य रात्रिवस्त्रं परित्यज्य शुद्धवस्त्रं परिधाय शुद्धासन उपविश्याज्ञा-चक्रे कोटीन्दुप्रकाशे स्वगुरुं ध्यायेत्—

ॐ आनन्दमानन्दकरं प्रसन्नं, ज्ञानस्वरूपं निजबोधरूपम् ।
योगीन्द्रमीड्यं भवरोगवैद्यं, श्रीमद्गुरुं नित्यमहं भजामि ॥

## श्रीगुरुपादुकापञ्चकम्

ब्रह्मरन्ध्रसरसीरुहोदरे नित्यलग्नमवदातमद्भुतम् ।
कुण्डलीविवरकाण्डमण्डितं द्वादशार्णसरसीरुहं भजे ॥ १ ॥
तस्य कन्दलितकर्णिकापुटे क्लृप्तरेखमकथादिरेखया ।
कोणलक्षितहलक्षमण्डलीं भावलक्ष्यमबलालयं भजे ॥ २ ॥
तत्पुटे पटुतडित्कडारिमस्पर्द्धमानमणिपाटलप्रभम् ।
चिन्तायामि हृदि चिन्मयं वपुर्नादबिन्दुमणिपीठमुज्ज्वलम् ॥ ३ ॥
ऊर्ध्वमस्य हुतभुक्शिखात्रयं तद्विलासपरिबृंहणास्पदम् ।
विश्वघस्मरमहोच्चिदोत्कटं व्यामृशामि युगमादिहंसयोः ॥ ४ ॥
तत्र नाथचरणारविन्दयोः कुङ्कुमासवपरीमरन्दयोः ।
द्वन्द्वबिन्दुमकरन्दशीतलं मानसं स्मरति मङ्गलास्पदम् ॥ ५ ॥

निषक्तमणिपादुका नियमितौघकोलाहलं ।
स्फुरत्किसलयारुणं नखसमुल्लसच्चन्द्रकम् ॥
परामृतसरोवरोदितसरोज — सद्रोचिषं ।
भजामि शिरसि स्थितं गुरुपदारविन्दद्वयम् ॥

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे।
विद्याऽवतारसंसिद्ध्यै स्वीकृतानेकविग्रहः ॥
नवाय नवरूपाय परमार्थस्वरूपिणे।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय शिवात्मने।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥
विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्।
प्रकाशानां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ॥
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः।
सदा मच्चित्तरूपेण विधेहि भवदासनम् ॥
इत्येवं पञ्चभिः श्लोकैः स्तुवीत यतमानसः।
प्रातः प्रबोधसमये जपात् सुदिवसं भवेत् ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

'ऐं ह्रीं श्रीं ह्स्ख्फ्रें हसक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः स्वरूपनिरूपणहेत्वमुकाम्बासहितश्रीगुरुपादुकां पूजयामि'

'स्वच्छप्रकाशविमर्शहेत्वमुकाम्बासहितश्रीपरमगुरुपादुकां पूजयामि'

'स्वात्मारामपञ्जरविलीनचेतस्कामुकाम्बासहित श्रीपरमेष्ठिगुरुपादुकां पूजयामि', इति गुरुपरमगुरुपरमेष्ठिगुरुपादुकां पूजयेत्।

गुरुर्ब्रह्मा गुरुर्विष्णुः, गुरुर्देवो महेश्वरः।
गुरुस्साक्षात्परं ब्रह्म, तस्मै श्रीगुरवे नमः ॥

इति प्रणम्य प्राणानायम्य च तच्चरणयुगलविगलदमृतरस-विसरपरिप्लुताखिलाङ्गमात्मानं भावयेत्।

ततश्च सर्वचैतन्यात्मिकां जाग्रदाद्यवस्थात्रयावभासिकां सर्वाधिष्ठानरूपां प्रत्यक्चैतन्याभिन्नब्रह्मात्मिकां सर्वचैत्यविवर्जितामखण्डां चितिं भावयेत्।

आमूलाधारादाब्रह्मबिलं विलसन्तीं तडिल्लतासदृशाकृतिं तरुणारुणपिञ्जरां तैजसीं ज्वलन्तीं कुण्डलीरूपां सर्वाधिष्ठानभूतां परां संविदं भावयेत्।

३ ॡं परायै नमः ३ ओं ज्ञानामृतायै नमः
६ लूं सूक्ष्मायै ,, ३ औं आप्यायिन्यै ,,
३ एं सूक्ष्मामृतायै ,, ३ अं व्यापिन्यै ,,
३ ऐं ज्ञानायै ,, ३ अः व्योमरूपायै ,,

३ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥
गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ।
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ नमः ॥

३ 'मूलं' नमः ॥

३ अखण्डैकरसानन्दकरे परसुधात्मनि ।
स्वच्छन्दस्फुरणामत्र निधेहि कुलनायिके ॥ नमः ॥

३ अकुलस्थामृताकारे शुद्धज्ञानकरे परे ।
अमृतत्वं निधेह्यस्मिन् वस्तुनि क्लिन्नरूपिणि ॥ नमः ॥

३ तद्रूपिण्यैकरस्यत्वं कृत्वा ह्येतत्स्वरूपिणि ।
भूत्वा परामृताकारा मयि चित्स्फुरणं कुरु ॥ नमः ॥

३ ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा ॥ नमः ॥

३ ऐं वद वद वाग्वादिनि ऐं क्लीं क्लिन्ने क्लेदिनि क्लेदय क्लेदय महाक्षोभं कुरु कुरु क्लीं सौः मोक्षं कुरु कुरु ह्सौः स्हौः ॥ नमः ॥

एवमभिमन्त्रितविशेषार्घ्यामृतात् किञ्चित् गुरुपात्रे उद्धृत्य गुरुत्रयं यजेत् । गुरुः सन्निहितो यदि तस्मै निवेदयेत् ।

पुनः आत्मपात्रे किञ्चिद्विशेषार्घ्यामृतमुद्धृत्य, मूलाधारे वालाग्रमात्रं अनादिवासनारूपेन्धनप्रज्वलितं कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा–

३ कुण्डलिन्यधिष्ठितचिदग्निमण्डलाय नमः, इति मनसा सम्पूज्य

३ मूलं पुण्यं जुहोमि स्वाहा ३ मूलं सङ्कल्पं जुहोमि स्वाहा
३ मूलं पापं ,, ३ मूलं विकल्पं ,,
३ मूलं कृत्यं ,, ३ मूलं धर्मं ,,
३ मूलं अकृत्यं ,, ३ मूलं अधर्मं ,,

३ मूलं अधमं जुहोमि वौषट्

३ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यांमुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा—इति पूर्णाहुतिं विभाव्य

३ आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा।

इति आत्मनः कुण्डलिनीरूपे चिदग्नौ होमबुद्ध्या जुहुयात्। विशेषार्घ्यपात्रात्किञ्चित्क्षीरं क्षीरकलशे निक्षिपेत्॥

आविसर्जनं शङ्खं विशेषार्घ्यपात्रञ्च न चालयेत्।

## अन्तर्यागः

स च ज्ञानार्णवे दृष्टः, यथा मूलाधारादाब्रह्मबिलं विलसन्तीं विसतन्तुतनीयसीं विद्युत्पुञ्जपिञ्जरां विवस्वदयुतभास्वत्प्रकाशां परश्शतसुधामयूखशीतलतेजोदण्डरूपां परचितिं भावयेत्। ततस्तत्तेजसि—

मूलाधारादधोगते अकुलसहस्रारे, भूपूरस्थितदेवीः,

तदुपरि स्थिते विषुवनाम्नि रक्तवर्णषड्दलपद्मे, षोडशदलदेवीः,

मूलाधारे चतुर्दले अष्टदलदेवीः, स्वाधिष्ठाने षड्दले चतुर्दशारदेवीः, मणिपूरके दशदले बहिर्दशारदेवीः, अनाहते द्वादशदले अन्तर्दशारदेवीः, विशुद्धौ षोडशदले अष्टारदेवी, लम्बिकाग्रे आयुधदेवीः, त्रिकोणदेवीश्च, आज्ञायां द्विदले बिन्दुगतदेवीं च, ध्यात्वा

तत्तदग्रे जीवात्मनं पुष्पपूरिताञ्जलिनिविष्टं भावयन् तत्तत्पूजा मन्त्रैः तत्तदावरणपूजां, देव्याः वामहस्ते पूजासमर्पणं च विभाव्य श्रीमहात्रिपुरसुन्दर्यां सचक्रावयवानि आवरणानि विलीनानि विभाव्य मध्यत्र्यस्राग्रे (देवीपादमूले) स्थितजीवात्मना सहितां श्रीदेवीं हृदयं नीत्वा स्वाञ्जलिगतकुसुमैः तत्र तां सम्पूज्य, ततः अकुलेन्दुगलितामृतधारारूपिणीः चन्दनकुसुमधूपदीपनैवेद्यशालिकरकमलाः पीतासितश्यामरक्तशुक्लवर्णाः धरणिवियदनिलानलजललक्षणपञ्चभूतमयीः सर्वावयवसुन्दरीः पञ्चदेवताः

देव्यग्रे संस्मृत्य, ताभिः चन्दनाद्युपचारान् श्रीदेव्यै समर्पितान् स्मारं स्मारं पञ्चोपचारमुद्राश्च प्रदर्शिताः भावयेत् ॥

ततो देव्या नासायां गन्धदेवता, श्रोत्रे पुष्पदेवता, नाभौ धूपदेवता, नयने दीपदेवता, जिह्वायां नैवेद्यदेवता, इति क्रमेण विलीनाः विभाव्य, मूलविद्यां उच्चरन्, जीवात्मानं श्रीदेवीपादारविन्दमूले लीनं विभाव्य, हृदयगतदेवीरूपं मध्यत्र्यस्रसहितं तत्रैव केवलं ज्योतिर्मयतामापन्नं ध्यायन् संक्षोभिण्यादिनवमुद्राः भावयित्वा, क्षणं न किञ्चिदपि चिन्तयेत् ।

अथ देव्या प्रेरितमानसः सन् पुनः प्रकृतिमालम्ब्य तेजोरूपेण परिणतां परमशिवज्योतिरभिन्नप्रकाशात्मिकां वियदादिविश्वकारणां स्वात्माभिन्नां परचितिं सुषुम्नापथेन उद्गमय्य विनिर्भिन्नविधिबिलविलसदमलदशशत-दलकमलात् वहन्नासापुटेन निर्गतां त्रिखण्डामुद्रामण्डितशिखण्डे कुसुम-गर्भितेऽञ्जलौ समानीय—

३ ह्रीं श्रीं सौः श्रीललितायाः अमृतचैतन्यमूर्तिं कल्पयामि नमः ॥

## ध्यानम्

ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् । अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ॥
उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् । जपाकुसुमसङ्काशां पद्मरागमणिप्रभाम् ॥
स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् । रक्तोत्पलदलाकारपादपल्लवराजिताम् ॥
अनर्घरत्नखचितमञ्जीरचरणद्वयाम् । पादाङ्गुलीयकक्षिप्तरत्नतेजोविराजिताम् ॥
कदलीललितस्तम्भसुकुमारोरुकोमलाम् । नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ॥
मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् । अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ॥
रोमराजिलतोद्भूतमहाकुचफलान्विताम् । सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ॥
अनर्घमौक्तिकस्फारहारभारविराजिताम् । नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ॥
श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् । उद्यदादित्यसङ्काशताटङ्कमुखप्रभाम् ॥
पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् । स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ॥
ललाटपट्टसंराजद्रत्नाढ्यतिलकाङ्किताम् । मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ॥

स्फुरच्चन्द्रकलाराजन्मुकुटाढ्यां त्रिलोचनाम्। प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ॥
इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् । सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ॥
सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरिणीम् । सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ॥
सर्वक्षेत्रमयीं देवीं सर्वविद्यामयीं शिवाम् । सर्वयागमयीं विद्यां सर्वदेवस्वरूपिणीम् ॥
सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् । सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ॥
सर्वानन्दमयीं ज्ञानगह्वरां संविदं पराम् । एवं ध्यायेत्परामम्बां सच्चिदानन्दरूपिणीम् ॥

इति (निजलीलाङ्गीकृतललितवपुषं विचिन्त्य)

३ ह्सैं ह्स्क्लरीं ह्स्रौः

महापद्मवनान्तस्थे कारणानन्दविग्रहे ।
सर्वभूतहिते मातः एह्येहि परमेश्वरि ॥

श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकामावाहयामि नमः ॥

नित्यादिकमणिमान्तं श्रीकामेश्वराङ्कोपवेशनं विना श्रीदेवीसमानाकृतिवेषभूषणायुधशक्तिचक्रं ओघत्रयगुरुमण्डलं च वक्ष्यमाणेषु आवरणेषु निजस्वामिन्यभिमुखोपविष्टमवमृश्य

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ३ | मूलं | आवाहिता | भव ॥ | ३ | मूलं | सन्निरुद्धा | भव ॥ |
| ३ | ,, | संस्थापिता | भव ॥ | ३ | ,, | सन्मुखी | भव ॥ |
| ३ | ,, | सन्निधापिता | भव ॥ | ३ | ,, | अवगुण्ठिता | भव ॥ |

इति मन्त्रैरावाहनादिषण्मुद्राः प्रदर्श्य, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् । अथ हृदयादिषडङ्गमुद्राः बाणाद्यायुधमुद्राश्च तत्तन्मन्त्रपूर्वकं प्रदर्शयेत् ॥

## चतुःषष्ट्युपचारपूजाः

अथ श्रीपरदेवतायाः चतुष्षष्ट्युपचारानाचरेत् । तेष्वशक्तानां भावनया पुष्पाक्षतानर्पयेत् ॥

३ श्रीललितायै पाद्यं कल्पयामि नमः

,, आभरणावरोपणं ,,
,, सुगन्धितैलाभ्यङ्गं ,,
,, मज्जनशालाप्रवेशनं ,,
,, श्रीललितायै मज्जनशालामणिपीठोपवेशनं क० नमः
,, दिव्यस्नानीयोद्वर्तनं ,,

३ श्रीललितायै उष्णोदकस्नानं क० नमः, श्रीललितायै प्रथमभूषणं (माङ्गल्यसूत्रं) क० नमः

| | | | |
|---|---|---|---|
| ,, *कनककलशच्युत-सकलतीर्थाभिषेकं | ,, | ,, कनकचिन्ताकं | ,, |
| ,, धौतवस्त्रपरिमार्जनं | ,, | ,, पदकं | ,, |
| ,, अरुणदुकूलपरिधानं | ,, | ,, महापदकं | ,, |
| ,, अरुणकुचोत्तरीयं | ,, | ,, मुक्तावलिं | ,, |
| ,, आलेपमण्डपप्रवेशनं | ,, | ,, एकावलिं | ,, |
| ,, आलेपमण्डपमणि-पीठोपवेशनं | ,, | ,, छन्नवीरं | ,, |
| | | ,, केयूरयुगलचतुष्टयं | ,, |
| ,, दिव्यगन्धसर्वाङ्गीण-विलेपनं | ,, | ,, वलयावलिं | ,, |
| | | ,, ऊर्मिकावलिं | ,, |
| | | ,, काञ्चीदाम | ,, |
| ,, केशभारस्य कालागरुधूपं | ,, | ,, कटिसूत्रं | ,, |
| ,, कुसुममालाः | ,, | ,, सौभाग्याभरणं | ,, |
| ,, भूषणमण्डपप्रवेशनं | ,, | ,, पादकटकं | ,, |
| ,, भूषणमण्डपमणि, पीठोपवेशनं | ,, | ,, रत्ननूपुरं | ,, |
| | | ,, पादाङ्गुलीयकं | ,, |
| | | ,, एककरे पाशं | ,, |
| ,, नवमणिमकुटं | ,, | ,, अन्यकरेऽङ्कुशं | ,, |
| ,, चन्द्रशकलं | ,, | ,, इतरकरे पुण्ड्रेक्षुचापं | ,, |
| ,, सीमन्तसिन्दूरं | ,, | ,, अपरकरे पुष्पबाणान् | ,, |
| ,, तिलकरत्नं | ,, | ,, श्रीमन्माणिक्यपादुके | ,, |
| ,, कालाञ्जनं | ,, | ,, स्वसमानवेषाभिरावरण-देवताभिः सह महा-चक्राधिरोहणं | ,, |
| ,, वालीयुगलं | ,, | | |
| ,, मणिकुण्डलयुगलं | ,, | ,, कामेश्वराङ्कपर्यङ्को-पवेशनं | ,, |
| ,, नासाभरणं | ,, | | |
| ,, अधरयावकं | ,, | ,, अमृतासवचषकं | ,, |

* इह श्रीसूक्तेनाभिषेको विधेयः ॥

३ श्री ललितायै आचमनीयं कल्पयामि नमः।
" *कर्पूरवीटिकां " "
" आनन्दोल्लासविलासहासं " "

अथ मङ्गलारार्तिकम्—कलधौतादिभाजने कुङ्कुमचन्दनादिलिखित-स्याष्टषट्चतुर्दलाद्यन्यतमस्य कमलस्य चन्द्राकारचरुगोलकवत्यां चणकमुद्गजुषि वा कर्णिकायां दलेषु च पयःशर्करापिण्डीकृतयवगोधूमादिपिष्टोपादानकानि त्रिकोणशिरस्कडमर्वाकृतीनि चतुरङ्गुलोत्सेधानि घृतपाचितानि नवसप्तपञ्चान्यतमसंख्यानि दीपपात्राणि निधाय तेषु गोघृतं कर्षप्रमितं आपूर्य कर्पूरगर्भितां वर्तिकां हृल्लेखया प्रज्वाल्य—

३ श्रीं ह्रीं ग्लूं स्लूं म्लूं प्लूं न्लूं ह्रीं श्रीं—इति नवाक्षर्या रत्नेश्वरीविद्यया अभिमन्त्र्य चक्रमुद्रां प्रदर्श्य मूलेनाभ्यर्च्य—

३ जगद्ध्वनिमन्त्रमातः स्वाहाः—इति मन्त्रपूर्वकं गन्धाक्षतादिना घण्टां सम्पूज्य तां वादयन् जानुचुम्बितभूतलः तत्पात्रं आमस्तकमुद्धृत्य—

३ श्रीललितायै मङ्गलारार्तिकं कल्पयामि नमः।
समस्तचक्रचक्रेशीयुते देवि नवात्मिके।
आरार्तिकमिदं तुभ्यं गृहाण मम सिद्धये॥

इति नववारं श्रीदेव्या आचूडं आचरणाब्जं परिभ्राम्य दक्षभागे स्थापयेत्।

३ श्रीललितायै छत्रं कल्प० नमः ३ श्रीललितायै गन्धं कल्प० नमः
" चामरयुगलं " " पुष्पं "
" दर्पणं " " धूपं "
" तालवृन्तं " " दीपं "

अथ नैवेद्यम्—देव्याः पुरतः स्वदक्षिणे चतुरस्रमण्डलं निर्माय तत्र आधारोपरि नैवेद्यं निधाय मूलेन प्रोक्ष्य वं इति धेनुमुद्रया अमृतीकृत्य मूलेन त्रिवारं अभिमन्त्र्य आपोशनं दत्वा—

३ श्रीललितायै नैवेद्यं कल्पयामि नमः॥

अथ श्रीललितायै पानीयं उत्तरापोशनं हस्तप्रक्षालनं गण्डूषं आचमनीयं ताम्बूलञ्च कल्पयेत्।

---

* एलालवङ्गकर्परकस्तूरीकेशरादिभिः, जातीफलदलैः पूगैः लाङ्गल्यूषणनागरैः चूर्णैःखदिरसारैश्च युक्ता कर्पूरवीटिका।

३ द्रां द्रीं क्लीं ब्लूं सः क्रों ह्स्ख्फ्रें ह्सौः ऐं—इति सर्वसंक्षोभिण्यादिनव-
मुद्राः प्रदर्शयेत् ।

षोडश्युपासकास्तु ह्स्रैं ह्स्क्लरीं ह्स्रौः इति त्रिखण्डामपि प्रदर्शयेयुः ॥

## चतुरायतनपूजा

नित्योत्सवे तु, तत्तद्देवतामन्त्रैः तर्पणमात्रमेव । विस्तरेणापि लिख्यते यथेच्छं विधेयम् ।

नैर्ऋते च गणेशानं सूर्यं वायव्य एव च ।
ईशाने विष्णुमाग्नेये शिवं चैव प्रपूजयेद् ॥

## गणपतिपूजा

बीजापूरगदेक्षुकार्मुकरुजाचक्राब्जपाशोत्पल
व्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्करम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरया श्लिष्टोज्ज्वलद्भूषया
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥

श्रीमहागणपतिं ध्यायामि आवाहयामि महागणपतये नमः आसनं समर्पयामि पाद्यं समर्पयामि अर्घ्यं समर्पयामि आचमनीयं समर्पयामि मधुपर्कं समर्पयामि स्नानं समर्पयामि वस्त्रालङ्कारान् समर्पयामि । यज्ञोपवीतं समर्पयामि गन्धान् धारयामि ।

| | | | |
|---|---|---|---|
| ॐ सुमुखाय | नमः | ॐ धूमकेतवे | नमः |
| एकदन्ताय | ,, | गणाध्यक्षाय | ,, |
| कपिलाय | ,, | फालचन्द्राय | ,, |
| गजकर्णकाय | ,, | गजाननाय | ,, |
| लम्बोदराय | ,, | वक्रतुण्डाय | ,, |
| विकटाय | ,, | शूर्पकर्णाय | ,, |
| विघ्नराजाय | ,, | हेरम्बाय | ,, |
| विनायकाय | ,, | स्कन्दपूर्वजाय | ,, |

श्रीमहागणपतये नमः नानाविधपरिमलपुष्पाणि समर्पयामि ॥

३ 'गणपतिमूल' महागणपति श्रीपादुकां पूजयामि तर्पयामि नमः । इति त्रिः सन्तर्पयेत् ॥

महागणपतये नमः, धूपमाघ्रापयामि। दीपं दर्शयामि। नैवेद्यं समर्पयामि। मध्ये मध्ये पानीयं, उत्तरापोशनं, हस्तप्रक्षालनं, पादप्रक्षालनं आचमनीयं, ताम्बूलं समर्पयामि। कर्पूरनीराजनं दर्शयामि॥

ॐ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्तिः प्रचोदयात्। महागणपतये नमः मन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारान् समर्पयामि। समस्तराजोपचारदेवोपचारान् समर्पयामि। अनया पूजया भगवान्सर्वदेवात्मकः श्रीमहागणपतिः सुप्रसन्नो वरदो भवतु॥

## सूर्यपूजा

अध्यारूढं रथेन्द्रे वसुदलसहिते वृत्तषट्कोणमध्ये
भास्वन्तं भास्करन्तं शुभदमसिगदाशङ्खचक्राब्जयुग्मम्।
वेदाकारं त्रिमूर्तिं त्रिविधनयगुणं विश्वरूपं पुराणं
ह्रांह्रींह्रूङ्काररूपं सुरनुतमनिशं भावयेद्धृत्सरोजे॥

आदित्यं ध्यायामि। आवाहयामि। आदित्याय नमः, आसनं समर्पयामि। पाद्यं समर्पयामि। अर्घ्यं समर्पयामि। आचमनीयं समर्पयामि। मधुपर्कं समर्पयामि। स्नानं समर्पयामि। आचमनीयं समर्पयामि। वस्त्रालङ्कारान् समर्पयामि। यज्ञोपवीतं समर्पयामि गन्धान् धारयामि।

| | | | |
|---|---|---|---|
| ॐ मित्राय | नमः | हिरण्यगर्भाय | नमः |
| रवये | ,, | मरीचये | ,, |
| ॐ सूर्याय | ,, | आदित्याय | ,, |
| भानवे | ,, | सवित्रे | ,, |
| खगाय | ,, | अर्काय | ,, |
| पूष्णे | ,, | भास्कराय | ,, |

आदित्याय नमः नानाविधपरिमलपत्रपुष्पाणि समर्पयामि॥

३ 'आदित्यमूलं' आदित्यश्रीपादुकां पूजयामि तर्पयामि नमः। इति त्रिः सन्तर्पयेत्॥

आदित्याय नमः, धूपमाघ्रापयामि। दीपं दर्शयामि। नैवेद्यं समर्पयामि। मध्ये मध्ये पानीयं, उत्तरापोशनं, हस्तप्रक्षालनं, पादप्रक्षालनं आचमनीयं, ताम्बूलञ्च समर्पयामि। कर्पूरनीराजनं दर्शयामि।

ॐ भास्कराय विद्महे महाद्युतिकराय धीमहि। तन्नो आदित्यः प्रचोदयात्। आदित्याय नमः मन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारान् समर्पयामि। समस्तराजोपचारदेवोपचारान् समर्पयामि। अनया पूजया भगवान्सर्वदेवात्मकः आदित्यः सुप्रीतः सुप्रसन्नो वरदो भवतु॥

## विष्णुपूजा

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकरं गगनसदृशं मेघवर्णं शुभाङ्गम्।
लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम्॥

श्रीमहाविष्णुं ध्यायामि। आवाहयामि। महाविष्णवे नमः, आसनं समर्पयामि। पाद्यं समर्पयामि। अर्घ्यं समर्पयामि। आचमनीयं समर्पयामि। मधुपर्कं समर्पयामि। स्नानं समर्पयामि। आचमनीयं समर्पयामि। वस्त्रालङ्कारान् समर्पयामि। यज्ञोपवीतं समर्पयामि गन्धान्-धारयामि।

| | | | |
|---|---|---|---|
| ॐ केशवाय | नमः | ॐ त्रिविक्रमाय | नमः |
| नारायणाय | ,, | वामनाय | ,, |
| माधवाय | ,, | श्रीधराय | ,, |
| गोविन्दाय | ,, | हृषीकेशाय | ,, |
| विष्णवे | ,, | पद्मनाभाय | ,, |
| मधुसूदनाय | ,, | दामोदराय | ,, |

महाविष्णवे नमः नानाविधपरिमलपत्रपुष्पाणि समर्पयामि॥

३ 'अष्टाक्षरी' महाविष्णुश्रीपादुकां पूजयामि तर्पयामि नमः। इति त्रिः सन्तर्पयेत्।

महाविष्णवे नमः। धूपमाघ्रापयामि। दीपं दर्शयामि। नैवेद्यं समर्पयामि। मध्ये मध्ये पानीयं, उत्तरापोशनं, हस्तप्रक्षालनं, पादप्रक्षालनं, आचमनीयं, ताम्बूलं समर्पयामि कर्पूरनीराजनं दर्शयामि।

ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। महाविष्णवे नमः मन्त्रपुष्पं समर्पयामि। प्रदक्षिणनमस्कारन् समर्पयामि।

समस्तराजोपचारदेवोपचारान् समर्पयामि । अनया पूजया भागवान्सर्व-देवात्मकः श्रीमहाविष्णुः सुप्रसन्नो वरदो भवतु ॥

## शिवपूजा

मूले कल्पद्रुमस्य द्रुतकनकनिभं चारुपद्मासनस्थं
वामाङ्कारूढगौरीनिविडकुचभराभोगगाढोपगूढम् ।
सर्वालङ्कारकान्तं वरपरशुमृगाभीतिहस्तं त्रिणेत्रं
वन्दे बालेन्दुमौलिं गजवदनगुहाश्लिष्टपार्श्वं महेशम् ॥

साम्बपरमेश्वरं ध्यायामि । आवाहयामि । परमेश्वराय नमः, आसनं समर्पयामि । पाद्यं समर्पयामि । अर्घ्यं समर्पयामि । आचमनीयं समर्पयामि । मधुपर्कं समर्पयामि । स्नानं समर्पयामि । आचमनीयं समर्पयामि । वस्त्रा-लङ्कारान् समर्पयामि । यज्ञोपवीतं समर्पयामि । गन्धान् धारयामि ।

| | | | |
|---|---|---|---|
| ॐ भवाय | देवाय नमः | ॐ रुद्राय | देवाय नमः |
| शर्वाय | ,, | उग्राय | ,, |
| ईशानाय | ,, | भीमाय | ,, |
| पशुपतये | ,, | महते | ,, |

परमेश्वराय नमः । नानाविधपरिमलपत्रपुष्पाणि समर्पयामि ।

३ 'पञ्चाक्षरी' सम्बपरमेश्वरश्रीपादुकां पूजयामि तर्पयामि नमः । इति त्रिः सन्तर्पयेत् ॥

परमेश्वराय नमः । धूममाघ्रापयामि । दीपं दर्शयामि । नैवेद्यं समर्पयामि । मध्ये मध्ये पानीयं, उत्तरापोशनं, हस्तप्रक्षालनं, पादप्रक्षालनं आचमनीयं, ताम्बूलञ्च समर्पयामि । कर्पूरनीराजनं दर्शयामि ॥

ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् । परमेश्वराय नमः मन्त्रपुष्पं समर्पयामि । प्रदक्षिणनमस्कारान् समर्पयामि । समस्तराजोपचारदेवोपचारान् समर्पयामि । अनया पूजया भगवान्सर्व-देवात्मकः साम्बपरमेश्वरः सुप्रीतः सुप्रसन्नो वरदो भवतु ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं चतुरायतनार्चनम् ॥
इति सामान्यार्घ्योदकेन देव्याः वामहस्ते पूजां समर्पयेत् ॥

### लयाङ्गपूजा

३ 'मूलं' श्रीललितामहात्रिपुरसुन्दरी (पराभट्टारिका) श्रीपादुकां पूजयामि तर्पयामि नमः, इति बिन्दौ देवीं त्रिः सन्तर्पयेत् ।

### षडङ्गार्चनम्

देव्यङ्गे (बिन्दौ) अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च—

| | | | | | |
|---|---|---|---|---|---|
| ३ | ऐं | क-५ | हृदयाय नमः । | हृदयशक्तिश्रीपादुकां | पू० त० नमः |
| ३ | क्लीं | ह-६ | शिरसे स्वाहा । | शिरःशक्तिश्रीपादुकां | ,, |
| ३ | सौः | स-४ | शिखायै वषट् । | शिखाशक्तिश्रीपादुकां | ,, |
| ३ | ऐं | क-५ | कवचाय हुं । | कवचशक्तिश्रीपादुकां | ,, |
| ३ | क्लीं | ह-६ | नेत्रत्रयाय वौषट् । | नेत्रशक्तिश्रीपादुकां | ,, |
| ३ | सौः | स-४ | अस्त्राय फट् । | अस्त्रशक्तिश्रीपादुकां | ,, |

षोडश्युपासकानान्तु षोडशीषट्कूटेन षडङ्गपूजा ।

### नित्यादेवीयजनम्

३ अः पञ्चदशी अः श्रीललितामहानित्याश्रीपादुकां पूजयामि तर्पयामि नमः । इति बिन्दौ महानित्यां त्रिर्यजेत् ॥
अथ तत्तत्तिथिनित्यामन्त्रेण तत्तत्तिथिनित्यां बिन्दौ त्रिर्यजेत् ।
ततः पूर्ववत् महानित्यां त्रिर्यजेत् ॥




ततो मध्यत्रिकोणस्य दक्षिणरेखायां वारुण्याद्यग्नेयान्तं क्रमेण अं आं इं ईं उं इति, पूर्वरेखायां आग्नेयादीशानान्त ऊं ऋं ॠं लृं ॡं इति,

उत्तररेखायां ईशानादिवारुण्यन्तं एं ऐं ओं औं अं इति, पञ्चपञ्चस्वरान् विभाव्य तेषु वामावर्तेन कामेश्वर्यादिनित्या यजेत्। बिन्दौ षोडशं स्वरं (अः) विचिन्त्य महानित्यां यजेत्। यथा—

३ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वसत्त्वान् भगेश्वरि ऐं ब्लूं जं ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं, आं भगमालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ इं ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा, इं नित्यक्लिन्नानित्या श्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ईं ॐ क्रों भ्रों क्रौं भ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ उं ओं ह्रीं वह्निवासिन्यै नमः उं वह्निवासिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्या श्रीपादुकां पूजयामि तर्पयामि नमः

३ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ॠं ॐ ह्रीं हुं खे च छे क्षः स्त्री हुं क्षें ह्रीं फट् ॠं त्वरितानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ॡं ह्स्क्लर्डें ह्स्क्लर्ड़ीं ह्स्कलर्डौः ॡं नित्यानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमद्रवे हुं फ्रें ह्रीं एं नीलपताका नित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ऐं भ्म्र्य्यूं ऐं विजया नित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ ओं स्वौं ओं सर्वमङ्गलानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

३ औं ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वलज्वल प्रज्वल प्रज्वल ह्लां ह्लीं ह्लूं र र र र र र र हुं फट् स्वाहा औं ज्वालामालिनीनित्याश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ अं च्क्रौं अं चित्रानित्याश्रीपादुकां पजयामि तर्पयामि नमः ॥

३ अः पञ्चदशी अः ललितामहानित्याश्रीपादुकां पूजयामि तर्पयामि नमः ॥

एवं शुक्लपक्षे । कृष्णपक्षे तु चित्राद्याः कामेश्वर्यन्ताः तिथिनित्याः स्वस्वमन्त्रेण तथैव सम्पूज्य बिन्दौ महानित्यां यजेत् ॥

## गुरुमण्डलार्चनम्

३ परौघेभ्यो नमः । इति बिन्दुत्रिकोणयोः पुष्पाञ्जलिं दत्त्वा बिन्दौ महापादुकां यजेत् ॥ यथा—

३ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथश्रीमहापादुकां पूजयामि तर्पयामि नमः ॥

त्रिकोणे वामकोणादारभ्य पूर्वरेखायां—

३ उड्डीशानन्दनाथ श्रीपादुकां पू० त० नमः

३ प्रकाशानन्दनाथ ,,

३ विमर्शानन्दनाथ ,,

३ आनन्दानन्दनाथ ,,

दक्षकोणादारभ्य दक्षरेखायां—

३ षष्ठीशानन्दनाथ ,,

३ ज्ञानानन्दनाथ ,,

३ सत्यानन्दनाथ श्रीपादुकां पू० त० नमः

३ पूर्णानन्दनाथ ,,

स्वाग्रकोणादारभ्य वामरेखायां-

३ मित्रेशानन्दनाथ ,,

३ स्वभावानन्दनाथ ,,

३ प्रतिभानन्दनाथ ,,

३ सुभगानन्दनाथ ,,



१
२
३

ततो देव्याः पश्चात् मूलत्रिकोणपूर्वरेखायाः तदव्यवहितप्रागग्रत्रिकोणपश्चिमरेखायाश्चान्तरे विमलाजयिन्योर्मध्ये अरुणावाग्देवतासन्निधौ दक्षिणोत्तरायतं रेखात्रयं विभाव्य दक्षिण-संस्थाक्रमेण दिव्यसिद्धमानवाख्यमोघत्रयं मुनिवेदवसुसङ्ख्यं समर्चयेत् ।

यथा—

३ दिव्यौघसिद्धौघमानवौघेभ्यो नमः—इति पुष्पाञ्जलिः ।

दिव्यौघः । प्रथमरेखायां—

३ परप्रकाशानन्दनाथश्रीपादुकां पू० त० नमः
३ परशिवानन्दनाथ „
३ पराशक्त्यम्बा „
३ कौलेश्वरनन्दनाथ „
३ शुक्लदेव्यम्बा „
३ कुलेश्वरानन्दनाथ „
३ कामेश्वर्यम्बा „

सिद्धौघः । द्वितीयरेखायां—

३ भोगानन्दनाथ „
३ क्लिन्नानन्दनाथ „
३ समयानन्दनाथ „
३ सहजानन्दनाथ „

मानवौघः । तृतीयरेखायां—

३ गगनानन्दनाथ श्रीपादुकां पू० त० नमः
३ विश्वानन्दनाथ „
३ विमलानन्दनाथ „
३ मदनानन्दनाथ „
३ भुवनानन्दनाथ „
३ लीलाम्बा „
३ स्वात्मानन्दनाथ „
३ प्रियानन्दनाथ „

ततः प्रथमरेखायां परमेष्ठिगुरुमन्त्रेण परमेष्ठिगुरुं, द्वितीयरेखायां परम-गुरुमन्त्रेण परमगुरुं, तृतीयरेखायां स्वगुरुमन्त्रेण स्वगुरुञ्च यजेत् ॥

———

## आवरणपूजा

३ सविन्मये परे देवि परामृतरुचि प्रिये।
अनुज्ञां त्रिपुरे देहि परिवारार्चनाय मे ॥

## प्रथमावरणम्

३ अं आं सौः त्रैलोक्यमोहनचक्राय नमः। इति पुष्पाञ्जलिं दद्यात् ॥

क्रमेण शुक्लारुणपीतवर्णरेखात्रयस्य लकारप्रकृतिकपृथिव्यात्मकस्य चतुरस्रस्य प्रवेशरीत्या प्रथमरेखायां पश्चिमादिद्वारचतुष्टयदक्षिणभागेषु वाय्वादिकोणेषु च पश्चिमनैर्ऋतयोः पूर्वेशानयोश्च मध्ये क्रमेण—



| | |
|---|---|
| ३ अं अणिमासिद्धि श्रीपादुकां पू० त० नमः | ३ पं प्राकाम्यसिद्धि श्रीपादुकां पू० त० नमः |
| ३ लं लघिमासिद्धि ,, | ३ भुं भुक्तिसिद्धि ,, |
| ३ मं महिमासिद्धि ,, | ३ इं इच्छासिद्धि ,, |
| ३ ईं ईशित्वसिद्धि ,, | ३ पं प्राप्तिसिद्धि ,, |
| ३ वं वशित्वसिद्धि ,, | ३ सं सर्वकामसिद्धि ,, |

इति स्वस्य तत्तदाभिमुख्यं भावयन् पूजयेत्। एवमुत्तरत्रापि ॥

अथ चतुरस्रमध्यरेखायां प्रागुक्तद्वारवामभागेषु च क्रमेण—



३ आं ब्राह्मीमातृ श्रीपादुकां पू० त० नमः
३ ईं माहेश्वरीमातृ ,,
३ ऊं कौमारीमातृ ,,
३ ऋं वैष्णवीमातृ ,,
३ लॄं वाराहीमातृ श्रीपादुकां पू० त० नमः
३ ऐं माहेन्द्रीमातृ ,,
३ औं चामुण्डामातृ ,,
३ अः महालक्ष्मीमातृ ,,

ततः चतुरस्रान्त्यरेखायां प्रथमरेखोक्तक्रमेण—



३ द्रां सर्वसंक्षोभिणीमुद्राशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।
३ द्रीं सर्वविद्राविणीमुद्राशक्ति ,,
३ क्लीं सर्वाकर्षिणीमुद्राशक्ति ,,
३ ब्लूं सर्ववशङ्करीमुद्राशक्ति ,,
३ सः सर्वोन्मादिनीमुद्राशक्ति ,,
३ क्रों सर्वमहाङ्कुशामुद्राशक्ति ,,
३ ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्ति ,,
३ ह्सौः सर्वबीजामुद्राशक्ति ,,
३ ऐं सर्वयोनिमुद्राशक्ति ,,
३ ह्स्रैं ह्स्क्लरीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्ति श्रीपादुकां पू० त० नमः ।

३ एताः प्रकटयोगिन्यः त्रैलोक्यमोहने चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः । (पुष्पाञ्जलिः)

अणिमासिद्धेः पुरतः—

३ अं आं सौः त्रिपुराचक्रेश्वरी श्रीपादुकां पू० त० नमः

३ अं *अणिमासिद्धिः ,,

३ द्रां सर्वसंक्षोभिणीमुद्राशक्ति ,,

३ द्रां इति सर्वसंक्षोभिणीमुद्रां प्रदर्श्य—

३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥

इति सामान्यार्घ्योदकेन देव्या वामहस्ते पूजां समर्प्य—

३ प्रकटयोगिनीमयूखायै प्रथमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । इति योनिमुद्रया प्रणमेत् ॥

## द्वितीयावरणम्

३ ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय नमः । (पुष्पाञ्जलिः)

श्वेतवर्णे सकारप्रकृतिक षोडशकलात्मके चन्द्रस्वरूपे स्रवदमृतरसे षोडशदलकमले देव्यग्रदलमारभ्य वामावर्तेन—



३ अं कामाकर्षिणी नित्याकलादेवी श्रीपादुकां पू० त० नमः

३ आं बुद्ध्याकर्षिणी नित्याकलादेवी ,,

३ इं अहङ्काराकर्षिणी नित्याकलादेवी ,,

३ ईं शब्दाकर्षिणी नित्याकलादेवी ,,

३ उं स्पर्शाकर्षिणी नित्याकलादेवी ,,

३ ऊं रूपाकर्षिणी नित्याकलादेवी ,,

३ ऋं रसाकर्षिणी नित्याकलादेवी ,,

---

* चक्रेश्वर्या दक्षे सिद्धिः, वामे मुद्रा । एवमुत्तरत्रापि ।

३ ॠं गन्धाकर्षिणी नित्याकलादेवी श्रीपादुकां पू०त० नमः
३ ऌं चित्ताकर्षिणी नित्याकलादेवी ,,
३ ॡं धैर्याकर्षिणी नित्याकलादेवी ,,
३ एं स्मृत्याकर्षिणी नित्याकलादेवी ,,
३ ऐं नामाकर्षिणी नित्याकलादेवी ,,
३ ओं बीजाकर्षिणी नित्याकलादेवी ,,
३ औं आत्माकर्षिणी नित्याकलादेवी ,,
३ अं अमृताकर्षिणी नित्याकलादेवी ,,
३ अः शरीराकर्षिणी नित्याकलादेवी ,,

३ एताः गुप्तयोगिन्यः सर्वाशापरिपूरके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। (पुष्पाञ्जलिः)

कामाकर्षिण्याः पुरतः—

३ ऐं क्लीं सौः त्रिपुरेशी चक्रेश्वरी श्रीपादुकां पू० त० नमः
३ लं लघिमासिद्धि ,,
३ द्रीं सर्वविद्राविणीमुद्राशक्ति ,,
३ द्रीं—इति सर्वविद्राविणीमुद्रां प्रदर्श्य—
३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥ इति पूजां समर्प्य—
३ गुप्तयोगिनीमयूखायै द्वितीयावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः। इति योनिमुद्रया प्रणमेत्।

## तृतीयावरणम्

३ ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय नमः। (पुष्पाञ्जलिः)

हकारप्रकृतिक—अष्टमूर्त्यात्मक-शिवाभिन्ने जपाकुसुममित्रे अष्टपत्रे श्रीदेव्याः पृष्ठदलमारभ्य पूर्वादिदिक्षु आग्नेयादिविदिक्षु च क्रमेण—

३ कं खं गं घं ङं अनङ्गकुसुमादेवी श्रीपादुकां पू० त० नमः
३ चं छं जं झं ञं अनङ्गमेखलादेवी „
३ टं ठं डं ढं णं अनङ्गमदनादेवी „
३ तं थं दं धं नं अनङ्गमदनातुरादेवी „
३ पं फं बं भं मं अनङ्गरेखादेवी „
३ यं रं लं वं अनङ्गवेगिनीदेवी „
३ शं षं सं हं अनङ्गाङ्कुशादेवी „
३ ळं क्षं अनङ्गमालिनीदेवी „

३ एताः गुप्ततरयोगिन्यः सर्वसंक्षोभणे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तुः नमः । ( पुष्पाञ्जलिः )

अनङ्गकुसुमायाः पुरतः—

३ ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वरी श्रीपादुकां पू० त० नमः
३ मं महिमासिद्धि „
३ क्लीं सर्वाकर्षिणीमुद्राशक्ति „
३ क्लीं—इति सर्वाकर्षिणीमुद्रां प्रदर्श्य—
३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ॥ इति पूजां समर्प्य—
३ गुप्ततरयोगिनीमयूखायै तृतीयावरणदेवतासहितायै
श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः ।
इति योनिमुद्रया प्रणमेत् ॥

## तुरीयावरणम्

३ हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय नमः । ( पुष्पाञ्जलिः )

ईकारप्रकृतिकचतुर्दशभुवनात्मक-महामायारूपे दाडिमीप्रसूनसहोदरे चतुर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन—



३ कं सर्वसंक्षोभिणीशक्ति श्रीपादुकां पू० त० नमः
३ खं सर्वविद्राविणीशक्ति ,,
३ गं सर्वाकर्षिणीशक्ति ,,
३ घं सर्वाह्लादिनीशक्ति ,,
३ ङं सर्वसम्मोहिनीशक्ति ,,
३ चं सर्वस्तम्भिनीशक्ति ,,
३ छं सर्वजृम्भिणीशक्ति ,,
३ जं सर्ववशङ्करीशक्ति श्रीपादुकां पू० त० नमः
३ झं सर्वरञ्जिनीशक्ति ,,
३ ञं सर्वोन्मादिनीशक्ति ,,
३ टं सर्वार्थसाधिनीशक्ति ,,
३ ठं सर्वसम्पत्तिपूरणीशक्ति ,,
३ डं सर्वमन्त्रमयीशक्ति ,,
३ ढं सर्वद्वन्द्वक्षयङ्करीशक्ति ,,

३ एताः सम्प्रदाययोगिन्यः सर्वसौभाग्यदायके चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः (पुष्पाञ्जलिः)। सर्वसंक्षोभिण्याः पुरतः—

३ हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वरी श्रीपादुकां पू० त० नमः
३ ईं ईशित्वसिद्धि ,,
३ ब्लूं सर्ववशङ्करीमुद्राशक्ति ,,
३ ब्लूं इति सर्ववशङ्करीमुद्रां प्रदर्श्य—
३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं तुरीयावरणार्चनम्॥ इति पूजां समर्प्य—
३ सम्प्रदाययोगिनीमयूखायै तुरीयावरणदेवतासहितायै
श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः।
इति योनिमुद्रया प्रणमेत्।

## पञ्चमावरणम्

३ ह्सैं ह्स्क्लीं ह्स्सौः सर्वार्थसाधकचक्राय नमः। (पुष्पाञ्जलिः)

एकारप्रकृतिकदशावतारात्मकविष्णुस्वरूपे प्रभापराभूतसिन्दूरे बहिर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन—



३ णं सर्वसिद्धिप्रदादेवी श्रीपादुकां पू० त० नमः
३ तं सर्वसम्पत्प्रदादेवी „
३ थं सर्वप्रियङ्करीदेवी „
३ दं सर्वमङ्गलकारिणीदेवी „
३ धं सर्वकामप्रदादेवी „
३ नं सर्वदुःखविमोचिनीदेवी श्रीपादुकां पू० त० नमः
३ पं सर्वमृत्युप्रशमनीदेवी „
३ फं सर्वविघ्ननिवारिणीदेवी „
३ बं सर्वाङ्गसुन्दरीदेवी „
३ भं सर्वसौभाग्यदायिनीदेवी „

३ एताः कुलोत्तीर्णयोगिन्यः सर्वार्थसाधके चक्रे समुद्राः ससिद्धयः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। (पुष्पाञ्जलिः) सर्वसिद्धिप्रदायाः पुरतः—

३ ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वरी श्रीपादुकां पू० त० नमः
३ वं वशित्वसिद्धि „
३ सः सर्वोन्मादिनीमुद्राशक्ति „
३ सः—इति सर्वोन्मादिनीमुद्रां प्रदर्श्य—
३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं पञ्चमावरणार्चनम् ॥ इति पूजां समर्प्य—
३ कुलोत्तीर्णयोगिनीमयूखायै पञ्चमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः।
इति योनिमुद्रया प्रणमेत् ॥

## षष्ठावरणम्

३ ह्रीं क्लीं ब्लें सर्वरक्षाचक्राय नमः। ( पुष्पाञ्जलिः )

रेफप्रकृतिक—दशकलात्मक-वैश्वानराभिन्ने जपासुमनसहचरे अन्तर्दशारे देव्यग्रकोणमारभ्य वामावर्तेन :—



३ मं सर्वज्ञादेवी श्रीपादुकां पू० त० नमः
३ यं सर्वशक्तिदेवी „
३ रं सर्वैश्वर्यप्रदादेवी „
३ लं सर्वज्ञानमयीदेवी „
३ वं सर्वव्याधिविनाशिनीदेवी „
३ शं सर्वाधारस्वरूपादेवी श्रीपादुकां पू० त० नमः
३ षं सर्वपापहरादेवी „
३ सं सर्वानन्दमयीदेवी „
३ हं सर्वरक्षास्वरूपिणीदेवी „
३ क्षं सर्वेप्सितफलप्रदादेवी „

३ एताः निगर्भयोगिन्यः सर्वरक्षाकरे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः । (पुष्पाञ्जलिः)

सर्वज्ञायाः पुरतः—

३ ह्रीं क्लीं ब्लें त्रिपुरमालिनीचक्रेश्वरी श्रीपादुकां पू० त० नमः
३ पं प्राकाम्यसिद्धि „
३ क्रों सर्वमहाङ्कुशामुद्राशक्ति „
३ क्रों—इति सर्वमहाङ्कुशामुद्रां प्रदर्श्य—
३ अभीष्टसिद्धि मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ॥ इति पूजां समर्प्य—
३ निगर्भयोगिनीमयूखायै षष्ठावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । इति योनिमुद्रया प्रणमेत् ॥

## सप्तमावरणम्

३ ह्रीं श्रीं सौः सर्वरोगहरचक्राय नमः (पुष्पाञ्जलिः)

ककारप्रकृतिक-अष्टमूर्त्यात्मक-कामेश्वरस्वरूपे पद्मरागरुचिरे अष्टारे देव्यग्रकोणमारभ्य वामावर्तेन—




३ अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ब्लूं वशिनी वाग्देवता श्रीपादुकां पू० त० नमः

३ कं खं गं घं ङं क्ल्ह्रीं कामेश्वरी वाग्देवता श्रीपादुकां पू० त० नमः
३ चं छं जं झं ञं न्व्लीं मोदिनी वाग्देवता ,,
३ टं ठं डं ढं णं य्लूं विमला वाग्देवता ,,
३ तं थं दं धं नं ज्म्रीं अरुणा वाग्देवता ,,
३ पं फं बं भं मं ह्स्ल्व्यूं जयिनी वाग्देवता ,,
३ यं रं लं वं झ्म्र्यूं सर्वेश्वरी वाग्देवता ,,
३ शं षं सं हं ळं क्षं क्ष्म्रीं कौलिनी वाग्देवता ,,

३ एताः रहस्ययोगिन्यः सर्वरोगहरे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः। ( पुष्पाञ्जलिः ) वशिन्याः पुरतः—

३ ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वरी श्रीपादुकां पू० त० नमः
३ भुं भुक्तिसिद्धि ,,
३ ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्ति ,,
३ ह्स्ख्फ्रें—इति सर्वखेचरीमुद्रां प्रदर्श्य—
३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ॥ इति पूजां समर्प्य—
३ रहस्ययोगिनीमयूखायै सप्तमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः। इति योनिमुद्रया प्रणमेत् ॥

## अष्टमावरणम्

मध्यत्र्यस्त्रस्य बहिः पश्चिमादिदिक्षु प्रादक्षिण्येन—



३ यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यः कामेश्वरीकामेश्वरबाणेभ्यो नमः । बाणशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ थं धं सर्वसम्मोहनाभ्यां कामेश्वरीकामेश्वरधनुर्भ्यां नमः । धनुःशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ह्रीं आं सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वरपाशाभ्यां नमः पाशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वरीकामेश्वराङ्कुशाभ्यां नमः । अङ्कुशशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः ।
इत्यायुधार्चनं विदध्यात् । ततः—

३ ह्स्रैं ह्स्क्लरीं ह्स्रौः सर्वसिद्धिप्रदचक्राय नमः । ( पुष्पाञ्जलिः )

नादप्रकृतिगुणत्रयप्रधानत्रिशक्तिरूपरेखात्रयात्मके बन्धूकपुष्पबन्धुकिरणे त्रिकोणे, अग्रदक्षवामकोणेषु बिन्दौ च क्रमेण—

३ ऐं क-५ अग्निचक्रे कामगिरिपीठे मित्रेशनाथ-नवयोनिचक्रात्मक-आत्मतत्व - सृष्टिकृत्य-जाग्रद्दशाधिष्ठायक-इच्छाशक्ति - वाग्भवात्मक - वागीश्वरीस्वरूप-रुद्रात्मशक्ति-महाकामेश्वरी-श्रीपादुकां पू० त० नमः ।

३ क्लीं ह-६ सूर्यचक्रे जालन्धरपीठे षष्ठीशनाथ-दशारद्वयचतुर्दशारचक्रात्मक विद्यातत्व-स्थितिकृत्य-स्वप्नदशाधिष्ठायक-ज्ञानशक्ति-कामराजात्मक-कामकलास्वरूप - विष्ण्वात्मशक्ति- महावज्रेश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः ।

३ सौः स-४ सोमचक्रे पूर्णगिरिपीठे उड्डीशनाथ-अष्टदलषोडशदलचतुरस्रचक्रात्मक - शिवतत्व - संहारकृत्य - सुषुप्तिदशाधिष्ठायक-क्रियाशक्ति—शक्तिबीजात्मक - परापरशक्तिस्वरूप - ब्रह्मात्मशक्ति - महाभगमालिनी श्रीपादुकां पूजयामि तर्पयामि नमः ।

३ ऐं क-५ क्लीं ह-६ सौः स-४ परब्रह्मचक्रे महोड्याणपीठे चर्यानन्दनाथ-समस्तचक्रात्मक - सपरिवारपरमतत्व - सृष्टिस्थितिसंहारकृत्य - तुरीयदशाधिष्ठायक - इच्छाज्ञानक्रियाशान्ताशक्ति - वाग्भवकामराजशक्तिबीजात्मक – परमशक्तिस्वरूप – परब्रह्मात्मशक्ति-श्रीमहात्रिपुरसुन्दरी श्रीपादुकां पूजयामि तर्पयामि नमः ।

३ एताः अतिरहस्ययोगिन्यः सर्वसिद्धिप्रदे चक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टाः सन्तु नमः । ( पुष्पाञ्जलिः ) महाकामेश्वर्याः पुरतः—

३ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिपुराम्बाचक्रेश्वरी श्रीपादुकां पू० त० नमः ।

३ इं इच्छासिद्धि „

३ ह्सौः—सर्वबीजमुद्राशक्ति „

३ ह्सौः—इति सर्वबीजमुद्रां प्रदर्श्य—

३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यमष्टमावरणार्चनम् ।। इति पूजां समर्प्य—

३ अतिरहस्ययोगिनीमयूखायै अष्टमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । योनिमुद्रया प्रणमेत् ।।

## नवमावरणम् ।

३ क-१५ सर्वानन्दमयचक्राय नमः । ( पुष्पाञ्जलिः )
बिन्दुभिन्नपरब्रह्मात्मके बिन्दुचक्रे—

३ 'मूलं' श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः । इति त्रिः सन्तर्प्य ।

३ एषा परापरातिरहस्ययोगिनी सर्वानन्दमये चक्रे समुद्रा ससिद्धिः सायुधा सशक्तिः सवाहना सपरिवारा सर्वोपचारैः सम्पूजिता सन्तर्पिता सन्तुष्टास्तु नमः । ( पुष्पाञ्जलिः ) महात्रिपुरसुन्दर्याः पुरतः—

३ 'पञ्चदशी' श्रीमहात्रिपुरसुन्दरीचक्रेश्वरी श्रीपादुकां पू० त० नमः ।

३ पं प्राप्तिसिद्धि „

३ ऐं सर्वयोनिमुद्राशक्ति „

३ ऐं—इति सर्वयोनिमुद्रां प्रदर्श्य*

३ अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।

भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।। इति पूजां समर्प्य—

---

* षोडश्युपासकानामेव—
३ हसकल हसकहल सकलह्रीं तुरीयाम्बा श्रीपादुकां पूजयामि तर्पयामि नमः । इति त्रिः संतर्प्य—

३　परापरातिरहस्ययोगिनीमयूखायै नवमावरणदेवतासहितायै श्रीललितामहात्रिपुरसुन्दरीपराभट्टारिकायै नमः । योनिमुद्रया प्रणमेत् ।

पञ्चपञ्चिकापूजा ।

विन्दुचक्रोपरि सिंहासनाकारेण पीठभावनां कृत्वा मध्ये वाय्वीशानाग्नि-निर्ऋतिकोणेषु च क्रमेण यजेत् ॥




१ पञ्च लक्ष्म्यः ।

३　मूलं । श्रीविद्यालक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः । (मध्ये)
३　श्रीं । लक्ष्मीलक्ष्म्यम्बाश्रीपादुकां पूजयामि तर्पयामि नमः । (वायव्ये)

---

३　सर्वानन्दमये चक्रे महोड्याणपीठे चर्यानन्दनाथत्मकतुरीयातीतदशाधिष्ठायक-शान्त्यतीतकलात्मक-प्रकाशविमर्शसामरस्यात्मक परब्रह्मस्वरूपिणी परामृतशक्तिः सर्वमन्त्रेश्वरी सर्वपीठेश्वरी सर्वयोगेश्वरी सर्ववागीश्वरी सर्वसिद्धेश्वरी सर्ववीरेश्वरी सकलजगदुत्पत्तिमातृका सचक्रा सदेवता सासना सायुधा सशक्तिः सवाहना सपरिवारा सचक्रेशिका परया अपरया परापरया सपर्यया सर्वोपचारैः सम्पूजिता सन्तर्पिता सन्तुष्टास्तु नमः । इति समष्ट्यञ्जलिं विधाय ।

३　सं सर्वकामसिद्धि श्रीपादुकां पूजयामि तर्पयामि नमः ।
३　ह्स्त्रैं ह्स्क्लरीं ह्स्त्रौः सर्वत्रिखण्डामुद्राशक्तिश्रीपादुकां पू० त० नमः ।
३　ह्स्त्रैं ह्स्क्लरीं ह्स्त्रौः सर्वत्रिखण्डामुद्रां प्रदर्श्य ।

३ ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः। महालक्ष्मीलक्ष्म्यम्बाश्रीपादुकां पू० त० नमः। ( ईशाने )

३ श्रीं ह्रीं क्लीं। त्रिशक्तिलक्ष्म्यम्बाश्रीपादुकां पू० त० नमः। (आग्नेये)

३. श्रीं सहकलह्रीं श्रीं। सर्वसाम्राज्यलक्ष्म्यम्बाश्रीपादुकां पू० त० नमः। ( नैर्ऋते )

## २ पञ्च कोशाम्बाः

३ मूलं। श्रीविद्याकोशाम्बाश्रीपादुकां पू० त० नमः। ( मध्ये )

३ ॐ ह्रीं हंसस्सोहं स्वाहा। परंज्योतिः—कोशाम्बाश्रीपादुकां पू० त० नमः। ( वायव्ये )

३ ॐ हंसः। परानिष्कलाकोशाम्बाश्रीपादुकां पू० त० नमः। (ईशाने)

३ हंसः। अजपाकोशाम्बाश्रीपादुकां पू० त० नमः। ( आग्नेये )

३ अं आं + ळं क्षं। मातृकाकोशाम्बाश्रीपादुकां पू० त० नमः। (नैर्ऋते)

## ३ पञ्च कल्पलताः

३ मूलं। श्रीविद्याकल्पलताम्बाश्रीपादुकां पू० त० नमः। ( मध्ये )

३ ह्रीं क्लीं ऐं ब्लूं स्त्रीं। ( पञ्चकामेश्वरी ) त्वरिताकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। ( वायव्ये )

३ ॐ ह्रीं ह्रां हसकलह्रीं ॐ सरस्वत्यै नमः ह्स्त्रैं। पारिजातेश्वरीकल्पलताम्बाश्रीपादुकां पूजयामि तर्पयामि नमः। ( ईशाने )

३ श्रीं ह्रीं क्लीं ऐं क्लीं सौः। ( कुमारी ) त्रिपुटाकल्पलताम्बाश्रीपादुकां पू० त० नमः। ( आग्नेये )

३ द्रां द्रीं क्लीं ब्लूं सः। पञ्चबाणेश्वरीकल्पलताम्बाश्रीपादुकां पू०त० नमः। ( नैर्ऋते )

## ४ पञ्च कामदुघाः

३ मूलं। श्रीविद्याकामदुघाम्बाश्रीपादुकां पू० त० नमः। ( मध्ये )

३ ॐ ह्रीं हंसः जुं संजीवनि जीवं प्राणग्रन्थिस्थं कुरु कुरु स्वाहा। अमृतपीठेश्वरीकामदुघाम्बाश्रीपादुकां पू० त० नमः। ( वायव्ये )

३ ऐं वद वद वाग्वादिनि ह्स्रैं क्लीं क्लिन्ने क्लेदिनि महाक्षोभं कुरु कुरु ह्स्क्ल्रीं सौः ॐ मोक्षं कुरु कुरु ह्स्रौः, सुधाकामदुघाम्बाश्रीपादुकां, पू० त० नमः । ( ईशाने )

३ ऐं ब्लूं झ्रौं जुं सः अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणी अमृतं स्रावय स्रावय स्वाहा । अमृतेश्वरीकामदुघाम्बाश्रीपादुकां पू० त० नमः । ( आग्नेये )

३ ॐ ह्रीं श्रीं क्लीं ॐ नमो भगवति माहेश्वरि अन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा । अन्नपूर्णाकामदुघाम्बाश्रीपादुकां पू० त० नमः । (नैर्ऋते)

५ पञ्च रत्नाम्बाः

३ मूलं । श्रीविद्यारत्नाम्बा श्रीपादुकां पू० त० नमः । ( मध्ये )

३ ज्झ्रीं महाचण्डे तेजःसङ्कर्षिणी कालमन्थाने हः । सिद्धलक्ष्मीरत्नाम्बा-श्रीपादुकां पू० त० नमः । ( वायव्ये )

३ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहरि सर्वसुखरञ्जनि क्लींह्रींश्रींसर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्ववशङ्करि सर्वलोकवशङ्करि त्रैलोक्यं मे वशमानय स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं । राजमातङ्गीश्वरीरत्नाम्बा-श्रीपादुकां पू० त० नमः । ( ईशाने )

३ श्रीं ह्रीं श्रीं । भुवनेश्वरीरत्नाम्बाश्रीपादुकां पू० त० नमः । (आग्नेये)

३ ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः रुन्धे रुन्धिनि नमः जम्भे जम्भिनि नमः मोहे मोहिनि नमः स्तम्भे स्तम्भिनि नमः सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ऐं ठः ठः ठः ठः हुं फट् स्वाहा । वाराहीरत्नाम्बाश्रीपादुकां पू० त० नमः । ( नैर्ऋते )

षड्दर्शनविद्या

३ तारे तुत्तारे तुरे स्वाहा । तारादेवताधिष्ठितबौद्धदर्शनश्रीपादुकां पू० त० नमः ।

३ 'गायत्री' परोरजसे सावदों । ब्रह्मदेवताधिष्ठितवैदिकदर्शनपादुकां पू० त० नमः ।

३ ॐ ह्रीं नमश्शिवाय । रुद्रदेवताधिष्ठितशैवदर्शनश्रीपादुकां पू० त० नमः

३ ॐ ह्रीं घृणिस्सूर्यं आदित्यों । सूर्यदेवताधिष्ठितसौरदर्शनश्रीपादुकां पू० त० नमः ।

३ ॐ नमो नारायणाय । विष्णुदेवताधिष्ठितवैष्णवदर्शनश्रीपादुकां पू०त० नमः ।

३ ॐश्रींह्रींश्रीं । भुवनेश्वरीदेवताधिष्ठितशाक्तदर्शनश्रीपादुकां पू०त० नमः

## षडाधारपूजा

३ सां हंसः मूलाधाराधिष्ठानदेवतायै साकिनीसहितगणनाथस्वरूपिण्यै नमः गणनाथस्वरूपिण्यम्बाश्रीपादुकां पू० त० नमः ।

३ कां सोहं स्वाधिष्ठानाधिष्ठानदेवतायै काकिनीसहितब्रह्मस्वरूपिण्यै नमः ब्रह्मस्वरूपिण्यम्बाश्रीपादुकां पू० त० नमः ।

३ लां हंसस्सोहं मणिपूरकाधिष्ठानदेवतायै लाकिनीसहितविष्णुस्वरूपिण्यै नमः । विष्णुस्वरूपिण्यम्बाश्रीपादुकां पू० त० नमः ।

३ रां हंसश्शिवस्सोहं अनाहताधिष्ठानदेवतायै राकिणीसहितसदाशिव-स्वरूपिण्यै नमः । सदाशिवस्वरूपिण्यम्बाश्रीदुकां पू० त० नमः ।

३ डां सोहं हंसश्शिवः विशुद्धयधिष्ठानदेवतायै डाकिनीसहितजीवेश्वर-स्वरूपिण्यै नमः । जीवेश्वरस्वरूपिण्यम्बाश्रीपादुकां पू० त० नमः ।

३ हां हंसश्शिवस्सोहं सोहं हंसश्शिवः आज्ञाधिष्ठानदेवतायै डाकिनी-सहितपरमात्मस्वरूपिण्यै नमः । परमात्मस्वरूपिण्यम्बाश्रीपादुकां पू० त० नमः ।

## आम्नायसमष्टिपूजा

३ ह्सैं ह्स्क्ल्रीं ह्स्रौ । पूर्वाम्नायसमयविद्येश्वर्युन्मोदिनीदेव्यम्बा श्रीपादुकां पू० त० नमः ।

३ ॐ ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः । दक्षिणाम्नायसमयविद्ये-श्वरीभोगिनीदेव्याम्बाश्रीपादुकां पू० त० नमः ।

३ हसैं हस्त्रीं हस्त्रौ हस्ख्फ्रें भगवत्यम्बे हसक्षमलवरयूं हस्ख्फ्रें अघोरमुखि छ्रां छ्रीं किणि किणि विच्चे हस्त्रौः हस्ख्फ्रें हस्त्रौः। पश्चिमाम्नायसमयविद्येश्वरीकुब्जिकादेव्यम्बाश्रीपादुकां पू० त० नमः।

३ हस्ख्फ्रें महाचण्डयोगीश्वरि कालिके फट्। उत्तराम्नायसमयविद्येश्वरीकालिकादेव्यम्बाश्रीपादुकां पू० त० नमः।*

दण्डनाथानामानि

| | | | |
|---|---|---|---|
| ॐ पञ्चम्यै | नमः | ॐ पोत्रिण्यै | नमः |
| दण्डनाथायै | ,, | शिवायै | ,, |
| सङ्केतायै | ,, | वार्ताल्यै | ,, |
| समयेश्वर्यै | ,, | महासेनायै | ,, |
| समयसङ्केतायै | ,, | आज्ञाचक्रेश्वर्यै | ,, |
| वाराह्यै | ,, | अरिघ्न्यै | ,, |

मन्त्रिणीनामानि

| | | | |
|---|---|---|---|
| ॐ संगीतयोगिन्यै | नमः | ॐ वीणावत्यै | नमः |
| श्यामायै | ,, | वैणिक्यै | ,, |
| श्यामलायै | ,, | मुद्रिण्यै | ,, |
| मन्त्रनायिकायै | ,, | प्रियकप्रियायै | ,, |
| मन्त्रिण्यै | ,, | नीपप्रियायै | ,, |
| सचिवेशान्यै | ,, | कदम्बेश्यै | ,, |
| प्रधानेश्यै | ,, | कदम्बवनवासिन्यै | ,, |
| शुकप्रियायै | ,, | सदामदायै | ,, |

---

* षोडश्युपासकानाम्।

३ मखपरयघच् महिचनडयङ् गंशफर् ऊर्ध्वाम्नायसमयविद्येश्वर्यम्बाश्रीपादुकां पू० त० नमः।

३ भगवति विच्चे महामाये मातङ्गिनि ब्लूं अनुत्तरवाग्वादिनि हस्ख्फ्रें हस्ख्फ्रें हस्त्रौः। अनुत्तरशाङ्कर्यम्बाश्रीपादुकां पू० त० नमः।

## ललितानामानि

| | | | |
|---|---|---|---|
| ॐ सिंहासनेश्यै | नमः | ॐ कामेश्यै | नमः |
| ललितायै | ,, | परमेश्वर्यै | ,, |
| महाराज्यै | ,, | कामराजप्रियायै | ,, |
| वराङ्कुशायै | ,, | कामकोटिकायै | ,, |
| चापिन्यै | ,, | चक्रवर्तिन्यै | ,, |
| त्रिपुरायै | ,, | महाविद्यायै | ,, |
| महात्रिपुरसुन्दर्यै | ,, | शिवायै | ,, |
| सुन्दरिचक्रनाथायै | ,, | अनङ्गवल्लभायै | ,, |
| सम्राज्यै | ,, | सर्वपाटलायै | ,, |
| चक्रिण्यै | ,, | कुलनाथायै | ,, |
| चक्रेश्वर्यै | ,, | आम्नायनाथायै | ,, |
| महादेव्यै | ,, | सर्वाम्नायनिवासिन्यै | ,, |

ॐ शृङ्गारनायिकायै नमः

(अथ यथावकाशं सहस्रनामावल्यादिना अर्चनं कुर्यात् ।)

अथ पुनरपि श्रीदेव्यै पूर्ववत् धूपदीपौ कल्पयित्वा सर्वसंक्षोभिण्यादि मुद्राः सबीजाः प्रदर्श्य, मूलेन त्रिवारं सन्तर्प्य महानैवेद्यं समर्पयेत् । यथा—श्रीदेव्यग्रे चतुरस्रमण्डलं सामान्योदकेन विधाय तत्र आधारोपरि स्थापितं सौवर्णरौप्य-कांस्यादिस्थालीचषकभरितं भक्ष्यभोज्यचोष्यलेह्यपेयात्मकं सद्रव्यशुध्यादि-रसवद्व्यञ्जनमञ्जुलं प्राज्यकपिलाज्यं दधिदुग्धमुग्धं यथासम्भवं वा नैवेद्यं विधाय ।

"स्विन्नं वामे आमं दक्षिणे निदध्यात्" इति श्यामारहस्ये दृष्टम् । सुन्दरीमहोदये तु—"देव्या वामे दीपो दक्षिणे नैवेद्यम्" इत्युक्तम् ।

'ऐं ह्रीं श्रीं मूलेन त्रिः प्रोक्ष्य, वं इति धेनुमुद्रया अमृतीकृत्य, सप्तवारं मूलेनाभिमन्त्र्य, पूर्ववत् आपोशनं कल्पयित्वा ।

हेमपात्रगतं देवि परमान्नं सुसंस्कृतम् ।
पञ्चधा षड्रसोपेतं गृहाण परेश्वरि ॥

इति प्रार्थ्य, पूर्वोक्तनैवेद्योपचारमन्त्रेण निवेद्य, तत्तन्मुद्राविधानपूर्वकं पञ्चप्राणाहुतीः कल्पयेत् । यथा—

ऐं ह्रीं श्रीं, ऐं प्राणाय स्वाहा, ३ क्लीं अपानाय स्वाहा, ३ सौः व्यानाय स्वाहा, ३ ऐंक्लीं उदानाय स्वाहा, ३ ऐं क्लीं सौः समानाय स्वाहा । ब्रह्मणे स्वाहा । ततः—

३ क ए ई ल ह्रीं नमः आत्मतत्त्वव्यापिनी श्रीललिता तृप्यतु ।

३ ह स क ह ल ह्रीं नमः विद्यातत्त्वव्यापिनी श्रीललिता तृप्यतु ।

३ क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं नमः सर्वतत्त्वव्यापिनी श्रीललिता तृप्यतु ।

इति किञ्चित्, किञ्चित् सामान्यार्घ्योदकं समर्पयेत् ।

पुनः निमीलितनयनः क्षणमवस्थाय, श्रीदेवीं भुक्तवतीं विभाव्य, पूर्ववद् उपचारमन्त्रैः पानीयोत्तरापोशनकरप्रक्षालनगण्डूषपाद्यादीन् कल्पयित्वा, भोजनपात्रं नैर्ऋत्यां निरस्य, अस्त्रेण स्थलं संशोध्य, ततः पुनः प्राग्वदाचमनीयकर्पूरवीटिकादक्षिणाकर्पूरनीराजनानि दत्वा, सुवर्णादिभाजनलिखितं कुङ्कुमपङ्करेखात्मकम् अष्टदलकमलकर्णिकास्थापितमणिमयचषकपूरितं प्रथमं प्रज्वाल्य पुष्पाक्षतैरभ्यर्च्य, उपचारमन्त्रपूर्वकम्—

अन्तस्तेजो बहिस्तेज एकीकृत्यामितप्रभम् ।
त्रिधा दीपं परिभ्राम्य कुलदीपं निवेदये ॥

इति चतुर्दशधा नवधा त्रिधा वा परिभ्राम्य दक्षभागे स्थापयेत् ।

अथाञ्जलौ पुष्पाण्यादाय मन्त्रपुष्पम् । यथा—

मन्त्रपुष्पम्

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्यन्दिनि ।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥

इति उक्त्वा पुष्पाञ्जलिं समर्पयेत् ।

इत्येते कतिचिच्चतुष्षष्ट्युपचारातिरिक्ता उपचारास्तु पूर्ववत् धूपदीपेतिसूत्रगतेनादिपदेन गृह्यन्ते ।

## कामकलाध्यानम्

अथ विन्दुना मुखं बिन्दुद्वयेन स्तनौ सपरार्धेन योनिरिति सानुस्वारे तुरीयस्वरे कामकलात्मिकां ध्यात्वा, सौः इति देवीशक्तिबीजं श्रीदेव्या हृदयत्वेन भावयेत् ।

## होमस्य कृताकृतत्वम्

अथ होमः । स च "यद्यग्निकार्यसम्पत्तिः" इति सूत्रगतेन यदिशब्देन कृताकृतः सूचितः । तस्य च करणपक्षे तदितिकर्तव्यता होमप्रकरणाद् ज्ञातव्या । तत्र महाव्याहृतिहोमादर्वागेव बलिदानम् । होमाकरणपक्षे तु बलिदानमात्रम् ।

## बलिदानविधिः

यथा—देव्या दक्षभागे सामान्योदकेन त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य, ३ ऐं व्यापकमण्डलाय नमः इति गन्धाक्षतैरभ्यर्च्य, अर्घभक्तपूरितोदकं सक्षीरादित्रयं पात्रं तत्र विन्यस्य ।

३ ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहा, इति मन्त्रं त्रिः पठित्वा दक्षकरार्पितं वामकरतत्त्वमुद्रास्पृष्टं सलिलं बल्युपरि दत्वा वाम पार्ष्णिघातकरास्फोटौ समुदञ्चितवक्त्रो बाणमुद्रया बलिं भूतैः ग्रासितं विभाव्य, प्रणमेत् ।

इति बलिदानविधिः ।

## प्रदक्षिणा

अजेशशक्तिगणपभास्कराणां क्रमादिमाः ।
वेदार्थचन्द्रवह्न्यद्रिसंख्याः स्युः सर्वसिद्धये ॥

प्रदक्षिणनमस्कारानन्तरं जपप्रकरणोक्तविधिना जपं निर्वर्त्य स्तुवीत—

## पुष्पाञ्जलि स्तोत्रम्

शिवे शिवसुशीतलामृततरङ्गगन्धोल्लस-
न्नवावरणदेवते नवनवामृतस्यन्दिनि ।
गुरुक्रमपुरस्कृते गुणशरीरनित्योज्ज्वले
षडङ्गपरिवारिते कलित एष पुष्पाञ्जलिः ॥

समस्तमुनियक्षकिम्पुरुषसिद्धविद्याधर-
गुहासुरसुराप्सरोगणमुखैर्गणैः सेविते ।
निवृत्तितिलकाम्बरप्रकृतिशान्तिविद्याकला-
कलापमधुराकृते कलित एष पुष्पाञ्जलिः ॥

त्रिवेदकृतविग्रहे त्रिविधकृत्यसन्धायिनि
त्रिरूपसमवायिनि त्रिपुरमार्गसञ्चारिणि ।
त्रिलोचनकुटुम्बिनि त्रिगुणसंविदुद्यत्पदे
त्रयि त्रिपुरसुन्दरि त्रिजगदीशि पुष्पाञ्जलिः ॥

पुरन्दरजलाधिपान्तककुबेररक्षोहर-
प्रभञ्जनधनञ्जयप्रभृतिवन्दनानन्दिते ।
प्रवालपदपीठिकानिकटनित्यवर्तिस्वभू-
विरिञ्चिविहितस्तुते विहित एष पुष्पाञ्जलिः ॥

यदानतिबलादलङ्कृतिरुदेति विद्यावय-
स्तपोद्रविणसौरभाकृतिर्क्षविहवसंविन्मयी ।
जरामरणजन्मजं भयमपैति तस्यै समा-
हिताखिलसमीहितप्रसवभूमि तुभ्यं नमः ॥

निरावरणसंविदुद्भ्रमपरास्तभेदोल्लस-
त्पदास्पदचिदेकतावरशरीरिणि स्वैरिणि ।
रसायनतरङ्गिणीरुचितरङ्गसञ्चारिणि
प्रकामपरिपूरणि प्रसृत एष पुष्पाञ्जलिः ॥

तरङ्गयति सम्पदं तदनु संहरत्यापदं
सुखं वितरति श्रियं परिचिनोति हन्ति द्विषः ।
क्षिणोति दुरितानि यत्प्रणतिरम्ब तस्यै सदा
शिवङ्करि शिवे परे शिवपुरन्ध्रि तुभ्यं नमः ॥

त्वमेव जननी पिता त्वमथ बान्धवस्त्वं सखा
त्वमायुरपरं त्वमाभरणमात्मनस्त्वं कला ।
त्वमेव वपुषःस्थितिस्त्वमखिलायतिस्त्वं गुरुः
प्रसीद परमेश्वरि प्रणतिपात्रि तुभ्यं नमः ॥

कञ्जासनादिसुरवृन्दलसत्किरीट
कोटिप्रघर्षणसमुज्ज्वलदङ्घ्रिपीठे ।
त्वामेव यामि शरणं विगतान्यभावं
दीनं विलोकय दयार्द्रविलोचनेन ॥

महामन्त्रराजान्तबीजं पराख्यं स्वतो न्यस्तबिन्दुं स्वयं न्यस्तहार्दम् ।
भवद्वक्त्रवक्षोजगुह्याभिधानं स्वरूपं सकृद्भावयेत् स त्वमेव ॥
तथान्ये विकल्पेषु निर्विण्णचित्तास्तदेकं समाधाय बिन्दुत्रयन्ते ।
परानन्दसन्धानसिन्धौ निमग्नाः पुनर्गर्भरन्ध्रं न पश्यन्ति धीराः ॥

श्रीललितामहात्रिपुरसुन्दर्यै नमः पुष्पाञ्जलिं समर्पयामि ।

## कल्याणवृष्टिस्तोत्रम्

कल्याणवृष्टिभिरिवामृतपूरिताभि-
र्लक्ष्मी स्वयम्वरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पादसरोजमूले
नाकारि किं मनसि भक्तिमतां जनानाम् ॥१॥

एतावदेव जननि स्पृहणीयमास्ते
त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे ।
सान्निध्यमुद्यदरुणायतसोदरस्य
त्वद्विग्रहस्य सुधया परयाऽऽप्लुतस्य ॥२॥

ईशित्वभावकलुषाः कतिनाम सन्ति
ब्रह्मादयः प्रतियुगं प्रलयाभिभूताः ।
एकः स एव जननि स्थिरसिद्धिरास्ते
यः पादयोस्तव सकृत् प्रणतिं करोति ॥३॥

लब्ध्वा सकृत् त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभावसुभगास्त्वयि भक्तिभाजः
सम्मोहयन्ति तरुणीर्भुवनत्रयेषु ॥४॥

ह्रीङ्कारमेव तव नाम गृणन्ति वेदाः
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
यत्संस्मृतौ यमभटादिभयं विहाय
दीव्यन्ति नन्दनवने सह लोकपालैः ॥५॥

हन्तुः पुरामधिगलं परिपूर्यमाणः
क्रूरः कथन्नु भविता गरलस्य वेगः ।
आश्वासनाय किल मातरिदं तवार्धं
देहस्य शश्वदमृताप्लुतशीतलस्य ॥६॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किञ्च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च वसुधां महतीं ददाति ॥७॥

कल्पद्रुमैरभिमतप्रतिपादनेषु
कारुण्यवारिधिभिरम्ब भवत्कटाक्षैः ।
आलोकय त्रिपुरसुन्दरि मामनाथं
त्वय्येव भक्तिभरितं त्वयि दत्तदृष्टिम् ॥८॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
भक्तिं वहन्ति किल पामरदैवतेषु ।
त्वामेव देवि मनसा वचसा स्मरामि
त्वामेव नौमि शरणं जगति त्वमेव ॥९॥

लक्ष्येषु सत्स्वपि तवाक्षिविलोकनाना-
मालोकय त्रिपुरसुन्दरि मां कथञ्चित् ॥
नूनं मयापि सदृशं करुणैकपात्रं
जातो जनिष्यति जनो न च जायते च ॥१०॥

ह्रीं ह्रीमिति प्रतिदिनं जपतां जनानां
किं नाम दुर्लभमिह त्रिपुराधिवासे ।
मालाकिरीटमदवारणमाननीयां-
स्तान् सेवते वसुमती स्वयमेव लक्ष्मीः ॥११॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि
साम्राज्यदानकुशलानि सरोरुहाक्षि ।
त्वद्वन्दनानि दुरितौघहरोद्यतानि
मामेव मातरनिशं कलयन्तु नान्यम् ॥१२॥

कल्पोपसंहरणकल्पितताण्डवस्य
देवस्य खण्डपरशोः परमेश्वरस्य ।
पाशाङ्कुशैक्षवशरासनपुष्पबाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥१३॥

लग्नं सदा भवतु मातरिदं तवार्धं
तेजः परं बहुलकुङ्कुमपङ्कशोणम् ।
भास्वत्किरीटममृतांशुकलावतंसं
मध्ये त्रिकोणमुदितं परमामृतार्द्रम् ॥१४॥

ह्रींकारमेव तव धाम तदेव रूपं
त्वन्नाम सुन्दरि सरोजनिवासमूले ।
त्वत्तेजसा परिणतं जगदादिमूलं
सङ्गं तनोतु सरसीरुहसङ्गमस्य ॥१५॥

ह्रींकारत्रयसम्पुटेन महता मन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित् ।
तस्य क्षोणिभुजो भवन्ति वशगाः लक्ष्मीश्चिरस्थायिनी
वाणीनिर्मलसूक्तिभारभरिता जागर्ति दीर्घं वयः ॥१६॥

## सर्वसिद्धिकृत् स्तोत्रम्

ॐ गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥१॥

प्रणमामि महादेवीं मातृकां परमेश्वरीम् ।
कालहल्लोहलोल्लोलकलनाशमकारिणीम् ॥२॥

यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।
रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥३॥

यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम् ।
वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम् ॥४॥

यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम् ।
ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम् ॥५॥

यदेकादशमाधारं बीजं कोणत्रयोद्भवम् ।
ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥६॥

अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम् ।
ज्येष्ठाङ्गबाहुहृत्पृष्ठकटिपादनिवासिनीम् ॥७॥

तामीकाराक्षरोद्धारां सारात् सारां परात् पराम् ।
प्रणमामि महादेवीं परमानन्दरूपिणीम् ॥८॥

अद्यापि यस्या जानन्ति न मनागपि देवताः ।
केयं कस्मात् क्व केनेति सरूपारूपभावनाम् ॥९॥

वन्दे तामहमक्षय्यां क्षकाराक्षररूपिणीम् ।
देवीं कुलकलोल्लासप्रोल्लसन्तीं परां शिवाम् ॥१०॥

वर्गानुक्रमयोगेन यस्यां मात्रष्टकं स्थितम् ।
वन्दे तामष्टवर्गोत्थमहासिद्ध्यष्टकेश्वरीम् ॥११॥

कामपूर्णजकाराख्यश्रीपीठान्तर्निवासिनीम् ।
चतुराज्ञाकोशमूलां नौमि श्रीत्रिपुरामहम् ॥१२॥

इति द्वादशभिः श्लोकैः स्तवनं सर्वसिद्धिकृत् ।
देव्यास्त्वखण्डरूपायाः स्तवनं तव तथ्यतः ॥

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥

पिता माता भ्राता गुरुरथ सुहृद्बान्धवजनः
प्रभुस्तीर्थं कर्माविकलमिह चामुत्र च हितम् ।
विशुद्धा विद्या वा पदमपि च तत्प्राप्यमसि मे
त्वमेव श्रीमातः स्वपिमि गतशङ्कः सुखतमः ॥
दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥
हे सद्रूपिणि हे चिदंचिरुदये हे कामराजप्रिये
हे भण्डासुरहन्त्रि हेऽद्भुतनिधे हेऽनङ्गसञ्जीविनि ।
हे विश्वप्रसवित्रि हे सकरुणे हे दीनरक्षामणे
हे श्रीमल्ललिताम्ब हे परशिवे मां पाहि डिम्भं निजम् ॥
नमो हेमाद्रिस्थे शिवसति नमः श्रीपुरगते
नमः पद्माटव्यां कुतुकिनि नमो रत्नगृहगे ।
नमः श्रीचक्रस्थेऽखिलमयि नमो बिन्दुनिलये
नमः कामेशाङ्कस्थितिमति नमस्तेऽम्ब ललिते ॥
जय जय जगदम्ब भक्तवश्ये
जय जय सान्द्रकृपावशान्तरङ्गे ।
जय जय निखिलार्थदानशौण्डे
जय जय हे ललिताम्बचित्सुखाब्धे ॥
षडङ्गदेवतां नित्यां दिव्याद्योघत्रयीगुरून् ।
नमाम्यायुधदेवीश्च शक्तीश्चावरणस्थिताः ॥
अमुकानन्दनाथाय मम श्रीगुरवे नमः ॥
अमुकानन्दनाथाय गुरवे परमाय मे ॥
अमुकानन्दनाथाय गुरवे परमेष्ठिने ॥
यदिदं श्रीगुरुस्तोत्रं स्वस्वरूपोपलक्षणम् ॥

बालभावानुसारेण ममेदं हि विचेष्टितम् ॥
मातृवात्सल्यसदृशं त्वया देवि विधीयताम् ॥

एवमादिभिरन्याभिश्च यथाऽवकाशं स्तुतिभिरखिललोकमातरमभिष्टुत्य शक्तिं पूजयेत् ।

## सुवासिनीपूजनम्

यथा प्राङ्निमन्त्रितां गौरीरूपिणीं दीक्षितां सुवासिनीं प्रक्षालितपादामासन उपवेशयेत् । सा चेददीक्षिता तदा ऐं ह्रीं श्रीं ऐं क्लीं सौः त्रिपुरायै नमः इमां शक्तिं पवित्रीकुरु मम शक्तिं कुरु स्वाहा, इत्यभिषेकमन्त्रपूर्वकं सामान्यसलिलेन त्रिः शक्तिं सम्प्रोक्ष्य ३ ॐ शान्तिरस्तु शिवञ्चास्तु प्रणश्यत्वशुभञ्च यत् यत एवागतं पापं तत्रैव प्रतिगच्छतु, इत्युच्चार्य तस्याः कर्णे हृल्लेखां जपेत् । अथ तां देवतारूपां विभाव्य ३ ऐं क्लीं सौ शक्त्यै अमुकं समर्पयामि इति मन्त्रेण हरिद्राकुङ्कुमचन्दनपट्टवासः पुष्पधूपदीपनैवेद्यताम्बूलानि वसंनाभरणानि च दद्यात् । समस्तप्रकटयोगिनीत्यादिसमष्टिमन्त्रेण श्रीदेव्यै आवरणदेवताभ्यश्च दत्तपुष्पाञ्जल्याः तस्याः करे विशेषार्घ्यादमृतं पात्रान्तरे कृत्वा समर्पयेत् । साप्युत्थाय तदादाय शिरसि गुरुपादुकामन्त्रेण गुरुं त्रिरिष्ट्वा हृदि देवीञ्च सन्तर्प्य मूलेन, गुर्वाज्ञां गृहीत्वा मूलान्ते सर्वंतत्त्वं शोधयामि नमः स्वाहा, इति मन्त्रेण सर्वंतत्त्वं संशोधयेत् । ततश्च तत्स्वीकुर्य्यात् । पश्चात्तां भोजयित्वा ताम्बूलदक्षिणादिभिः सन्तर्प्य विसृजेत् ।

## तत्त्वशोधनम्

३ क-५ प्रकृत्यहङ्कारबुद्धिमनस्श्रोत्रत्वक्चक्षुः जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवह्निसलिलभूम्यात्मना अं''''अः ३ क-५ आत्मतत्त्वेन आणवमलशोधनार्थं स्थूलदेहं परिशोधयामि जुहोमि स्वाहा । आत्मा मे शुध्यतां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ।

३ ह-६ मायाकलाऽविद्यारागकालनियतिपुरुषात्मना कं''''मं ३ ह-६ विद्यातत्त्वेन मायिकमलशोधनार्थं सूक्ष्मदेहं परिशोधयामि जुहोमि स्वाहा । अन्तरात्मा मे शुध्यतां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ।

३ स—४ शिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना यं....क्षं शिवतत्त्वेन कार्मिकमलशोधनार्थं कारणदेहं परिशोधयामि जुहोमि स्वाहा। परमात्मा मे शुद्ध्यतां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा।

३ 'मूलं' प्रकृत्यहङ्कारबुद्धिमनस्श्रोत्रत्वक्चक्षुः जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवायुवन्हिसलिलभूमिमायाकलाऽविद्यारागकालनियतिपुरुषशिवशक्तिसदाशिवेश्वरशुद्धविद्यात्मना अं आं....ळंक्षं 'मूलं' सर्वतत्वेन सर्वदेहं सर्वदेहाभिमानिनं जीवात्मानं परिशोधयामि जुहोमि स्वाहा। ज्ञानात्मा मे शुद्ध्यतां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा।*

३ आर्द्रं ज्वलति ज्योतिरहमस्मि। ज्योतिर्ज्वलति ब्रह्माहमस्मि। योऽहमस्मि ब्रह्माहमस्मि। अहमस्मि ब्रह्माहमस्मि। अहमेवाहं मां जुहोमि स्वाहा।

इति (गुरौ सन्निहिते होष्यामि इति सम्प्रार्थ्य गुरोरनुज्ञां लब्ध्वा)चिदग्नौ होमबुद्ध्या जुहुयात्। ततः पात्रं प्रक्षाल्य तत्र सुवर्णपुष्पाक्षतान्निक्षिप्य।

३ देवनाथ गुरो स्वामिन् देशिक स्वात्मनायक।
त्राहि त्राहि कृपासिन्धो पात्रं पूर्णतरं कुरु॥

इति गुरवे समर्पयेत्। असन्निहिते गुरौ स्वशिरसि पात्रं निधाय आत्मपात्रमण्डले निक्षिपेत्।

## देवतोद्वासनम्

ततः सामान्यार्घ्योदकात् किञ्चिदादाय—

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।
तत् सर्वं कृपया देवि गृहाणाराधनं मम॥

इति देव्या वामहस्ते पूजां समर्प्य शङ्खमुद्धृत्य देव्युपरि त्रिः परिभ्राम्य तज्जलं हस्ते समादाय सामयिकानात्मानञ्च 'मूलेन' प्रोक्ष्य शङ्खं प्रक्षाल्य निदध्यात्। ततो मूलेन तीर्थनिर्माल्ये स्वीकृत्य,

---

* षोडश्युपासकानां पञ्चमपात्रेण—

३ 'मूलं' पूर्णमद पूर्णमिदं पूर्णात्पूर्णमुदच्यते।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥

ज्ञानतोऽज्ञानतो वाऽपि यन्मयाऽऽचरितं शिवे ।
तव कृत्यमिति ज्ञात्वा क्षमस्व परमेश्वरि ॥

इति क्षमाप्य सर्वासामावरणदेवतानां श्रीदेव्यङ्गे विलयं विभाव्य, खेचरीं बद्ध्वोद्वास्य तेजोरूपेण परिणतां श्रीदेवीं पूर्ववत् हृदयं नीत्वा तत्र च मूर्ति पञ्चधोपचर्यं पुनरात्माभिन्नसंविद्रूपेण विभावयेदिति विसर्जनम् । ततः शान्तिस्तवः ॥

सम्पूजकानां परिपालकानां यतेन्द्रियाणाञ्च तपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्ति भगवान् कुलेशः ॥

नन्दन्तु साधककुलान्यणिमादिसिद्धाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु काऽपि ममाऽप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥

शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥

इत्यादि शान्तिश्लोकान् पठित्वा, विशेषार्घ्यविसर्जनं कुर्यात् ।

विशेषार्घ्यपात्रं मूलेनामस्तकमुद्धृत्य तत् क्षीरं पात्रान्तरेणादाय "आर्द्रं ज्वलति ज्योतिरहमस्मि । ज्योतिर्ज्वलति ब्रह्मामस्मि । योऽहमस्मि ब्रह्माहमस्मि । अहमस्मि ब्रह्माहमस्मि । अहमेवाहं मां जुहोमि स्वाहा" इति मन्त्रेण आत्मनः कुण्डलिन्यग्नौ हुत्वा शेषं प्रियशिष्याय दत्वा तत्पात्रमन्यानि च हविश्शेषप्रतिपत्तिपात्राणि प्रक्षाल्याग्नौ प्रताप्यावस्थापयेत् ।

अथ यथाशक्ति ब्राह्मणान् सुवासिनीश्च भोजयित्वा, स्वयमपि भुञ्जीत । इति नित्यकर्मविधिः ॥

## श्रीचक्रे त्रिवृत्ताचंनम्

सम्प्रदायविशेषज्ञानां रीत्या हयग्रीवसम्प्रदाये श्रीचक्रे वृत्तत्रयं नोल्लिख्यते । आनन्दभैरवसम्प्रदाये वृत्तत्रये लिखितेऽपि तत्रार्चनं न भवति । श्रीदक्षिणामूर्तिसम्प्रदाये वृत्तत्रयमुल्लिख्यते पूज्यते च ।

तद्यथा

ॐ ऐं ह्रीं श्रीं त्रिवर्गसाधकचक्राय नमः। संहारक्रमेण शुक्लारुण-कृष्णवर्णरेखात्रयस्य मायावीजप्रकृतिकस्य गुणप्रकृतिपरादिवागात्मकस्य प्रथमवृत्तरेखायां देव्यग्रमारभ्याप्रादक्षिण्येन।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| (१) | ॐ ऐं ह्रीं श्रीं | | कं कालरात्रि | श्रीपादुकां पूजयामि | | | । |
| (२) | ,, | ,, | खं खण्डिता | ,, | ,, | ,, | । |
| (३) | ,, | ,, | गं गायत्री | ,, | ,, | ,, | । |
| (४) | ,, | ,, | घं घण्टार्कार्षिणी | ,, | ,, | ,, | । |
| (५) | ,, | ,, | ङं ङार्णा | ,, | ,, | ,, | । |
| (६) | ,, | ,, | चं चण्डा | ,, | ,, | ,, | । |
| (७) | ,, | ,, | छं छाया | ,, | ,, | ,, | । |
| (८) | ,, | ,, | जं जया | ,, | ,, | ,, | । |
| (९) | ,, | ,, | झं झङ्कारिणी | ,, | ,, | ,, | । |
| (१०) | ,, | ,, | ञं ज्ञानरूपा | ,, | ,, | ,, | । |
| (११) | ,, | ,, | टं टङ्कहस्ता | ,, | ,, | ,, | । |
| (१२) | ,, | ,, | ठं ठङ्कारिणी | ,, | ,, | ,, | । |
| (१३) | ,, | ,, | डं डामरी | ,, | ,, | ,, | । |
| (१४) | ,, | ,, | ढं ढङ्कारिणी | ,, | ,, | ,, | । |
| (१५) | ,, | ,, | णं णार्णा | ,, | ,, | ,, | । |
| (१६) | ,, | ,, | तं तामसी | ,, | ,, | ,, | । |
| (१७) | ,, | ,, | थं स्थाण्वी | ,, | ,, | ,, | । |
| (१८) | ,, | ,, | दं दाक्षायणी | ,, | ,, | ,, | । |
| (१९) | ,, | ,, | धं धात्री | ,, | ,, | ,, | । |
| (२०) | ,, | ,, | नं नारी | ,, | ,, | ,, | । |
| (२१) | ,, | ,, | पं पार्वती | ,, | ,, | ,, | । |
| (२२) | ,, | ,, | फं फट्कारिणी | ,, | ,, | ,, | । |

| | | | | |
|---|---|---|---|---|
| (२३) | ॐ ऐं ह्रीं श्रीं | बं बन्धिनी | श्रीपादुकां पूजयामि । | |
| (२४) | ,, ,, | भं भद्रकाली | ,, ,, ,, । | |
| (२५) | ,, ,, | मं महामाया | ,, ,, ,, । | |
| (२६) | ,, ,, | यं यशस्विनी | ,, ,, ,, । | |
| (२७) | ,, ,, | रं रक्ता | ,, ,, ,, । | |
| (२८) | ,, ,, | लं लम्बोष्ठी | ,, ,, ,, । | |
| (२९) | ,, ,, | वं वरदा | ,, ,, ,, । | |
| (३०) | ,, ,, | शं श्री | ,, ,, ,, । | |
| (३१) | ,, ,, | षं षण्ढा | ,, ,, ,, । | |
| (३२) | ,, ,, | सं सरस्वती | ,, ,, ,, । | |
| (३३) | ,, ,, | हं हंसवती | ,, ,, ,, । | |
| (३४) | ,, ,, | क्षं क्षमावती | ,, ,, ,, । | |

द्वितीयवृत्तरेखायाम् अप्रादक्षिण्यक्रमेण—

| | | | |
|---|---|---|---|
| (१) | ॐ ऐं ह्रीं श्रीं | अं अमृता | श्रीपादुकां पूजयामि । |
| (२) | ,, ,, | आं आकर्षिणी | ,, ,, ,, । |
| (३) | ,, ,, | इं इन्द्राणी | ,, ,, ,, । |
| (४) | ,, ,, | ईं ईशानी | ,, ,, ,, । |
| (५) | ,, ,, | उं उमा | ,, ,, ,, । |
| (६) | ,, ,, | ऊं ऊर्ध्वकेशी | ,, ,, ,, । |
| (७) | ,, ,, | ऋं ऋद्धिदा | ,, ,, ,, । |
| (८) | ,, ,, | ॠं ॠकारा | ,, ,, ,, । |
| (९) | ,, ,, | ऌं ऌकारा | ,, ,, ,, । |
| (१०) | ,, ,, | ॡं ॡकारा | ,, ,, ,, । |
| (११) | ,, ,, | एं एकपदा | ,, ,, ,, । |
| (१२) | ,, ,, | ऐं ऐश्वर्यात्मिका | ,, ,, ,, । |
| (१३) | ,, ,, | ओं ओङ्कारा | ,, ,, ,, । |

(१४) ॐ ऐं ह्रीं श्रीं औं औषधि श्रीपादुकां पूजयामि ।
(१५) ,, ,, अं अम्बिका ,, ,, ,, ।
(१६) ,, ,, अः अक्षरा ,, ,, ,, ।

तृतीयवृत्तरेखायामप्रादक्षिण्यक्रमेण—

(१) ॐ ऐं ह्रीं श्रीं अं कामेश्वरी ,, ,, ,, ।
(२) ,, ,, आं भगमालिनी ,, ,, ,, ।
(३) ,, ,, इं नित्यक्लिन्ना ,, ,, ,, ।
(४) ,, ,, ईं भेरुण्डा ,, ,, ,, ।
(५) ,, ,, उं वह्निवासिनी ,, ,, ,, ।
(६) ,, ,, ऊं महावज्रेश्वरी ,, ,, ,, ।
(७) ,, ,, ऋं शिवदूती ,, ,, ,, ।
(८) ,, ,, ॠं त्वरिता ,, ,, ,, ।
(९) ,, ,, ऌं कुलसुन्दरी ,, ,, ,, ।
(१०) ,, ,, ॡं नित्या ,, ,, ,, ।
(११) ,, ,, एं नीलपताका ,, ,, ,, ।
(१२) ,, ,, ऐं विजया ,, ,, ,, ।
(१३) ,, ,, ओं सर्वमङ्गला ,, ,, ,, ।
(१४) ,, ,, औं ज्वालामालिनी ,, ,, ,, ।
(१५) ,, ,, अं चित्रा ,, ,, ,, ।
(१६) ,, ,, अः ललितामहानित्या ,, ,, ,, ।
(१७) ,, ,, कामेश्वरी ,, ,, ,, ।

एता मातृकायोगिन्यः त्रिवर्गसाधकचक्रे समुद्राः ससिद्धयः सायुधाः सशक्तयः सवाहनाः सपरिवाराः सर्वोपचारैः सम्पूजिताः सन्तर्पिताः सन्तुष्टा सन्त्विति तासां समष्ट्यर्चनं विधाय कालरात्र्याः पुरतः ऐं ह्रीं श्रीं त्रिपुरेशिनी-चक्रेश्वरी श्रीपादुकां पूजयामि तर्पयामि नमः। गं गरिमासिद्धि श्रीपादुकां पूजयामि तर्पयामि नमः। ऐं महायोनिमुद्राशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः। ऐं महायोनिमुद्रां प्रदर्श्य—

'अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ॥'

एतद्रीत्या सर्वाशापरिपूरकचक्रे तृतीयावरणम्। तथा च दशावरणानि सम्पद्यन्ते।

अन्तश्चक्रन्यासेऽपि—

ॐ ऐं ह्रीं श्रीं त्रिवर्गसाधकचक्राधिष्ठात्र्यै कालरात्र्यादिसहितमातृका योगिनीरूपायै त्रिपुरेशिनीदेव्यै नमः।

इति त्रिवृत्तार्चनम्।

### श्रीचक्रस्वरूपम्

अधः सहस्रारोपरिभागे—

सृष्टिस्थितिसंहारक्रमेण श्रीचक्रार्चनमधिकारभेदेन भवति।

यथोक्तम्—

'स्थितिक्रमो गृहस्थस्य संहारो वनिनो यतेः।
ब्रह्मचारिण उत्पत्तिः स्त्रियः शूद्रस्य चेष्टतः॥'

दक्षिणामूर्तिसम्प्रदाये बिन्दुमारभ्यभूपुरपर्यन्तं सृष्टिक्रमेणार्चनम्। भूपुरमारभ्याष्टारपर्यन्तं पुनश्च बिन्दुमारभ्य चतुर्दशारं यावत् पूजनं स्थितिक्रमे। भूपुरमारभ्यबिन्दुपर्यन्तमर्चनं संहारक्रमे।

हयग्रीवानन्दभैरवसम्प्रदाययोश्च स्थितिक्रमे पूर्वं बिन्दुत्रिकोणकामेश्वर्यादिनित्या-गुरुपंक्ति पूजनम्, तदनुभूपुरमारभ्य क्रमेणाष्टारत्रिकोणपूजनम्। अन्यत् समानम्।

बिन्दुमारभ्य अष्टदलपर्यंतं सृष्टिचक्रं, चतुर्दशारमाभ्यान्तर्दशारं यावत्, स्थितिचक्रं, अष्टारमारभ्य बिन्दुं यावत् संहारचक्रम्, तादृक् चक्रत्रयस्य त्रिपुरस्वरूपत्वम्, तत्प्रधाननायिकात्वेन ललिता परामबा त्रिपुरसुन्दरी प्रोच्यते।

भूपुर-वृत्त-त्रिकोणादपरे गुणत्रयकालत्रया-वस्थात्रय-लोकत्रयादि बोधकाः। बिन्दुस्तुरीयरूपस्तुरीयातीतरूपो वा। पिण्डब्रह्माण्डयोरैक्यात् श्रीचक्रस्य

ब्रह्माण्डरूपत्वं पिण्डरूपत्वञ्च। प्रणवस्वरूपशब्दब्रह्मणोऽपि प्रतीकस्वरूपम् श्रीचक्रम्। तद्रीत्या (अ, उ, म्) इति नादबिन्दुत्रयस्य प्रणवस्य जाग्रदाद्याश्चतस्रोऽवस्थाः वैखरीमध्यमा-पश्यन्ती-परारूपाणि,श्रीचक्रस्य सृष्टिस्थिति-संहारानाख्याचक्रेष्वन्तर्भवन्ति। पञ्चमं कार्यकारणातीतं भासा चक्रात्मकं भवति।

शरीरस्य मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धयाज्ञारूपाणां चक्राणामपि श्रीचक्रावयवेष्वन्तर्भावः। भूपुर-त्रिवृत्त-षोडश दलाष्टदलानां समुदायः सृष्टिचक्रं चतुर्दशारबहिर्दशारान्तर्दशाराणां समूहः स्थितिचक्रं अष्टार-त्रिकोणबिन्दूनां समवायः संहारचक्रम्। तेषां समष्टौ द्वितीयबिन्दुं यावदनाख्या चक्रम्, तृतीयबिन्दुं यावत् भासाचक्रम्। श्रीकल्पे पञ्चानामेषां क्रमेण स्वाधिष्ठान-मणिपूर-अनाहत-विशुद्धि-आज्ञा-चक्रेष्वन्तर्भावः।

कालीक्रमे सृष्टिचक्रं मूलाधारे भवति।

तत्रापि—'चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि'। 'चतुर्भिः शिव चक्रैश्च शक्तिचक्रैश्च पञ्चभिः। नवचक्रैश्च संसिद्धं श्रीचक्रं शिवयोर्वपुः॥' इत्यादिरीत्या त्रिकोणाष्टकोण-दशारद्वय चतुर्दशारञ्च शक्तिचक्राणि। बिन्द्वष्टदलकमल-षोडशदलकमल-चतुरस्रत्रयाणि चत्वारि शिवचक्राणि। त्रिकोणेनाष्टदलम् अष्टारेण षोडशदलम् अन्तर्दशार-बहिर्दशाराभ्यां भूपुरं चतुर्दशारेण संश्लिष्टम्। तत एवैषामविनाभावसम्बन्धः।

'त्रिकोणमष्टकोणञ्च दशकोणद्वयं तथा।
चतुर्दशारं चैतानि शक्तिचक्राणि पञ्च च॥
बिन्दुश्चाष्टदलं पद्मं पद्मं षोडशपत्रकम्।
चतुरस्रञ्च चत्वारि शिवचक्राण्यनुक्रमात्॥
त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुजम्।
दशारयोः षोडशारं भूगृहं भुवनास्रके॥'

एवमेव श्रीविद्यापञ्चदश्यामपि ककारत्रयं हकारद्वयञ्च शैवो भागः। ह्रीङ्कारश्चोभयात्मकः। शेषाणिशक्त्यक्षराणि।

'कत्रयं हृद्यञ्चैव शैवो भागः प्रकीर्तितः ।
शेषाणिशक्त्यक्षराणि ह्रीङ्कार उभयात्मकः ॥'

बिन्दुचक्रे सत्यलोकः, त्रिकोणे तपोलोकः, अष्टकोणे जनलोकः, अन्तर्दशारे महर्लोकः, बहिर्दशारे स्वर्लोकः, चतुर्दशारे भुवर्लोकः, प्रथमवृत्ते भूलोकः ।

अष्टदलेऽतलम्, अष्टदलबहिर्वृत्ते वितलं, षोडशदलकमले सुतलम् वृत्तत्रये तलातलम्, भूपुरप्रथमरेखायां महातलम्, द्वितीयरेखायां रसातलम्, तृतीयरेखायां पातालम् ।

**श्रीचक्रमहिमा**

ब्रह्मेन्द्रादि देवाः, सूर्यचन्द्रादि ग्रहाः, अश्विन्यादि-नक्षत्राणि, मेषादि-राशयः, वस्वादयो नागाः, वरुणवैनतेयादयो मन्दारादयो वृक्षाः, रम्भाद्यप्स-रसः, कपिलादयः सिद्धाः, वसिष्ठाद्याः मुनीश्वराः, कुवेरप्रमुखा यक्षाः, राक्षसाः गन्धर्वाः, किन्नराः विश्वावस्वाद योगायकाः, ऐरावताद्या गजेन्द्राः, उच्चैःश्रव-आद्याश्वाः, हिमालयाद्याः पर्वताः, गङ्गाद्याः पुण्यनद्यः, सर्वे समुद्राः, सर्वाणि नगरराष्ट्राणि सर्वाण्येतानि श्रीचक्रोत्पन्नानि ।

बिन्दुं ब्रह्मरन्ध्रे, त्रिकोणं मस्तके, ललाटे-अष्टकोणं, भ्रूमध्ये अन्तर्दशारम्, कण्ठे-बहिर्दशारं, हृदये-अन्तर्दशारं, कुक्षौ-वृत्तं, नाभौ अष्टदलं, कट्याम्-अष्टदलबहिर्वृत्तम्, स्वाधिष्ठाने षोडशदलं, मूलाधारे बहिस्त्रिवृत्तं, जान्वोः-भूपुरस्य प्रथमरेखा, जङ्घायां द्वितीयरेखा, पादयोः भूपुरस्य तृतीयरेखा ।

'त्रिपुरेशीमहायन्त्रं पिण्डात्मकमीश्वरि ।
यो जानाति स योगीन्द्रः स शम्भुः स हरिर्विधिः ॥
पिण्डब्रह्माण्डयोर्ज्ञानं श्रीचक्रस्य विशेषतः ।
ज्ञात्वाशम्भुफलावाप्तिः नाल्पस्य तपसः फलम् ॥'
(इति योगिनीहृदये) ।

तथैव मन्त्रयन्त्रयोरप्यैक्यम् । लकारेण भूपुरं सकारेण षोडशदलम्, हकारेणाष्टमूर्त्यात्मकमष्टदलम्, भुवनेश्वरीरूपेणेकारेण चतुर्दशारम्, एका-

रेण दशावतारात्मकं बहिर्दशारम्, हृल्लेखागतेन रेफेणान्तर्दशारम्, ककारेणाष्टारम्, अर्धचन्द्रेण त्रिकोणम्, तदन्तर्गता देव्यस्तत्त्वानि च तन्मयान्येव।

नादरूपाया अर्धमात्रायाः सकाशात् त्रिकोणा योनिरुत्पद्यते । बिन्दोर्बिन्दुचक्रम् । बिन्दुचक्रं च कामेश्वरस्वरूपम्, तदेव च विश्वाधारस्वरूपम् ।

श्रीविद्यान्तर्गतलंबीजरूपाल्लकारात्पृथिवी – तदन्तर्वर्तिवृक्षपर्वतादयउत्पद्यन्ते । तत एव एकपञ्चाशत्पीठानि सर्वतीर्थानि गङ्गाद्यानद्यः पुण्यक्षेत्राणि चोत्पद्यन्ते । मन्त्रस्थितसकारात् चन्द्र - नक्षत्र - ग्रह - राश्यादय उत्पद्यन्ते ।

'गणेशग्रहनक्षत्र—योगिनीराशि—रूपिणीम् ।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम् ॥'

इति नित्याषोडशिकार्णवतन्त्रात् ।

हं बीजरूपादाकाशस्य, भुवनेश्वरी बीजरूपादीकाराच्चतुर्दशभुवनानामुत्पत्तिः । दशावतारविष्णुस्वरूप एकारः वैष्णवीशक्तिरूपः । रं बीजरूपोरेफः परमज्योतिर्मयीपराशक्तिः । ककारात्सर्वकामपूरणी कामदा शक्तिर्गृह्यते । अर्धचन्द्रात् ( ँ ) विश्वयोनिर्गृह्यते । बिन्दोः ( ं ) महाकामेश्वरी व्यज्यते । बिन्दुरेव सर्वानन्दमयचक्रं तच्चब्रह्माभिन्नम् । तत्रैव महाकामेश्वरीमहाकामेश्वरयोर्वासः । तत्पदार्थभूतं निर्गुणब्रह्म महाकामेश्वरः, त्वं पदार्थभूतः संविद्रूपः कूटस्थः साक्षी महाकामेश्वरीरूपः तयोरभेद एव सामरस्यम् । तत एव ज्ञातृज्ञेययोरहन्तेदन्तयोः प्रकाशविमर्शयोश्चैक्यम् । भूमि बिन्दुचक्रम् तत्रत्या परापरातिरहस्ययोगिनी भवति । तत्रैव तुरीयाम्बायजनम् । सर्वानन्दमयचक्रमेवोड्याणपीठोऽप्युच्यते । तत एवोड्याणपीठनिलयैव बिन्दुमण्डलवासिनी भवति ।

### अथ जपविधिः

अस्य श्रीमहात्रिपुरसुन्दरीपञ्चदशाक्षरीमहामन्त्रस्य ३ आनन्दभैरवायऋषये नमः—शिरसि । ३ पङ्क्त्यै छन्दसे नमः—मुखे । ३ श्रीमहत्रिपुरसुन्दर्यै देवतायै नमः—हृदि । ३ ऐं बीजाय नमः—गुह्ये । ३—सौः शक्तये

नमः—पादयोः । ३ क्लीं कीलकाय नमः—नाभौ । (उक्तबीजशक्तिकीलकानि नाभिगुह्यपादेषु प्रायशो न्यस्तव्यनीति, मूलविद्याखण्डत्रयेणापि न्यस्तव्यानीति च केषाञ्चिदभिमतम्) । ३ श्रीललितामहात्रिपुरसुन्दरीप्रसादसिद्ध्यर्थे जपे विनियोगः—करसम्पुटे ।

ऐं ह्रीं श्रीं मूलविद्यया सर्वाङ्गे त्रिव्यापकम् ।

३ क ए ई ल ह्रीं अङ्गुष्ठाभ्यां नमः ।

३ ह स क ह ल ह्रीं तर्जनीभ्यां स्वाहा ।

३ स क ल ह्रीं मध्यमाभ्यां वषट् ।

३ क ए ई ल ह्रीं अनामिकाभ्यां हुं ।

३ ह स क ह ल ह्रीं कनिष्ठिकाभ्यां वौषट् ।

३ स क ल ह्रीं करतलकरपृष्ठाभ्यां फट ।

एवं हृदयादिन्यासः । यथा—

ऐं ह्रीं श्रीं क ए ई ल ह्रीं हृदयाय नमः ।

३ ह स क ह ल ह्रीं शिरसे स्वाहा ।

३ स क ल ह्रीं शिखायै वषट् ।

३ क ए ई ल ह्रीं कवचाय हुम् ।

३ ह स क ह ल ह्रीं नेत्रत्रयाय वौषट् ।

३ स क ल ह्रीं अस्त्राय फट् । भूर्भुवस्सुवरों इति दिग्बन्धः ।

अथ ध्यानम् । तच्च पूर्वोक्तमेव ।

श्रीषोडशाक्षर्यास्तु दक्षिणामूर्तिः ऋषिः । करषडङ्गन्यासयोः तत्कूटषट्कमिति विशेषः ।

ततः शक्त्युत्थापनमुद्रया स्वदेहे शून्यतां विभाव्य बिन्दुत्रयसपरार्धरूपां कामकलां विचिन्त्य तस्याः स्वात्मतया परिणामं श्रीगुरुमुखावगतं विभाव्य श्रीगुरुदेवतामन्त्रात्मनामैक्यं भावयेत् । अथ मूर्ध्नि शिरोमुद्रां न्यस्य ३ एं क्लीं ह्रीं त्रिपुरे भगवति स्वाहा, इति द्वादशाक्षरीं कुल्लुकाविद्यां, ततो हृदयमुद्रया (हृदि हस्तं दत्वा) ३ ॐ इत्येकाक्षरं सेतुम्, अथ कण्ठे न्यास-

मुद्रया ३ ह्लीं इत्येकाक्षरं महासेतुम्, तदनु नाभौ पूर्वमुद्रयैव ३ ॐ अं""क्षं (५१) ऐं मूलं ऐं अं""क्षं (५१) ॐ इति एकविंशाधिकैकशताक्षरं निर्वाणमन्त्रञ्च त्रिस्त्रिः जपेत्। ऐं ह्रीं श्रीं क्लीं, इति कामेश्वरीमन्त्रं स्वाधिष्ठाने त्रिः जपेत्।

३ ईं इति कामकलामन्त्रं मूलाधारे त्रिः जपेत्।

३ समस्तप्रकटगुप्तगुप्ततरसम्प्रदायकुलोत्तीर्णनिगर्भरहस्यातिरहस्यपरापरातिरहस्ययोगिनीभ्यो नमः इति समष्टिमन्त्रं जपेत्।

३ ईं ए क ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं

इति पञ्चदशाक्षरमुत्कीलनं सप्तवारं जपेत्।

३ विद्युदक्षीं परां विद्यां कालिकां देशभाषिणीम्।
खड्गमुण्डविकाराख्यां व्याघ्रचर्मविभूषिताम्॥
रक्तमाल्याम्बरधरां घोररूपां चतुर्भुजाम्।
खड्गं शूलं कपालञ्च दधतीं तीक्ष्णनासिकाम्।
सिद्धयर्थं चिन्तयेद्देवीं सर्वविद्यासुजीविनीम्॥

इति सञ्जीविनीं ध्यात्वा पञ्चधोपचर्य, ३ श्रीं क्लीं क्लीं हैं हैं क ल ह्रीं सौः स क ल ह्रीं क्लीं क्लीं ह्रीं श्रीं इति सप्तदशाक्षरं सञ्जीविनीमन्त्रं सप्तवारं जपेत्।

ऐं ह्रीं श्रीं ह्रीं श्रीं हं सः क ए ई ल ह्रीं, ह स क ह ल ह्रीं स क ल ह्रीं हं सः ह्रीं श्रीं, इति त्रयोविंशत्यक्षरं प्राणमन्त्रं सप्तवारं जपेत्।

३ ॐ श्रीं ऐं क्ली ह्रीं क ए ई ल ह्रीं ॐ ह्रीं श्रीं क्लीं ऐं ह स क ह ल ह्रीं, ॐ ऐं श्रीं क्लीं ह्रीं ह स क ल ए ह्रीं ह क ह ल ह्रीं ह ए क ल ह्रीं, ॐ ऐं क्लीं श्रीं ह्रीं क ह ल ए ह्रीं क ह ए ल ह्रीं क ह ह ल ह्रीं हं सः, ॐ ह्रीं श्रीं हं सः सोहं स क ल ह्रीं, इति त्रिसप्तत्यक्षरं दीपिनीमन्त्रञ्च प्रत्येकं सप्तवारं जपेत्।

(इमे मन्त्राः पञ्चदशीषोडशीनां साधारणाः)।

षोडशाक्षर्यां असाधारणाः पञ्चमन्त्रा। यथा—

ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ ह्रीं श्रीं ह स क्ष म ल व र यूं, स ह क्ष म ल व र यीं, य र ल व क्ष म ल व र यूं ॐ ह्रीं श्रीं ॐ सौः क्लीं ऐं इति महाकामेश्वरमन्त्रं दशवारं जपेत्।

३ (पञ्चदशी) क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं–त्रिवारं जपेत् ॥१॥

३ (षोडशी) श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं सौः ऐं क्लीं ह्रीं श्रीं, त्रिवारं जपेत् ॥२॥

३ ऐं क्लीं सौः बालायै नमः त्रिवारं जपेत् ॥३॥

३ ऐं क्लीं उच्छिष्टचाण्डालि सुमुखि देवि महापिशाचिनि ह्रीं ठः ठः ठः स्वाहा—त्रिवारं जपेत् ॥४॥

३ ॐ ह्रीं स्त्रीं हूं क्रीं श्रीं उग्रतारे सौः क्लीं ह्रीं श्रीं स्वाहा, त्रिवारं जपेत् ॥५॥ एते पञ्च मन्त्राः पञ्चरत्नपदेन उच्यन्ते ।

ततः सूतकनिवारणाय प्रणवसम्पुटितां मूलविद्यां (पञ्चदशीं) दशवारमावर्त्यानन्तरं विघ्नहरान् षण्मन्त्रान् त्रिस्त्रिर्जपेत् । यथा—

ऐं ह्रीं श्रीं, इ रि मि लि कि रि कि लि प रि मिरोम् ।

३ ॐ ह्रीं नमो भगवति महात्रिपुरभैरवि मम त्रैपुररक्षां कुरु कुरु ।

३ संहर संहर विघ्नरक्षोविभीषकान् कालय हुं फट् स्वाहा ।

३ ब्लूं रक्ताभ्यो योगिनीभ्यो नमः ।

३ सां सारसाय वह्न्याशनाय नमः ।

३ दु मु लु षु मु लु षु ह्रीं चामुण्डायै नमः ।

एते कुल्लूकाद्या विघ्नहरान्ता जपस्य पूर्वाङ्गमन्त्राः ।

(त्रितारीपूर्वकत्वन्तु सर्वेषां सिद्धमेव) ।

३ ऐं क्लीं ह्रीं श्रीं भगवति त्रिपुरसुन्दरि स्वाहा, कुलुकां शिरसि, ॐ, सेतुं हृदि, द्रीं महासेतुं कण्ठे, ह्रीं महासेतुं सहस्रारे, ॐ श्रीं अं एं क्लीं सौः अं आं इं ईं उं ऊं........क्षं इति निर्वाणं नाभौ, क्लीं कामवीजं लिङ्गे, जिह्वायां मूलविद्यां विचिन्त्य जपेत् ।

ततः पेशीच्छन्नां सुवर्णरत्नस्फटिकमणिपुत्रजीवरुद्राक्षाद्यन्यतमनिर्मितां मालां श्यामाक्रमे वक्ष्यमाणेन संस्कारविधिना संस्कृतामादाय, क्वचित्पात्रे वामपाणौ वा निधाय, सामान्यार्घ्योदकेन शुद्धोदकेन वा मूलेनाभ्युक्ष्य,

ॐ मां माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥

इति प्रार्थ्य, ह्रीं सिद्धयै नमः, इति मन्त्रेण पुनः पुनः आवृत्तेन गन्धादिभिः पञ्चभिः गन्धपुष्पाभ्यामेव वा सम्पूज्य, ऐं ह्रीं श्रीं गं

अविघ्नं कुरु माले त्वं करे गृह्णामि दक्षिणे ।
जपकाले तु सततं प्रसीद मम सिद्धये ॥

इति दक्षिणहस्तेन मालां गृहीत्वा, मध्यमामध्यपर्वावलम्बिनीं तां तर्जन्या वामहस्तेन चास्पृशन् एकमणिग्रहण अन्यमनुपाददानः क्रमादङ्गुष्ठाग्रेण मणीन् परिवर्तयत् जृम्भाक्षुताद्यकुर्वन् अनिद्राणः, एतेषां सम्भवे-आचम्य देवतात्मत्वं भावयन्, मालामपातयन् प्रमादपतितायामुक्तसंस्कारं कृत्वा खटखटाशब्दमकुर्वाणः अश्लिष्टमनुमुच्चारयन् असम्भाषमाणो मालामप्रदर्शयन् अन्यदप्युक्तमाचरन् श्रीगुरुमुखादवगतं षडर्थाद्यन्यतममर्थं चतुर्विधैक्यशून्यषट्कावस्थापञ्चकविषुवत्सप्तकमन्त्रचैतन्यादिरहस्यजातं चानुसन्दधानो यथाऽधिकारं मनसोपांशुना वा सहस्रं त्रिशतं शतं वा मूलविद्यामारम्भे प्रोक्तसंख्यावधौ च प्रणवपुटितां सकृज्जपित्वा उत्तराङ्गमन्त्रान् जपदमांशमावर्तयेत् ।

## जपोत्तराङ्गमन्त्राः

ते तु त्रिपुराद्यष्टचक्रेश्वरीमन्त्रा अष्टौ—

ऐं ह्रीं श्रीं, अं आं सौः, ३ ऐं क्लीं सौः, ३ ह्रीं क्लीं सौः, ३ हैं ह्क्लीं ह्सौः, ३ ह्सैं ह्स्क्लीं ह्स्सौः, ३ ह्रीं क्लीं ब्लें, ३ ह्रीं श्रीं सौः, ह्स्रैं ह्स्क्लीं ह्स्रौः ।

मूलमेकं—ऐं ह्रीं श्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं सकल ह्रीं ।

तत्तत्तिथिनित्याविद्या—ताश्च शुक्लपक्षे कामेश्वर्यादिचित्रान्ताः । कृष्णपक्षे तु चित्रादिकामेश्वर्यन्ताः । तिथिवृद्धावेकां नित्यां दिनद्वये तिथिक्षये एकस्मिन् दिवसे नित्याद्वयम्, इति क्रमेण जप्याः । यथा—

ऐं ह्रीं श्रीं अं ऐं स क ल ह्रीं नित्यक्लिन्ने मदद्रवे सौः।

३ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नत्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभ क्षोभय सर्वंत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हें ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं ह्रब्लें ह्रीं।

३ इं ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहाः।

३ ईं ॐ क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा।

३ उं ॐ ह्रीं वह्निवासिन्यै नमः।

३ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं।

३ ऋं ह्रीं शिवदूत्यै नमः।

३ ॠं ॐ ह्रीं हुं खे च छे क्षः स्त्रीं हुं क्षें ह्रीं फट्।

३ ऌं ऐं क्लीं सौः।

३ ॡं ह स क ल र डैं हस क ल र डीं ह स क ल र डौः।

३ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं।

३ ऐं भ्म्र्यूं।

३ ॐ स्वौं।

३ ओं ॐ नमो भगवति ज्वालामालिनि देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र ज्वालामालिनि हुं फट्।

३ औं च्क्लौम्।

अङ्गोपाङ्गप्रत्यङ्गीभूता बाला, अन्नपूर्णा, अश्वारूढा इति त्रयो वक्ष्यमाणाश्चेति मन्त्राः त्रयोदश।

३ ऐं क्लीं सौः सौः क्लीं ऐं ऐं क्लीं सौः, इति श्रियोऽङ्गबाला।

३ ह्रीं श्रीं क्लीं ॐ नमो भवगति अन्नपूर्णेश्वरि ममाभिलषितमन्नं देहि स्वाहा, इति श्रिय उपाङ्गमन्नपूर्णा।

३ ॐ आं ह्रीं क्रों एहि परमेश्वरि स्वाहा, इति श्रीप्रत्यङ्गमश्वारूढा।

कालनित्या तु सूत्रकृता नोपात्ता।

अथ पुनरपि ऋष्यादि मानसपूजान्तं विधाय, सबीजाः सर्वसंक्षोभिण्यादि मुद्राः प्रदर्श्य,

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत् कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा॥

इति देव्याः वामकरे सामान्यर्घ्यप्रक्षेपेण जपं निवेद्य,

त्वं माले सर्वदेवानां प्रीतिदा शुभदा मम।
शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा॥

इति मालां सम्प्रार्थ्य, निगूढं निधाय, श्रीगुरुपादुकामन्त्रं मुहुर्मुहुरुच्चारयन् गुरुपरमगुरुपरमेष्ठीगुरून् तत्तन्नामपूर्वं प्रणमेत्।

इति जपविधिः।

## हादि विद्यान्यासध्यानानि

अस्य हादिपञ्चदशी श्रीविद्यामहामन्त्रस्य दक्षिणामूर्ति ऋषिः पंक्तिश्छन्दः श्रीदेवीभूषितोत्सङ्ग, श्रीकामेश्वरो देवता हसकलह्रीं बीजं स क ल ह्रीं शक्तिः ह स क ह ल ह्रीं कीलकम् श्रीदेवीभूषितोत्सङ्गश्रीकामेश्वरदेवता प्रीत्यर्थे श्रीगुरोराज्ञया जपे विनियोगः।

| | | |
|---|---|---|
| ह स क ल ह्रीं | सर्वज्ञताशक्ति धाम्ने | अङ्गुष्ठाभ्यां नमः। |
| ह स क ह ल ह्रीं | नित्यतृप्तिशक्ति धाम्ने | तर्जनीभ्यां नमः। |
| स क ल ह्रीं | अनादिबोधशक्ति धाम्ने | मध्यमाभ्यां नमः। |
| ह स क ल ह्रीं | स्वतन्त्रताशक्ति धाम्ने | अनामिकाभ्यां नमः। |
| ह स क ह ल ह्रीं | नित्यमलुप्तशक्ति धाम्ने | कनिष्ठिकाभ्यां नमः। |
| स क ल ह्रीं | अनन्तशक्ति धाम्ने | करतलकरपृष्ठाभ्यां नमः। |
| ह स क ल ह्रीं | सर्वज्ञताशक्ति धाम्ने | हृदयाय नमः। |
| ह स क ह ल ह्रीं | नित्यतृप्तिशक्ति धाम्ने | शिरसे स्वाहा। |
| स क ल ह्रीं | अनादिबोधशक्ति धाम्ने | शिखायै वषट्। |

ह स क ल ह्रीं स्वतन्त्रताशक्ति धाम्ने कवचाय हुम् ।
ह स क ह ल ह्रीं नित्यमलुप्तशक्ति धाम्ने नेत्रत्रयाय वौषट् ।
स क ल ह्रीं अनन्तशक्ति धाम्ने अस्त्राय फट् ।

ध्यानम्

श्रीदेवीभूषितोत्सङ्गं सान्द्रसिन्दूररोचिषम् ।
हकारादिमनोर्वाच्यं वन्दे कामेश्वरं हरम् ॥
उद्यद्दिनकरप्रख्यं जपाकुसुमसन्निभम् ।
नवरत्नसमायुक्तं मुकुटेन विराजितम् ॥
चतुर्बाहुमुदाराङ्गं मोहयन्तं जगत्त्रयम् ।
श्रीदेवीभूषितोत्सङ्गं ध्यायेत्परशिवं प्रभुम् ॥
एवं ध्यायेन्महादेवं भुक्तिमुक्तिफलप्रदम् । इति ।

बालात्रिपुरसुन्दरीमन्त्रस्य न्यासध्यानानि

अस्य श्रीबालात्रिपुरसुन्दरी महामन्त्रस्य दक्षिणा मूर्ति ऋषिः पङ्क्तिश्छन्दः श्रीबालात्रिपुरसुन्दरी देवता ऐं बीजं सौः शक्तिः क्लीं-कीलकम् श्रीबालात्रिपुरसुन्दरीदेवता प्रीत्यर्थे श्रीगुरोराज्ञया जपे विनियोगः ।

दक्षिणा मूर्तये ऋषये नमः शिरसि । पङ्क्तिश्छन्दसे नमो मुखे ।
श्रीबालात्रिपुरसुन्दरी देवतायै नमो हृदये । ऐं बीजाय नमो गुह्ये ।
सौः शक्तये नमः पादयोः । क्लीं कीलकाय नमः नाभौ ।
विनियोगाय नमः सर्वाङ्गे ।

ऐं अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । सौः मध्यमाभ्यां नमः । ऐंअनामिकाभ्यांनमः । क्लींकनिष्ठिकाभ्यांनमः । सौः करतलकरपृष्ठाभ्यांनमः ।

ऐं हृदयाय नमः । क्लीं शिरसे स्वाहा । सौः शिखायै वषट् । ऐं कव-चाय हुम् । क्लीं नेत्रत्रयाय वौषट् । सौः अस्त्राय फट् ।

अरुणकिरणजालैः रञ्जिता सावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता
इतरकरवराढ्या फुल्लकल्हारसंस्था
निवसतु हृदि बाला नित्यकल्याणशीला ।

ऐंकाराङ्कितगर्भितानलशिखा सौः क्लीं कलां बिभ्रतीम्,
सौवर्णाम्बुजधारिणीं वरधरां धाराधराङ्गोज्ज्वलाम् ।
वन्दे साङ्कुशपाशपुस्तकधरां स्रग्भासितोद्यत्कराम्,
तां बालां त्रिपुरां पदत्रयतनुं षट्चक्रसञ्चारिणीम् ॥

मालासृणी पुस्तक पाश हस्तां
बालाम्बिकां श्रीललितां कुमारीम् ।
कुमारकामेश्वरकेलिलोलां
नमामि गौरीं नववर्षवेषाम् ॥

श्रीमहाषोडशीमहिमा

समस्तजगतामुत्पत्तिभूताशिवा। सेयं श्रीर्ब्रह्मस्वरूपा सकलगुणमयी निर्गुणा निष्प्रपञ्चा साक्षात्कामदुघा सुरमुनिनिवहैर्वन्दिताऽऽनन्दरूपा ।

वाक्यकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ।
वर्णितुं नैव शक्येऽहं श्रीविद्यां षोडशाक्षरीम् ॥
वैखरीवाच्यभावत्वादशक्ता गुणवर्णने ।
यतो निरक्षरं वस्तु परा तत्रैव कारणम् ॥
मूकीभूता हि पश्यन्ती मध्यमा मध्यमा भवेत् ।
ब्रह्मविद्यास्वरूपा हि भुक्तिमुक्तिफलप्रदा ॥
एकोच्चारेण देवेशि ! वाजपेयस्य कोटयः ।
अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा ॥
काश्यादितीर्थयात्राः स्युः सार्धकोटित्रयान्विताः ।
तुलां नार्हन्ति देवेशि ! नात्र कार्या विचारणा ॥
एकोच्चारेण गिरिजे किं पुनर्ब्रह्म केवलम् ।
षोडशार्णा महाविद्या न प्रकाश्या कदाचन ॥
गोपितव्या त्वया भद्रे स्वयोनिरिव पार्वति ।
षोडशीयं सुगोप्या हि स्नेहाद्देवि प्रकाशिता ॥
अपि प्रियतमं देयं सुतदारधनादिकम् ।
राज्यं देयं शिरो देयं न देया षोडशाक्षरी ॥

## श्रीसुन्दरी भेदाः

रुद्रयामले—ॐ क्लीं ह्लीं श्रीं ऐं क्लीं सौः क ए ई ल ह्लीं हसकलहह्लीं सकलह्लीं स्त्रीं ऐं क्रों क्रीं क्लीं हूँ, हसकलह्लीं हसकलहलह्लीं हंसः, सप्तदशी। हसकलहह्लीं हसकहलह्लीं सकलह्लीं। हसकलह्लीं, सहसकहलह्लीं सकलह्लीं। इति षोडशीद्वयम्।

हसकलहह्लीं। हसकहलह्लीं। सकलहह्लीं, लोपामुद्रा १७।

ऐं हसकलह्लीं क्लीं हसकहलह्लीं सौः सकलह्लीं लोपा० विद्या १८।

ॐ ऐं क्लीं सौं कएलहह्लीं सौः क्लीं ऐं ॐ ऐं क्लीं सौः ह स क ल ह्लीं सौंः क्लीं ऐं ॐ ऐं क्लीं सौः स क ह ल ह्लीं सौः क्लीं एं ॐ इति परमा। क ल ईं, ब्रह्मविद्या।

कएईलह्लीं हकहलह्लीं हसकलह्लीं, इयमुन्मनीश्रीविद्या।
कएईलह्लीं हकहलह्लीं सहकलह्लीं, इयं वरुणोपासिता।
कएकलह्लीं हकहह्लीं सहकलह्लीं, धर्मराजोपासिता।
कसकलह्लीं हसलकलह्लीं सकलरलह्लीं, वह्न्युपासिता।
हसकलह्लीं हसकहलह्लीं सकलरलह्लीं नागराजोपासिता।
कएरलरह्लीं हकलरहलह्लीं सरकलरह्लीं, वायूपासिता।
कएईरलह्लीं हकहलरह्लीं सहकलरह्लीं बुधोपासिता।
कहलह्लीं हकलहललरह्लीं सकलह्लीं ईशानोपासिता।
कएईलह्लीं ह०स०, रत्युपासिता।
कादि स०ह० क० विलोममिलिता ३० नारायणोपासिता।
कएईलह्लीं हकहसरह्लीं हसकलह्लीं, ब्रह्मोपासिता।
हसकलह्लीं हकहसरह्लीं हसकलह्लीं, जीवोपासिता।
हसकलह्लीं हसकहलह्लीं सकलह्लीं, लोपामुद्रोपासिता।
कहएईलह्लीं हकएईलह्लीं सकएईलह्लीं, मनूपासिता।

कामराजाख्यविद्यायाः शक्तिं तुर्याञ्च सुन्दरि ।

हित्वा मुखे शिवेन्द्वाख्या लोपामुद्रा प्रकाशिता ।

एकारं ईकारं हित्वा हकारं सकारं च दद्याद् अन्यत्समानम् ।

शक्तिमादनमध्यगं शिवं कुर्याद् वाग्भवेतु शिवाद्यं कामराजकं चन्द्राद्यन्तुं तृतीयं स्यान्मनूपासिता ।

सहाद्यं वाग्भवं देवि ! चन्द्राद्यं शिवमध्यगम् ।

मादनं कामबीजं तु शक्तिबीजं हसाननम् ॥ चन्द्राराधिता ॥

हसाद्यं वाग्भवं शिवाद्यं सहमध्यगम् ।

मादनं कामबीजं तु तार्तीयं शृणु पार्वति ॥

हसाद्यं शक्तिबीजं तु कुबेरेण प्रपूजिता ।

हसकएईलह्रीं हसकहएईलह्रीं हसकएईलह्रीं, कुबेरोपासिता ।

कामराजाख्यविद्यायास्तृतीयं शृणु पार्वति ॥

शक्तिबीजं सहाद्यं स्याद्विद्याऽगस्त्य प्रपूजिता ॥

क ए ई ल ह्रीं ह स क ह ल ह्रीं स ह स क ल ह्रीं, इयमगस्त्योपासिता द्वितीया लोपामुद्रोपासिता च ।

कामराजख्यविद्याया वाग्भवे मादनं त्यज ।

चन्द्रं तत्रैव संयोज्य कामराजे ततः परम् ॥

हित्वाचन्द्रं मुखे कुर्य्याद्विद्येयं नन्दिपूजिता ।

सएईलह्रीं सहकहलह्रीं सकलह्रीं, नन्दिपूजिता ।

कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम् । (हसकहलह्रीं)

शक्तिबीजं वरारोहे चन्द्राद्यं सर्वसिद्धिदम् ।

कामराजाख्यविद्याया हित्वा भूमिं तृतीयके ।

शक्तिबीजे स्थितां देवि ! चन्द्राधः कुरु तत्र च ।

इन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा ।

क ए ई ल ह्रीं ह स क ह ल ह्रीं सकलह्रीं ।

इन्द्रलोपामुद्राख्यविद्या द्वितीया या महेश्वरी ।

कामराजे भृगुं हित्वा मुखे कुर्यात्तमेव हि ॥

शिवं विना चतुर्थं तु तार्तीये शक्रगः शिवः।
एषा विद्या वरारोहे त्रिपुरा सूर्यपूजिता।

सूर्य्येण कएईलह्रीं सहकलह्रीं सहसकल ह्रीं। क ए ई ल ह स क ह स ह स क ल ह्रीं शिवोपासिता।

क ए इ ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं ह्रीं भुवनेशानः बिन्दुहीना नादहीना दुर्वाससा पूजिता।

श्रीबीजं शक्तिबीजञ्च कामबीजञ्च वाग्भवम्।
बालान्तः संस्थितं बीजं प्रणवञ्च ततः परम्॥
शक्तिबीजं रमां चैव विद्यां च परमेश्वरि॥
लोपां वा कामराजं वा त्रिकूटामथवा पराम्॥
विन्यस्य पुनराद्यानि पञ्चबीजानि सुन्दरि॥
विपरीतक्रमेणैव विन्यसेत्षोडशीपरा।

एषा श्रीपरमा परात्परतमा सर्वार्थसिद्धिप्रदा सारात्सारतरा।

इति सुन्दरीभेदाः।

## अथ होमप्रकरणम्

पूजामण्डपस्य ईशानभागे चतुरस्राकारं हस्तायाममङ्गुष्ठोन्नतं स्थण्डिलं परिकल्प्य, 'मूलेन' निरीक्ष्य, फट् इति सामान्यार्घ्योदकेन प्रोक्ष्य कुशेन ताडयित्वा, हुं इत्यवगुण्ठ्य स्थण्डिलोपरि मध्यमदक्षिणोत्तरेषु क्रमेण प्रागग्रास्तिस्रो रेखा विलिख्य तदुपरि मध्यमपश्चिमपूर्वेषु उदगग्रास्तिस्रो रेखा विलिख्य, तासु रेखासु उल्लेखक्रमेण—ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ब्रह्मणे नमः। ७ यमाय नमः। ७ सोमाय नमः। ७ रुद्राय नमः। ७ विष्णवे नमः। ७ इन्द्राय नमः। इत्यभ्यर्चयेत् ॥

ततः स्वदेहे षडङ्गन्यासं कुर्यात्। यथा—

७ सहस्रार्चिषे हृदयाय नमः। ७ स्वस्तिपूर्णाय शिरसे स्वाहा। ७ उत्तिष्ठ-पुरुषाय शिखायै वषट्। ७ धूमव्यापिने कवचाय हुं। ७ सप्तजिह्वाय नेत्र-त्रयाय वौषट्। ७ धनुर्धराय अस्त्राय फट्।

अननैव षडङ्गेन अग्नीशासुरवायुकोणेषु मध्ये दिक्षु च स्थण्डिलमभ्यर्च्य तत्र अष्टकोणषट्कोणत्रिकोणात्मकमग्निचक्रं प्रवेशरीत्या विलिख्य त्रिकोणे दिगष्टकं विभाव्य तत्र स्वाग्रादिप्रादक्षिण्येन दिक्षु मध्ये च क्रमात्—

७ पीतायै नमः। ७ श्वेतायै नमः। ७ अरुणायै नमः। ७ कृष्णायै नमः। ७ धूम्रायै नमः। ७ तीव्रायै नमः। ७ स्फुलिङ्गिन्यै नमः। ७ रुचिरायै नमः। ७ ज्वालिन्यै नमः, इति पीठशक्तीः समर्चयेत् ॥

ततः पीठमध्ये–७ तं तमसे नमः। ७ रं रजसे नमः। ७ सं सत्वाय नमः। ७ आं आत्मने नमः। ७ अं अन्तरात्मने नमः। ७ पं परमात्मने नमः। ७ ह्रीं ज्ञानात्मने नमः। इति पूजयेत् ॥

ततः त्रिकोणे–७ ॐ ह्रीं वागीश्वरीवागीश्वराभ्यां नमः—इति मन्त्रेण जनिष्यमाणस्य वन्हेः पितरौ वागीश्वरीवागीश्वरौ सम्पूज्य तयोर्मिथुनी भावं भावयित्वा, अरणेः सूर्यकान्ताद्वा वन्हिमुत्पाद्य द्विजगृहाद्वा आनीय मृत्पात्रे ताम्रपात्रे वा अग्निं स्थण्डिलाद्वहिः आग्नेय्यां ऐशान्यां नैर्ऋत्यां

वा दिशि 'निधाय, तस्मात्क्रव्यादांशमेकमग्निशकलं फट् इति अस्त्रमन्त्रेण नैर्ऋत्यां निरस्य अग्निं मूलेन निरीक्ष्य प्रोक्ष्य च, अस्त्रेण कुशैस्ताडयित्वा, कवचेनावगुण्ठ्य, धेनुयोनिमुद्रे प्रदर्श्य, ततः ७ ॐ रं वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा, इति मूलाधारोद्गतं सम्विदग्निं ललाटनेत्रद्वारा निर्गमय्य तं वागीश्वरीयोन्यां प्रवेशबुद्ध्या बाह्याग्नौ संयोजयेत् ॥

ततः कवचाय हुं इति मन्त्रेण इन्धनैराच्छाद्य ७ अग्निं प्रज्ज्वलितं वन्दे जातवेदं हुताशनम् । सुवर्णवर्णममलं समिद्धं विश्वतोमुखम् ॥ इत्युपस्थाय । ७ उत्तिष्ठ पुरुष हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा, इति वन्हिमुत्थाप्य ततः ॐ ह्रीं इति स्थण्डिलोपरि अग्निं त्रिवारं भ्रामयित्वा स्थण्डिले स्थापयेत् । ७ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा, इति प्रज्वाल्य, ज्वालिनीमुद्रां प्रदर्श्य, (प्राक्तोयं निधाय), वागीश्वरीगर्भे धृतं ध्यत्वा, ७ ऐं नमः अस्य होमाग्नेः गर्भाधानकर्म, पुंसवनकर्म, सीमन्तोन्नयनकर्म, जातकर्म, ललिताग्निरिति नाम्ना नामकरणकर्म कल्पयामि नमः, ७ ऐं नमः अस्य ललिताग्नेः अन्नप्राशनकर्म, चौलकर्म, उपनयनकर्म, गोदानकर्म, विवाहकर्म कल्पयामि नमः—इति तत्तत्कर्मभावनया अक्षतैरभ्यर्चयेत् ॥

ततः सामान्यार्घ्योदकेनाग्निं मूलेन परिषिच्य अग्निमलङ्कृत्य प्रागग्रैरुदगग्रैश्च कुशैः परिस्तीर्य त्रिभिः परिधिभिः प्राग्वर्जं परिधानं कृत्वा ।

त्रिनयनमरुणाब्जबद्धमौलिं सुशुक्लां-
शुकमरुणमनेकाकल्पमम्भोजसंस्थम् ।
अभिमतवरशक्ति स्वस्तिकाभीतिहस्तं
नमत कनकमालालङ्कृतांसं कृशानुम् ॥

(शारदातिलके—वैश्वनरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः । शयानमाज्यहोमेषु निषण्णं शेपवस्तुषु ॥)

अथ अष्टकोणे स्वाग्रादिप्रादक्षिण्येन—

७ जातवेदसे नमः। ७ सप्तजिह्वाय नमः। ७ हव्यवाहनाय नमः। ७ अश्वोदराय नमः। ७ वैश्वानराय नमः। ७ कौमारतेजसे नमः। ७ विश्वमुखाय नमः। ७ देवमुखाय नमः। इत्यभिपूज्य॥

षट्कोणे षडङ्गं यथा—

७ सहस्रार्चिषे हृदयाय नमः। ७ स्वस्तिपूर्णाय शिरसे स्वाहा। ७ उत्तिष्ठपुरुषाय शिखायै वषट्। ७ धूमव्यापिने कवचाय हुम्। ७ सप्तजिह्वाय नेत्रत्रयाय वौषट्। ७ धनुर्धराय अस्त्राय फट्। इत्यभ्यर्च्य।

त्रिकोणे—७ ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा, इति मन्त्रेण अग्निं पुष्पाक्षतैरर्चयेत्।

अथ-आज्यं मूलेन सप्तवारमभिमन्त्रणेन संशोध्य पुरतो दर्भेषु निधाय स्रुवञ्च मूलेन प्रक्षाल्य तदुत्तरतो निवेश्य।

अथ अग्नेः सप्तजिह्वासु एकैकां आज्याहुतिं कुर्यात्। यथा—

| | | | | |
|---|---|---|---|---|
| ७ हिरण्यायै नमः स्वाहा— | | हिरण्याया इदं न मम | | (ऐशान्यां) |
| ७ कनकायै | ,, | कनकाया | ,, | (प्राच्यां) |
| ७ रक्तायै | ,, | रक्ताया | ,, | (आग्नेय्यां) |
| ७ कृष्णायै | ,, | कृष्णाया | ,, | (नैर्ऋत्यां) |
| ७ सुप्रभायै | ,, | सुप्रभाया | ,, | (पश्चिमायां) |
| ७ अतिरक्तायै | ,, | अतिरक्ताया | ,, | (वायव्यायां) |
| ७ बहुरूपायै | ,, | बहुरूपाया | ,, | (मध्ये) |

ततस्तिस्र आहुतीःजुहुयात्। यथा—

७ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय स्वाहा—अग्नय इदम्। ७ उत्तिष्ठपुरुष हरितपिङ्गल लोहिताक्ष सर्वकर्माणि साधय मे देहि दापय स्वाहा—अग्नय इदम्। ७ चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा—अग्नय इदम्। अथ अग्नेर्मध्यभागे स्थितायां दक्षिणोत्तरायतायां बहुरूपाख्यजिह्वायां, ॐ ऐं ह्रीं श्रीं ह्स्रैं ह्स्क्लरीं ह्स्रौः। महापद्मवनान्तस्थे करुणानन्दविग्रहे। सर्वभूतहिते मातरेह्येहि परमेश्वरि॥

इति श्रीदेवीमावाह्य उपचारमन्त्रैः गन्धादीन् पञ्चोपचारानाचर्य पूजाक्रमेण जुहुयात् । यथा—

४ गणपतिमूलं महागणपतये स्वाहा (त्रिः) ॥

४ मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा (दशकृत्वः) ॥

क-५ हृदयाय नमः हृदयदेव्यै, ह-६ शिरसे स्वाहा शिरोदेव्यै, स-४ शिखायै वषट् शिखादेव्यै, क-५ कवचाय हुं कवचदेव्यै, ह-६ नेत्रत्रयाय वौषट् नेत्रदेव्यै, स-४ अस्त्राय फट् अस्त्रदेव्यै स्वाहा ॥

अः क-१५ अः ललितामहानित्यायै (त्रिः), तत्तिथिनित्यामन्त्रेण तत्तिथिनित्यायै, अः क-१५ अः ललितामहानित्यायै स्वाहा ॥

४ अं ऐं सकलह्रीं नित्यक्लिन्ने मदद्रवे सौः अं कामेश्वरीनित्यायै स्वाहा ॥

४ आं ऐं भगभुगे भगिनि भगोदरि भगमाले भगावहे भगगुह्ये भगयोनि भगनिपातिनि सर्वभगवशङ्करि भगरूपे नित्यक्लिन्ने भगस्वरूपे सर्वाणि भगानि मे ह्यानय वरदे रेते सुरेते भगक्लिन्ने क्लिन्नद्रवे क्लेदय द्रावय अमोघे भगविच्चे क्षुभक्षोभय सर्वसत्वान् भगेश्वरि ऐं ब्लूं जें ब्लूं भें ब्लूं मों ब्लूं हे ब्लूं हें क्लिन्ने सर्वाणि भगानि मे वशमानय स्त्रीं हर ब्लें ह्रीं आं भगमालिनी-नित्यायै स्वाहा ॥

४ इं ॐ ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा इं नित्यक्लिन्नानित्यायै स्वाहा ॥

४ ईं ॐ क्रों भ्रों क्रौं झ्रौं छ्रौं ज्रौं स्वाहा ईं भेरुण्डानित्यायै स्वाहा ॥

४ उं ॐ ह्रीं वन्हिवासिन्यै नमः उं वन्हिवासिनीनित्यायै स्वाहा ॥

४ ऊं ह्रीं क्लिन्ने ऐं क्रों नित्यमदद्रवे ह्रीं ऊं महावज्रेश्वरीनित्यायै स्वाहा ॥

४ ऋं ह्रीं शिवदूत्यै नमः ऋं शिवदूतीनित्यायै स्वाहा ।

४ ॠं ॐ ह्रीं हुं खे च छे क्षः स्त्री हुं क्षें ह्रीं फट् ॠं त्वरितानित्यायै स्वाहा ॥

४ ऌं ऐं क्लीं सौः ऌं कुलसुन्दरीनित्यायै स्वाहा ॥

४ ॡं ह्स्क्लर्डैं ह्स्क्लर्डीं ह्स्क्लर्डौः ॡं नित्यानित्यायै स्वाहा ॥

४ एं ह्रीं फ्रें स्रूं क्रों आं क्लीं ऐं ब्लूं नित्यमदद्रवे हुं फ्रें ह्रीं एं नीलपताका-नित्यायै स्वाहा ॥

४ ऐं भ्म्र्यूं ऐं विजयानित्यायै स्वाहा ॥

४ ओं स्वौं ओं सर्वमङ्गलानित्यायै स्वाहा ॥

४ औ ॐ नमो भगवति ज्वालामालिनी देवदेवि सर्वभूतसंहारकारिके जातवेदसि ज्वलन्ति ज्वल ज्वल प्रज्वल प्रज्वल ह्रां ह्रीं ह्रूं र र र र र र र ज्वालामालिनि हुं फट् स्वाहा औंज्वालामालिनीनित्यायै स्वाहा ॥

४ अं च्क्रौं अं चित्रानित्यायै स्वाहा ॥

४ अः पञ्चदशी अः ललितामहानित्यायै स्वाहा ॥

४ ऐं ग्लौं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः सहक्षमलवरयीं स्हौः श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथाय स्वाहा, उड्डीशानन्दनाथाय, प्रकाशानन्दनाथाय, विमर्शानन्दनाथाय, आनन्दानन्दनाथाय, षष्ठीशानन्दनाथाय, ज्ञानानन्दनाथाय, सत्यानन्दनाथाय, पूर्णानन्दनाथाय, मित्रेशानन्दनाथाय, स्वभावानन्दनाथाय, प्रतिभानन्दनाथाय, सुभगानन्दनाथाय स्वाहा ॥

४ परप्रकाशानन्दनाथाय, परशिवानन्दनाथाय, पराशक्त्यम्बायै, कौलेश्वरानन्दनाथाय, शुक्लदेव्यम्बायै, कुलेश्वरानन्दनाथाय, कामेश्वर्यम्बायै, भोगानन्दनाथाय, क्लिन्नानन्दनाथाय, समयानन्दनाथाय, सहजानन्दनाथाय, गगनानन्दनाथाय, विश्वानन्दनाथाय, विमलानन्दनाथाय, मदनानन्दनाथाय, भुवनानन्दनाथाय, लीलाम्बायै, स्वात्मानन्दनाथाय, प्रियानन्दनाथाय, (परमेष्ठिगुरु) अमुकानन्दनाथाय, (परमगुरु) अमुकानन्दनाथाय, (स्वगुरु) अमुकानन्दनाथाय स्वाहा ॥

४ अं आं सौः त्रैलोक्यमोहनचक्राय, अं अणिमासिद्ध्यै, लं लघिमासिद्ध्यै, मं महिमासिद्ध्यै, ईं ईशत्वसिद्ध्यै, वं वशित्वसिद्ध्यै, पं प्राकाम्यसिद्ध्यै, भुं भुक्तिसिद्ध्यै, इं इच्छासिद्ध्यै, पं प्राप्तिसिद्ध्यै, सं सर्वकामसिद्ध्यै, आं ब्राह्मीमात्रे, ईं माहेश्वरीमात्रे, ऊं कौमारीमात्रे, ॠं वैष्णवीमात्रे, ॡं वाराहीमात्रे, ऐं महेन्द्रीमात्रे, ॐ चामुण्डामात्रे, अः महालक्ष्मीमात्रे, द्रां सर्वसंक्षोभिणीमुद्राशक्त्यै, द्रीं सर्वविद्राविणीमुद्राशक्त्यै, क्लीं सर्वाकर्षिणीमुद्राशक्त्यै, ब्लूं सर्ववशङ्करीमुद्राशक्त्यै, सः सर्वोन्मादिनीमुद्राशक्त्यै, क्रों सर्वमहाङ्कुशामुद्राशक्त्यै, ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्त्यै, ह्सौः सर्वबीजमुद्राशक्त्यै, ऐं सर्वयोनिमुद्राशक्त्यै, हस्रैं ह्स्क्ल्रीं हस्रौः सर्वत्रिखण्डमुद्राशक्त्यै, प्रकटयोगिनीभ्यः, अं आं सौः त्रिपुराचक्रेश्वर्यै, अं अणिमासिद्ध्यै, द्रां सर्वसंक्षोभिणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा ।

४ ऐं क्लीं सौः सर्वाशापरिपूरकचक्राय, अं कामाकर्षिण्यै, आं बुद्ध्याकर्षिण्यै, इं अहङ्कारार्काषिण्यै, ईं शब्दाकर्षिण्यै, उं स्पर्शाकर्षिण्यै, ऊं रूपाकर्षिण्यै, ऋं रसाकर्षिण्यै, ॠं गन्धाकर्षिण्यै, ऌं चित्ताकर्षिण्यै, ॡं धैर्याकर्षिण्यै, एं स्मृत्याकर्षिण्यै, ऐं नामाकर्षिण्यै, ओं बीजाकर्षिण्यै, औं आत्माकर्षिण्यै, अं अमृताकर्षिण्यै, अः शरीराकर्षिण्यै, गुप्तयोगिनीभ्यः, ऐं क्लीं सौः त्रिपुरेशीचक्रेश्वर्यै, लं लघिमासिद्ध्यै, द्रीं सर्वविद्राविणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।

३ ह्रीं क्लीं सौः सर्वसंक्षोभणचक्राय, कं-५ अनङ्गकुसुमायै, चं-५ अनङ्गमेखलायै, टं-५ अनङ्गमदनायै, तं-५ अनङ्गमदनातुरायै, पं-५ अनङ्गरेखायै, यं-४ अनङ्गवेगिन्यै, शं-४ अनङ्गाङ्कुशायै, ळं क्षं अनङ्गमालिन्यै, गुप्ततरयोगिनीभ्यः, ह्रीं क्लीं सौः त्रिपुरसुन्दरीचक्रेश्वर्यै, मं महिमासिद्ध्यै, क्लीं सर्वाकर्षिणीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।

४ हैं ह्क्लीं ह्सौः सर्वसौभाग्यदायकचक्राय, कं सर्वसंक्षोभिण्यै, खं सर्वविद्राविण्यै, गं सर्वाकर्षिण्यै, घं सर्वाल्हादिन्यै, ङं सर्वसम्मोहिन्यै, चं सर्वस्तम्भिन्यै, छं सर्वजृम्भिण्यै, जं सर्ववशङ्कर्यै, झं सर्वरञ्जन्यै, ञं सर्वोन्मादिन्यै, टं सर्वार्थसाधिन्यै, ठं सर्वसम्पत्तिपूरण्यै, डं सर्वमन्त्रमय्यै, ढं सर्वद्वन्द्वक्षयङ्कर्यै, सम्प्रदाययोगिनीभ्यः, हैं ह्क्लीं ह्सौः त्रिपुरवासिनीचक्रेश्वर्यै, ईं ईशित्वसिद्ध्यै, ब्लूं सर्ववशङ्करीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।

४ ह्सैं ह्स्क्लीं ह्सौः सर्वार्थसाधकचक्राय, णं सर्वसिद्धिप्रदायै, तं सर्वसम्पत्प्रदायै, थं सर्वप्रियङ्कर्यै, दं सर्वमङ्गलकारिण्यै, धं सर्वकामप्रदायै, नं सर्वदुःखविमोचिन्यै, पं सर्वमृत्युप्रशमन्यै, फं सर्वविघ्ननिवारिण्यै, बं सर्वाङ्गसुन्दर्यै, भं सर्वसौभाग्यदायिन्यै, कुलोत्तीर्णयोगिनीभ्यः, ह्सैं ह्स्क्लीं ह्स्सौः त्रिपुराश्रीचक्रेश्वर्यै, वं वशित्वसिद्ध्यै, सः सर्वोन्मादिनीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा।

४ ह्रीं क्लीं ब्लें सर्वरक्षाकरचक्राय, मं सर्वज्ञायै, यं सर्वशक्त्यै, रं सर्वैश्वर्यप्रदायै, लं सर्वज्ञानमय्यै, वं सर्वव्याधिविनाशिन्यै, शं सर्वाधार-

स्वरूपायै, षं सर्वपापहरायै, सं सर्वानन्दमय्यै, हं सर्वरक्षास्वरूपिण्यै, क्षं सर्वेप्सितफलप्रदायै, निगर्भयोगिनीभ्यः, ह्रीं क्लीं ब्लें त्रिपुरमालिनी-चक्रेश्वर्यै, पं प्राकाम्यसिद्धयै, क्रों सर्वमहाङ्कुशामुद्राशक्त्यै, मूलं ललिता-महात्रिपुरसुन्दर्यै स्वाहा ॥

४ ह्रीं श्रीं सौः सर्वरोगहरचक्राय, अं + + अः(१६) ब्लूं वशिनीवाग्दे-वतायै, कं-५ क्ल्ह्रीं कामेश्वरीवाग्देवतायै, चं-५ न्व्लीं मोदिनीवाग्देवतायै, टं-५ य्लूं विमलावाग्देवतायै, तं-५ ज्म्रीं अरुणावाग्देवतायै, पं-५ ह्स्ल्व्यूं जयिनीवाग्देवतायै, यं-४ झ्म्र्यूं सर्वेश्वरीवाग्देवतायै, शं-६ क्ष्म्रीं कौलिनी वाग्देवतायै, रहस्ययोगिनीभ्यः, ह्रीं श्रीं सौः त्रिपुरासिद्धाचक्रेश्वर्यै, भुं भुक्ति-सिद्धयै, ह्स्ख्फ्रें सर्वखेचरीमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा ॥

४ यां रां लां वां सां द्रां द्रीं क्लीं ब्लूं सः सर्वजम्भनेभ्यः कामेश्वरीकामे-श्वरबाणेभ्यः स्वाहा ॥

४ थं धं सर्वसंमोहनाभ्यां कामेश्वरीकामेश्वरधनुर्भ्यां स्वाहा ।

४ ह्रीं आं सर्ववशीकरणाभ्यां कामेश्वरीकामेश्वरपाशाभ्यां स्वाहा ।

४ क्रों क्रों सर्वस्तम्भनाभ्यां कामेश्वरीकामेश्वराङ्कुशाभ्यां स्वाहा ।

४ ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वसिद्धिप्रदचक्राय, ऐं क-५ महाकामेश्वर्यै, क्लीं ह-६ महावज्रेश्वर्यै, सौः स-४ महाभगमालिन्यै, ऐं क-५ क्लीं ह-६ सौः स-४ श्रीमहात्रिपुरसुन्दर्यै, अतिरहस्ययोगिनीभ्यः, ह्स्रैं ह्स्क्ल्रीं ह्स्रौः त्रिपुराम्बाचक्रेश्वर्यै, इं इच्छासिद्धयै, ह्सौः सर्वबीजमुद्राशक्त्यै, मूलं ललिता-महात्रिपुरसुन्दर्यै स्वाहा ॥

४ पञ्चदशी सर्वानन्दमयचक्राय, मूलं श्रीललितामहात्रिपुरसुन्दर्यै स्वाहा । इति दशवारं, परापरातिरहस्ययोगिन्यै, मूलं त्रिपुरसुन्दरीचक्रेश्वर्यै, पं प्राप्तिसिद्धयै, ऐं सर्वयोनिमुद्राशक्त्यै, मूलं ललितामहात्रिपुरसुन्दर्यै स्वाहा ॥

४ षोडश्युपासकानां—'तुरीयविद्या' तुरीयाम्बायै, सं सर्वकामसिद्धयै, ह्स्रैं ह्स्क्ल्रीं ह्स्रौः सर्वत्रिखण्डामुद्राशक्त्यै, 'महाषोडशी' महात्रिपुर-सुन्दरीपराभट्टारिकायै स्वाहा ॥

पञ्चपञ्चिकादिहोमे तत्तन्मन्त्रेण प्रदर्शितरीत्या होमः कर्तव्यः ॥

ततो होमावशिष्टेन आज्येन स्रुचं पूरयित्वा पुष्पं फलं अग्रे निधाय स्रुवेणाच्छाद्य मूलेन वौषट् इति उत्थितो जुहुयात् ॥ ततो बलिदानम् (पुटं १८६) । ततो महाव्याहृतिहोमः । यथा—

७ भूरग्नये च पृथिव्यै च महते च स्वाहा । अग्नये पृथिव्यै महत इदम् । ७ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । वायवे अन्तरिक्षाय महत इदम् । ७ स्वरादित्याय च दिवे च महते च स्वाहा । आदित्याय दिवे महत इदम् । ७ भूर्भुवःस्वश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् । इति चतस्र आहुतीराज्येन हुत्वा ।

ऐं ह्रीं श्रीं ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा । परब्रह्मण इदम् । इति ब्रह्मार्पणाहुतिं विदध्यात् ॥

अस्मिन् ललिताहोमकर्मणि मध्ये सम्भावितसमस्तमन्त्रलोपतन्त्रलोपद्रव्यलोपक्रियालोपाज्यलोपन्यूनातिरेकविस्मृतिविपर्यासप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि । ॐ भूर्भुवस्वः स्वाहा । प्रजापतय इदम् । श्रीविष्णवे स्वाहा । विष्णवे परमात्मन इदम् । नमो रुद्राय पशुपतये स्वाहा । रुद्राय पशुपतय इदम् । आप उपस्पृश्य । सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धामप्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा । अग्नये सप्तवत इदम् । आज्यपात्रादीनुत्तरतो निधाय प्राणायामं कृत्वा, अग्निं परिषिञ्चति । अदितेऽन्वमँस्थाः । अनुमतेऽन्वमँस्थाः । सरस्वतेऽन्वमँस्थाः । देव सवित प्रासावीः ॥

ततः प्रणीतात्रं स्वस्य पुरत आदाय, पूर्णमसि पूर्णं मे भूयाः । सदसि सन्मे भूयाः । सर्वमसि सर्वं मे भूया ॥ इति अन्यजलं नीनीय तज्जलं प्रागादिप्रदक्षिणं—प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् ।

ऊर्ध्वायां दिशि यज्ञः सम्वत्सरो यज्ञपतिर्मार्जयन्ताम्—इति प्रतिदिशमुत्सृज्य पुरस्तात् निस्राव्य, तेन—ब्राह्मणेष्वमृतं हितं येन देवाः पवित्रेणात्मानं पुनते सदा तेन सहस्रधारेण पावमान्यः पुनन्तु मा—इत्यात्मानं प्रोक्ष्य, प्रागादिपरिस्तरणमुत्तरे विसृजेत्। अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्॥ इत्युपस्थाय चिदग्निं, उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्यं वह नः प्रजानन्। आयुः प्रजाँ रयिमस्मासु धेहि अजस्रो दीदिहि नो दुरोणे॥ ललिताग्निमात्यन्युद्वासयामि नमः इत्युद्वास्य हृदये अञ्जलिं दद्यात्।

तद्भूतितिलकं—त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् यद्देवेसु त्र्यायुषं तन्नोऽस्तु त्र्यायुषम्। इति त्र्यायुषेण मन्त्रेण धारयेत्।

इति होमप्रकरणम् समाप्तम्॥

जपप्रकरणे सूत्रकृता पुरश्चरणादिकं न विधित्सितम् काम्यकर्मण्येवतस्यावश्यकत्वात्। युक्तं चैतत्—

शुभं वाऽप्यशुभं वाऽपि काम्यं कर्म करोति यः।
तस्यारित्वं व्रजेन्मन्त्रो न तस्मात् तत्परो भवेत्॥
काम्यकर्मप्रसक्तानां तावन्मात्रं फलं भवेत्।
निष्कामं भजतां देवमखिलाभीष्टसिद्धयः॥

देवेत्युपलक्षणं देव्या अपि। काम्यकर्मविधिश्च दुःसाध्यश्चेत् कस्यचित् काम्यफललिप्सा, तेन तदा श्यामाक्रमोक्तं पुरश्चरणादिकं काम्यहोम-द्रव्यं चानुसन्धेयम्।

## श्यामदीनामुपासनाकालः

ललिता प्राह्णे, अपराह्णे श्यामा, रात्रौ दण्डिनी, ब्राह्मे महूर्त्ते परा, सूर्यपरावृत्तिप्राक्कालः प्राह्णः।

श्रीललितामहात्रिपुरसुन्दर्य्याः प्रधानसचिवपदमलङ्करोति श्यामा तदुपासनद्वारा श्रीविद्या प्रसीदति। यथा राजदर्शनोत्सुका आदौ प्रधानसचिवमुपसेव्य तद्द्वारा राजदर्शनं कुर्वन्ति तथैव श्यामायाः प्रथममुपासनं न्याय्यम्। 'प्रधानद्वारा राजप्रसादनं हि न्याय्यम्' इति परशुरामसूत्रात्।

साङ्गां सङ्गीतमातृकां श्यामामिष्ट्वा सिंहासनारूढायाः ललितायाः महाराज्ञ्याः दण्डनायिकास्थानीयां दुष्टनिग्रहशिष्टानुग्रहनिरर्गलाज्ञां चन्द्रां कोलमुखीं वरिवस्येत्। इयञ्च महारात्रे पूज्या। ततश्च श्रींविद्याया महाराज्ञ्या हृदयात्मिकां परां पूजयेत्। तत्प्रीतौ श्रीविद्या प्रीतिः सुतरां सम्पद्यते 'प्रभुहृदयज्ञातुः पदे पदे सुखानि' भवन्तीति परशुरामसूत्रात्।

### क्रत्वर्थनियमाः

कृष्णाष्टमीतच्चतुर्दश्यमापूर्णिमासंक्रान्तिसंज्ञेषु पर्वसु पञ्चसु सविशेषैः साधनैः आराधयेत्। तत्प्रकारस्तु नैमित्तिकप्रकरणे वक्ष्यते। नित्यनैमित्तिकक्रमौ च शिष्यसुतादिभिरपि कारयितुं शक्यते।

श्रीललितोपासको नेक्षुखण्डं भक्षयेत्। न दिवा स्मरेद्वार्तालीम्। न जुगुप्सेत सिद्धद्रव्याणि। न कुर्यात् स्त्रीषु निष्ठुरताम्। वीरस्त्रियं न गच्छेत्। न तां हन्यात्। न तत् द्रव्यमपहरेत्। नात्मेच्छया मपञ्चकमुररीकुर्यात्। कुलभ्रष्टैः सह नासीत। न बहु प्रलपेत्। योषितं सम्भाषमाणामप्रतिसम्भाषमाणो न गच्छेत्। कुलपुस्तकानि गोपायेत्। एते क्रत्वर्थनियमाः अकरणे क्रतुवैगुण्यापादकाः साधकेनावश्यमनुष्ठेयाः। अन्यांश्च दीक्षाक्रमोक्तान् सामायिकानामाचाराननुतिष्ठेत्। अनिशमात्मनं कामकलात्मकं श्रीदेवीरूपं भावयेत्। एवं वर्तमानस्य कुलनिष्ठस्य सर्वतः कृतकृत्यता। शरीरविमोके च श्वपचगृहकाश्योर्नान्तरम्। स एव जीवन्मुक्तः सुखी विहरेदिति॥

### श्रीचक्रप्रतिष्ठापनविधिः

दीक्षाप्रकरणोक्ते शुभे दिवसे कृतान्हिकः साधको गणपतिमाराध्य ब्राह्मणैः स्वस्ति वाचयित्वा आचम्य प्राणानायम्य देशकालौ संकीर्त्य अमुकगोत्रोऽमुकशर्मवर्मादिरहं महात्रिपुरसुन्दरीमाराधयिष्यन् श्रीचक्रराजप्रतिष्ठापनं करिष्ये, इति दुग्धदधिघृतशकृन्मूत्रात्मकं पञ्चगव्यमानीय सम्मिश्र्य ह्रौं इति मन्त्रेण अष्टोत्तरशतवारानभिमन्त्र्य, तत्र प्रणवेन

यन्त्रं निक्षिप्य ततः उद्धृत्य पात्रान्तरे निधाय, मिश्रितेन गोदुग्धदधिघृतमधुशर्करात्मकेन पञ्चामृतेन संस्नाप्य धूपयेत्। अथ प्रत्येकं दुग्धादिभिः क्रमेण अन्तरान्तरा धूपनपूर्वकं स्नपयित्वा पुनर्मिश्रितैश्च तैः स्नपयेत्। ततोऽष्टासु दिक्षु शालितण्डुलपुञ्जोपरि निहितैः नूतनवसनवेष्टितैः गन्धपुष्पार्चितैः कुङ्कुमरोचनाचन्दनकस्तूरीसुरभिलशीतलसलिलपूर्णैः कुशाग्रेण स्पृष्ट्वा मूलेनाष्टोत्तरशतवारानभिमन्त्रितैः सौवर्णादिमार्त्तिकान्तान्यतमैरष्टभिः कलशैरभिषिञ्चेत्। इह सर्वमपि पञ्चगव्यादिकं स्नानं मूलमन्त्रकरणकमेव। अथ यन्त्रं धौतेन वाससा परिमृज्य पीठे निधाय कुशाग्रैः स्पृशन्—ऐं ह्रीं श्रीं ॐ यन्त्रराजाय विद्महे महायन्त्राय धीमहि। तन्नो यन्त्रः प्रचोदयात्, इति यन्त्रगायत्रीम् अष्टोत्तरशतवारानावर्त्यात्मनो भूतशुद्धयादिमातृकान्यासान्तं कृत्वा यन्त्रं करेण संस्पृश्य प्राणप्रतिष्ठां कुर्यात्। यथा—

अस्य श्रीयन्त्रराजस्य प्राणप्रतिष्ठामहामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुस्सामाथर्वाणि छन्दांसि, चैतन्यं देवता। आं बीजम्, ह्रीं शक्तिः, क्रों कीलकम् मम श्रीचक्रप्राणप्रतिष्ठायै जपे विनियोगः।

ऐं ह्रीं श्रीं अं कं खं गं घं ङं पृथिव्यप्तेजोवाय्वाकाशात्मने आं अङ्गुष्ठाभ्यां नमः।

३ इं चं छं जं झं ञं शब्दस्पर्शरूपरसगन्धात्मने ईं तर्जनीभ्यां नमः।

३ उं टं ठं डं ढं णं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यां नमः।

३ एं तं थं दं धं नं वाक्पाणिपादपायूपस्थात्मने ऐं अनामिकाभ्यां नमः।

३ ओं पं फं बं भं मं वचनादानविहरणविसर्गानन्दात्मने औं कनिष्ठिकाभ्यां नमः।

३ अं यं रं लं वं शं षं सं हं ळं क्षं मनोबुद्ध्यहङ्कारचित्तान्तःकरणात्मने अः करतलकरपृष्ठाभ्यां नमः। एवं हृदयादिन्यासः। ध्यानम्—

रक्ताम्बोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदण्डमिक्षूद्भवमलिगुणमप्यङ्कुशं पञ्चबाणान्।
बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः॥

ऐं ह्रीं श्रीं ॐ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः श्रीचक्रस्य प्राणाः इह प्राणाः, ३ ॐ हंसः श्रीचक्रस्य जीव इह स्थितः, ३ ॐ हंसः श्रीचक्रस्य सर्वेन्द्रियाणि, ३ ॐ हंसः''''श्रीचक्रस्य वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा, इति।

(यन्त्रान्तरप्राणप्रतिष्ठायां तत्तन्नाम्नः ऊहः कार्यः)। अथ तत्र श्रीक्रमोक्तेन विधिना देवीमावाह्याभ्यर्च्य यन्त्रं कुशाग्रैः स्पृशन् मूलमष्टोत्तरसहस्रं शतं वा वारानावर्त्य होमप्रकरणोक्तेन क्रमेणाष्टोत्तरशतमाज्याहुतीः मूलेन हुत्वा सम्पाताज्यं मध्ये मध्ये यन्त्रे अवनीय सव्यञ्जनेनान्नेन सर्वभूतबलिं प्रदाय होमशेषं समाप्य गुरुवे सुवर्णशृङ्गालङ्कृतां गां वसनाभरणानि च प्रदाय देवीमुद्वास्य कुमारीं योगिनीं ब्राह्मणांश्च भोजयेत्। इमाञ्च यन्त्रप्रतिष्ठां गुर्वादिना वा कारयेदिति वामकेश्वरतन्त्रीयो यन्त्रप्रतिष्ठापनविधिः।

इति श्रीचक्रप्रतिष्ठापनविधिः समाप्तः॥

## मुद्राप्रकरणम्

### श्रीगुरुवन्दनमुद्राः

विकासितकल्प उत्तानाञ्जलिः सुमुखम्। इदमेव मुष्टीकृतं सुवृत्तम्। ऊर्ध्वाधः स्थितयोः दक्षवामकरतलयोः अङ्गुलीनां मिथो मणिवन्धसम्वन्धे चतुरस्रम्। अधरोत्तरस्य वामदक्षमुष्टियुगस्य स्वाभिमुख्येन योजने मुद्गरः। तिर्यङ्मिलिताग्रयोः मध्यमयोः पश्चात् ऊर्ध्वाधः स्थिते वामदक्षानामिके तिरः प्रसारिते तर्जनीभ्यां निपीड्य वामकनिष्ठां दक्षिणया धृत्वा अङ्गुष्ठाग्रयोः मध्यमापुरोमध्यपर्वद्वयसम्वन्धे योनिः॥

इति श्रीगुरुवन्दनमुद्राः॥

### अर्घ्यस्थापनमुद्राः

अधोमुखप्रसारितं वामदक्षकरतलयुगमधरोत्तरं विधायाङ्गुष्ठद्वयचालने मत्स्यः। लक्ष्यममितः छोटिकां दत्वा दक्षमध्यमातर्जनीभ्यां अधिवामकरतलं त्रिस्ताडने अस्त्रम्। अधोमुखस्य दक्षवाममुष्टिद्वयस्य प्रसारितयोः तर्जन्योः स्वस्वभागमारभ्य क्रमेण लक्ष्यं परितः प्रादक्षिण्यवामावर्ताभ्यां

परिभ्रमणे अवगुण्ठनम्। अभिमुखमन्योन्यग्रथितानां दक्षवामकराङ्गुलीनां क्रमेण कनिष्ठानामे तर्जनींमध्यमे च संयोज्य अधोमुखीकरणे धेनुः। योनि-रुक्तैव। उत्तानस्य वामकरस्य विरलं आकुञ्चितैः अनामामध्यमातर्जन्यग्रैः अधोमुखस्य दक्षस्य वक्रीकृतानि तानि संयोज्य कनिष्ठाङ्गुष्ठाग्राणां मिथः सम्बन्धे गालिनी ॥

## अर्चने मुद्राः

विततोत्तान ऊर्ध्वाधो व्यापारितोञ्जलीः आवाहनी। तथाविधो न्युब्जाञ्जलिः संस्थापनी। उदङ्गुष्ठयोः मुष्ट्योरभिमुखयोगे सन्निधापनी। सैवकनिष्ठामूलं अन्तःप्रविष्टाङ्गुष्ठमिथः स्पृष्टनखा सन्निरोधिनी। सन्निधा-पन्येव तिरः प्रयोजिता सम्मुखी करणी। अवगुण्ठनी उक्तैव। उदङ्गु-लिनोः करतलयोः योजने वन्दनं प्रसिद्धम्। धेनुयोनि उक्ते एव। वामा-नामाङ्गुष्ठयोगे तत्वमुद्रा। दक्षाङ्गुष्ठतर्जनीयोगे ज्ञानमुद्रा।

## सङ्क्षोभिण्यादिमुद्राः

उत्तानयोः करतलयोः प्रसारिततर्जनीकं संहृतकनिष्ठानामामध्यमाग्राण्य-न्योन्याभिमुख्ये संयोज्य स्वस्वकनिष्ठोपर्यङ्गुष्ठाग्रसम्बन्धे सर्वसङ्क्षोभिणी। सैव प्रसारितमध्यमाऽपि सर्वविद्राविणी। इयमेव मध्यमा तर्जन्योराकुञ्चने सर्वाकर्षणी। परस्परग्रथिताङ्गुलिस्पृष्टनखाग्राङ्गुष्ठयोः मुष्टयोः योगे सर्ववशङ्करी। अधरोत्तरं तिर्यक्प्रसारिते वामदक्षिणकनिष्ठे मध्यमाभ्यां धृत्वा तयोरग्रे अङ्गुष्ठाभ्यां निपीड्य अनामातर्जन्यग्राणां पार्श्वतो मिथः संस्पर्शे सर्वोन्मादिनी। एषैव अनामयोराकुञ्चने तर्जन्योः किञ्चित् भुग्नत्वे च सर्वमहाङ्कुशा। दक्षभुजमध्यसन्धिस्थापितवामकूर्परमामणिबन्धम्पाणी परिवर्त्य स्वाभिमुखमन्योन्य स्पृष्टाग्रयोः मध्यमयोः पृष्ठतोऽधरोत्तरं तिरः प्रसारितानि दक्षवामानामा कनिष्ठाग्राणि तर्जनीभ्यां धृत्वा पुरोऽङ्गुष्ठयो-रन्योन्यसम्बन्धे सर्वखेचरी। ऊर्ध्वाधस्तिरः प्रसृते वामदक्षकनिष्ठाग्रे धृत्वा अर्धचन्द्राकृतियोजितेषु तर्जन्यङ्गुष्ठेषु मिथः श्लिष्टाभ्यामृजुभ्यां मध्य-माभ्यां तर्जन्योः सम्बन्धे सर्वबीजा। योनिरुक्तैव। अस्यामेव ऋजूकृतयोः

कनिष्ठयोः मध्यमयोरङ्गुष्ठयोश्च पृथङ्मिथः संस्पर्शे सर्वत्रिखण्डा । उदग्राणां विरलाणां वामकराङ्गुलीनां ईषदाकुञ्चने ग्रासः । मध्यमा तर्जन्यङ्गुष्ठयोगे प्राणमुद्रा मध्यानामाऽङ्गुष्ठमेलने अपानस्य । कनिष्ठाऽनामाऽङ्गुष्ठसम्बधं व्यानस्य । तर्जन्यनामाऽङ्गुष्ठमिश्रणे उदानस्य । सर्वाङ्गुलिसंश्लेषः समानस्य । वाममुष्टेरङ्गुष्ठाग्रचुम्बितमूलपर्वणि तर्जन्यामीषदधोमुखप्रसृतायां नाराचः । व्यत्ययेन वामदक्षकर कनिष्ठाङ्गुष्ठाग्रयोः योगे अन्यासां वैरल्येन प्रसारणे च चक्रम् ।

## न्यासे मुद्राः

संहताभिः चतसृभिः अङ्गुलीभिः मुखस्पर्शे मुखम् । सम्पुटीकृतयोः करयोः मिथोऽभिमुखप्रश्लेषे करसम्पुटम् । किञ्चिदाकुञ्चिताङ्गुल्यग्रयोः स्वाभिमुखं करयोरन्योन्यसम्बन्धे अञ्जलिः । तर्जनीमध्यमानामाग्रैः हृदय-स्पर्शे हृदयम् । मध्यमाऽनामाग्रयोः ब्रह्मरन्ध्रसम्बन्धे शिरः । अङ्गुष्ठाग्र चूल्लीयोगे शिखा । व्यत्ययहस्तयोरधरोत्तरवामहस्तदक्षकरयोः सर्वाङ्गु-लीभिः अंससम्बन्धे कवचम् । तर्जनीमध्यमाऽनामाग्रैः नेत्रयुगमध्यस्पर्शे नेत्रम् । अस्त्रं उक्तचरम् । एताः षडङ्गन्यास एव । अङ्गुष्ठमिलितया अनामिकया तदत्ताङ्गस्पर्शे न्यासमुद्रा । वामहस्तमुष्टिं बद्ध्वा सरलया तर्जन्या अंसकर्णमभितो भ्रामणे सौभाग्यदण्डिनी । सैव गर्भिताङ्गुष्ठ वाम-पादतलं न्यस्ता रिपुजिह्वाग्रहा । अन्त्यमिदं मुद्रायुगलं श्रीषोडशाक्षरी-विषयम् ।

## जपे मुद्राः

मुख कर सम्पुट षडङ्ग मुद्राः प्रोक्तचर्यं एव । परस्परमनभिमुख-ग्रथिताकुञ्चतानामामध्यमाकनिष्ठं करौ परिवर्त्य प्रसारित तर्जनीयुगाग्र-सम्बन्धे शक्त्युत्थापनी । सर्वसङ्क्षोभिण्यादयो दश दर्शितचर्याः । अभि-मुखाभ्यां दक्षमध्यमातर्जनीभ्यां पराङ्मुखयो वाममध्यमातर्जन्योः अवपी-ड्याकर्षणेऽन्यासामङ्गुलीनां आकुञ्चने च पाशः । उदग्रायां दक्षमध्यमायां तन्मध्यपर्वस्पर्शिमध्यपर्वण स्तर्जन्याकुञ्चने अनामाकनिष्ठाग्रयोश्चाङ्गुष्ठाग्र-

निपीडने अंकुशः। उत्तानदक्ष मध्यमाऽग्रेण तादृशतर्जन्यग्रपरिग्रहे चापः। वाणस्तु नाराचपदेनोक्तचर एव॥ आहत्य अपुनरुक्ता मुद्राः पञ्चाशत्। एतासां प्रकारभेदोऽपि तन्त्रान्तरेषु दृश्यत इति शिवम्॥

मुद्राप्रकरणं समाप्तम्॥

## नैमित्तिकप्रकरणम्

### पर्वसु नैमित्तिकार्चनविधिः

उक्तेन क्रमेण नित्यक्रमनिरतः साधकः प्रतिमासं पञ्चपर्वसु नैमित्तिकमर्चनमाचरेत्—

नित्यार्चनरतैः सिद्धै कार्यं नैमित्तकार्चनम्॥

इति तन्त्रराजवचनात्। तच्च नित्यार्चनाधिकसाधनविशेषकरणम् पर्वाणि तु कृष्णाष्टमी कृष्णचतुर्दशी दर्शः पूर्णिमा सङ्क्रान्तिश्चेति कुलार्णवोक्तानि। तत्र कालस्य कर्तव्यतायाश्च निर्णयः। सङ्क्रान्तिव्यतिरिक्तपर्वार्चनं सूर्यास्तमयोत्तरं दशघटिकाऽऽत्मके रात्रिपूर्वभागे कार्यम्। सङ्क्रमणसपर्या तु तत्तत्सङ्क्रान्तिपुण्यकालोपलक्षितासु घटिकासु। तदुक्तम्—

प्रागूर्ध्वं च दशैव मेषतुलयोः सिंहे वृषे वृश्चिके।
कुम्भे षोडशपूर्वतोऽथ मिथुने मीने धनुः कन्ययोः।
ऊर्ध्वाः षोडश कीर्तिताः प्रथमतस्त्रिंशन्तु कर्काटके।
चत्वारिंशदथो परास्तु मकरे पुण्यप्रदा नाडिकाः॥ इति॥

नाडिकाः घटिकाः। अष्टमी चतुर्दशी दर्शपूर्णिमानां स्वस्वदिने पूजाकालव्याप्तौ न विवादः। दिनद्वये एकदेशव्याप्तौ यत्राधिका सा तिथिर्ग्राह्या। समव्याप्तौ परैव। तिथि वृद्धिह्रासवशेन चतुर्दशी दर्शयोः एकस्मिन्नेव दिने पूजाकालव्याप्तौ नैमित्तिकद्वयस्य तन्त्रेणानुष्ठानम्। तदा सङ्क्रान्तियोगे तु तत्र तस्यापि दिवा सङ्क्रमणे सति नित्यार्चनस्य प्रासङ्गिकी सिद्धिः। यत्र चतुर्णां नैमित्तिकार्चनानां एकस्मिन्नेव काले सन्निपातः सम्भाव्यते तत्र तेषामप्येकतन्त्रेणैव। यथा दमन समर्पणस्य मुख्यकाले चैत्रपूर्णिमायामसम्भवे तत्कृष्णचतुर्दशी दर्शादि ज्येष्ठकृष्णचतुर्दशीदर्शान्ते गौणकाले। यथा

च पवित्रारोपणस्य श्रावण्यामलाभे आ मिथुन सङ्क्रमणं आ च तुलासङ्क्रान्ति प्रोक्तासु तिथिसु आश्विनशुक्लाष्टमीनवमीचतुर्दशीपूर्णासु च तत्कृष्ण चतुर्दशीदर्शयोश्च तादृशि विषये पूजाद्वयं त्रयं चतुष्टयं वा करिष्य इति सङ्कल्पयेदिति दिक् ॥

## नित्यक्रमात् नैमित्तिके विशेषः

तत्र परिगणितेषु पर्वसु प्रातः नित्यक्रमं निर्वर्त्य रात्रौ अमुकपर्व प्रयुक्तं नैमित्तिकार्चनं करिष्य इति सङ्कल्प्य यथाविभवं समारम्भ विशेषेण क्रमो निर्वर्तनीयः। चैत्राद्यासु पौर्णमासीषु तु वक्ष्यमाणेन विधिना तत्रान्तरोक्तेन दमनकादि समर्पणमपि। सति सम्भवे आश्वयुज्यां तत्प्रतिपदादि पर्वान्त-प्रयोगोऽप्यनुष्ठेयः, "पञ्चपर्वसु विशेषार्चा" इति सूत्रस्य नानाविद्याऽङ्गशाल्यर्चाबोधकत्वात्, विविधाः शेषाः कालद्रव्यक्रियाऽऽदिरुपाण्यङ्गानि यस्यां तादृश्यर्चेति विग्रहात् ॥

## निवेदने पक्षभेदाः

तत्र द्रवद्रव्यनिवेदने त्रयः पक्षा भवन्ति। पृथक्-पृथक् पातस्थं हिमोदकादिके ऐं ह्रीं श्रीं अमुकदेवतायाः अमुकं कल्पयामि नम इति तत्तन्नाम-घटितेन उपचारमन्त्रेण प्रधानदेव्यादिभ्यो नवचक्रेश्वर्यन्ताभ्यस्त्रिपञ्चाशदुत्तरशतसंख्याकाभ्यो देवताभ्यः प्रत्येकं निवेदयेत्। इह प्रधानदेव्या सह नित्याः षोडश, महाकामेश्वर्यादयश्चतस्रः, त्रिपुरादयः चक्रेश्वर्यो नव, कामेश्वरायुधदेव्यः चतस्र इति विवेकः। यदि वा प्रधानदेवतानिवेदनोत्तरं ३ अङ्गदेवीभ्यो नित्याभ्यो अमुकौघायौघत्रयाय अणिमाऽऽदिभ्यो मातृभ्यो मुद्रादेवीभ्यो अणिमाऽऽदिभ्यो वा कामेश्वर्यादि नित्याकलाभ्यः अनंग-कुसुमादिभ्यः सर्वसङ्क्षोभिण्यादिभ्यः सर्वसिद्धिप्रदाभ्यः सर्वज्ञादिभ्यो वशिन्यादिभ्यः आयुधदेवीभ्यो महाकामेश्वर्यादिभ्यः त्रिपुराचक्रेश्वरीभ्योऽमुकं कल्पयामीति तत्समष्ट्यै निवेदयेत्। अथवा प्रधानदेवतायै पृथङ् निवेद्य—ऐं ह्रीं श्रीं हृदयदेव्यादिभ्यो नवचक्रेश्वर्यन्ताभ्योऽमुकं कल्पयामीति सर्व-समष्ट्यै निवेदयेदित्येकः ॥

अनेकपात्रासम्भवे अष्टादश चतुर्दश वा पात्राणि तत्तद्द्रव्यसम्भृतानि उपहृत्य पूर्वोक्तान्यतमेन प्रकारेण निवेदयेदिति द्वितीयः। अत्रौघत्रयसिद्धिमातृमुद्राणां पार्थक्यतदन्यत्वाभ्यां पात्राणामष्टदशत्वं चतुर्दशत्वञ्च ज्ञेयम् ॥

तत्राप्यसम्भवे प्रथमद्वितीययोः प्रकारयोः महति पात्रे सम्भृतं हिमोदकादिकम् उपपात्रेण आदायादाय निवेद्य निवेद्य पात्रान्तरे निक्षिपेत्। अन्त्ये तु प्रकारे महापात्रस्थं सर्वाभ्यो देवताभ्यो युगपन्निवेदयेदिति तृतीयः ॥

कठिनद्रव्यनिवेदने पक्षद्वयम् ॥ तत्रफलादिकमुक्तदेवतासमसंख्याकमुक्तान्यतमेन प्रकारेण तत्तद्देवतायै निवेदयेदित्येकः। तदशक्तौ यथासम्भवमुपहृत्येतिद्वितीयः ॥

पवित्रारोपणे दीपदाने च प्रथमपक्षीयः प्रथमप्रकार एव नान्यो हिमोदकादौ। सङ्कोचपक्षाश्रयणे वीजमशक्तिरवसराभावो वा तन्त्रान्तरोक्तानां चतुराम्नायपञ्चसिंहासनपञ्चपञ्चिकाषड्दर्शनाङ्गदेवीभूतशक्तिसमयदेवतानामप्यर्चने अभ्युदय एवेति दिक् ॥

## दमनविधिः

अथादौ दमनार्चनम्। चैत्रशुक्लचतुर्दश्यां सायं स्वयं दमनारामं गत्वा।

ॐ शिवप्रसादसम्भूत अत्र सन्निहितो भवः।
देवीकार्यं समुद्दिश्य नेतव्योऽसि शिवाज्ञया ॥

इति दमनमामन्त्र्य अस्त्रमन्त्रेण समूलं दमनलताः सपर्यापर्याप्ता उत्पाट्य तदलाभे तद्गुच्छान्वा शस्त्रेण छित्वा स्वातन्त्र्याभावे विक्रेतुरनुमत्या क्रयक्रीता वा आनीयानाय्य वा पवित्रे वंशादिपात्रे निधाय मूलविद्यया शुद्धाभिरद्भिः अभ्युक्ष्य ऐं ह्रीं श्रीं दमनाय अमुकं कल्पयामि इत्यादिरीत्या उपचारमन्त्रैः गन्धपुष्पधूपदीपनैवेद्याख्यान् पञ्चोपचारान् आचर्य, सूक्ष्मनववस्त्रेण आच्छाद्य यागमन्दिर एव क्वचन शुचिनि स्थले निधाय जागृयात्। जागरणं त्वभ्युदयाय। इत्यधिवासनम्। इदं च सद्योऽपि वा कार्यम्। समानमेदुत्तरत्रापि कुसुमानाम्। दुग्धान्नादिनिवेद्यस्य तु सद्य एवोचितवासनम्। अथ पूर्णिमायां रात्रौ प्रधानदेवीपूजोत्तरं आवरणार्चने—

षोडशार्णे जगन्मातः वाञ्छितार्थफलप्रदे ।
हृत्स्थान् पूरय मे कामान् देवि कामेश्वरेश्वरि ॥

इति देवीं प्रार्थ्य, नित्यार्चनक्रमेणैव श्रीदेव्याद्याः देवताः चतुराम्नायादिसमयान्तदेवताश्च दमनैः समभ्यर्च्य नित्यहोमत्रिगुणित होमं कृत्वा मूलमन्त्रं च तथा जपित्वा अङ्गमन्त्रांश्च तद्दशांशं श्रीगुरुमभिपूज्य शक्तिसामयिकान् सम्भाव्य तैः सह अन्यैश्च ब्राह्मणैः भुञ्जीत । एतस्य मुख्यकाले कर्त्तुमसम्भवे चैत्रवैशाखज्येष्ठानां कृष्णाष्टमी कृष्णचतुर्दश्योः वैशाखज्येष्ठयोश्च वा कुर्यात् । इति दमनविधिः ।

## चैत्र पूर्णिमाकृत्यम्

अस्यामेव पूर्णिमायां वसन्तोत्सवोऽपि विहितः । तत्र दमनार्पण-वसन्तत्सवौ तन्त्रेण करिष्ये इति सङ्कल्प्य तत्कालसम्भवानि सकल्हाराणि कर्पूरचन्दनोक्षितानि कुसुमानि पूर्ववत् अधिवास्य तैर्दमनकैश्च युगपदर्चयेत् ॥ इति चैत्रपूर्णिमाकृत्यम् ॥

## वैशाखकृत्यम्

अथ वैशाख्यां पूर्णिमायां नैवेद्यावसरे प्राग्वदधिवासितं हेमन्तकाले सङ्गृहीतं तुषारोदकं तदलाभे कर्पूरमृगनाभिसुरभिलं शीतलं सलिलं वा पूर्वोक्तान्यतमेन पक्षेण सावरणायै देवतायै निवेदयेत् । अवशिष्टं प्राग्वत् ॥ इति वैशाखकृत्यम् ॥

## ज्यैष्ठकृत्यम्

अथ ज्येष्ठायां प्राग्वदधिवासितानि कदलीपनसाम्रादीनिफलानि उक्तया रीत्या कयाचित् उक्तमन्त्रैः प्रदानदेवतादिभ्यो निवेदयेत् । तैः अर्चयेदिति केचित् । अन्यत् समानम् ॥ इति ज्येष्ठकृत्यम् ॥

## आषाढ़कृत्यम्

अथाषाढ्यां प्राग्दधिवासनपूर्वकं श्रीदेव्यै कुङ्कुममिश्रं चन्दनं समर्प्य जातीकुसुमैः सावरणामभ्यर्च्य ताम्बूलावसरे लवङ्गैलाकङ्कोलानि उक्तेन प्रकारेण केनापि निवेदयेत् । शेषं पूर्ववत् ॥ इत्याषाढकृत्यम् ॥

## पवित्रारोपणविधिः

तदनुश्रावण्यां पूर्णिमायां पवित्रारोपणम्। तानि च सुवर्णरौप्यताम्रान्यतमन्तुसूत्रसरीपद्मदर्भमुञ्जशाणवल्कलकार्पासान्यमसूत्रविनिर्मितानि। कार्पाससूत्रं तु सुवासिनी कर्त्तृकम् उक्तान्यतमेन नवगुणितेन सूत्रेण निर्मितैः षोडशाङ्गुलायामैः तावत्संख्याकैः सरैः सम्पन्नं वेति द्वितीयः। तत्तदावरणगतशक्तिसमसंख्याकाङ्गुलायामसरग्रन्थिकम् वेति तृतीयः॥ आदिमपक्षद्वये पवित्राणि सर्वेषां साधारणानि। अन्तिमे तु पक्षे मूलदेव्याः षोडशनवान्यतराङ्गुलायामसरग्रन्थिकम्, महाकामेश्वर्यादीनां तिसृणां त्र्यङ्गुलायामादिकम्, अङ्गदेवीनां षण्णां तत्संख्याकाङ्गुलायामादिकम्। नित्यानां पञ्चदशाङ्गुलायामादिकम्, गुरुपंक्तित्रयस्य तत्तदोघसमसंख्याङ्गुलायामादिकम्, आयुधदेवीनां चतुरङ्गुलायामादिकमिति विशेषः। पक्षत्रयेऽपि व्याप्तस्य श्रीगुरोः प्रधानदेवीवत्। जीवतस्तस्य स्वस्य च क्रमागमज्ञशिष्यशक्तिसमयिकानाञ्च कण्ठादिनाभ्यन्तायाममङ्गीकृतपक्षन्यतमसंख्यसरग्रन्थिकं एकग्रथिकम् वा। क्रमः कालनित्याक्षरक्रमः। आगमः कादिकालीमतादिः। अन्येषां शक्तिसामयिकानां कण्ठादिनाभ्यन्तमानं नवसरमेकग्रन्थिकञ्च। वितानाद्देवताविष्टरायाममष्टोत्तरशतग्रन्थिकं शक्त्यवतारकं नाम। मण्डपस्य तत्परिधिसमप्रमाणमेकसरग्रन्थिकम्। होमाग्नेः षोडशनवान्यतराङ्गुलायाममेकसरमेकग्रन्थिकमञ्च पवित्रं कुर्यात्। ग्रन्थिः सूत्रवेष्टनरूपः। वेष्टनसंख्या तु उत्तमादिभेदेन षट्त्रिंशच्चतुर्विंशद्द्वादशात्मिका ऐच्छिकी वा। तन्मन्त्रस्तु बाला वा कवचं वा उक्तपक्षत्रये एकतमस्यैवाश्रयणीयत्वं मानसाङ्कर्यं अनिष्टापादकं सर्वथा नाचरेदिति स्थितिः। इत्थमुपकल्पितानि गोरोचनकुंकुमरक्तचन्दनमृगमदपंकालिप्तानि लाक्षागैरिकान्यतरचित्रितग्रन्थिकानि पवित्राणि प्राग्वदधिवास्य श्रावण्यां रात्रौ शक्त्यवतारकं पवित्रं वितानाल्लम्बयित्वा मण्डपं तत्सूत्रेणावेष्ट्य प्रधानदेवीपूजान्ते ज्ञानमुद्रोपात्तैः समं श्रीदेव्याद्यावरणान्तदेवताभ्यः तत्तत्पादुकया पृथक्-पृथक् समर्प्य अग्नये च पुरो निधाय श्रीगुरुशक्ति-

सामयिकेभ्यः प्रदाय स्वयं धृत्वा शिष्येभ्यो दद्यात् । एतावत्कर्तुमसम्भवे षण्णवति-अङ्गुलायामसरग्रन्थिकानि त्रीणि पवित्राणि कृत्वा श्रीदेव्यै समर्पयेत् । शेषं पूर्ववत् । एतन्मुख्यकालातिक्रमे मिथुनादितुलान्तसंक्रान्ति-गतासु कृष्णाष्टमीकृष्णचतुर्दशीपूर्णिमासु वा कार्यम् ॥

इति पवित्रारोपणविधिः ॥

## भाद्रपदकृत्यम्

ततो भाद्रपद्यां पूर्ववदधिवासितेनैकेन केतकीपुष्पेण अलाभे पत्रेण वा ज्ञानमुद्रया सर्वाः देवता अर्चयेत् । पुष्पं तु निष्कासितकेसरमिति श्रीगुरु-मुखागमः । शेषं समानम् । इति भाद्रपदकृत्यम् ॥

## आश्वयुजकृत्यम्

अथाश्वयुज्यां पुष्पविशेषं निवेद्य विशेषकरणकः क्रमः प्रवर्तनीयः ।

अथवा—

आश्वयुज्यां विशेषस्तु दर्शान्तप्रतिपत्तिथिम् ।
आरभ्य पूजयेत् देवीं गन्धपुष्पोपहारकैः ॥

इति तन्त्रराजवचनात् तच्छुल्कप्रतिपदादि पूर्णावधिकः प्रयोगोऽनु-ष्ठेयः । तत्र प्रतिपद्रात्रौ विशेषतः पुष्पं नैवेद्याद्युपचारैः क्रमं प्रवर्त्य प्रधान-देवतायै शतमाज्याहुतीः आवरणदेवताभ्यः तद्दशांशं हुत्वा जपं होम-समसंख्याकं विधाय अविवाहिताक्षतां प्राङ्निमन्त्रितां कन्यामेकां अभ्यक्त-स्नातां आसने उपवेश्य तस्यां देवीं आवाह्य बालया पञ्चधा उपचर्य यथाविभवं वसनाभरणादि दद्यात् । एवं द्वितीयादि चतुर्दश्यन्ते द्विशतादि-होमजप कन्याद्वयादि पूजनानि कृत्वा पूर्णिमायां वृद्धया शतेन सह षोडश-शतहोमजपषोडशकन्यापूजनानि कुर्यादिति एक पक्षः । प्रतिपदि प्रकृतिहोमः शतमाहुतयो वृद्धिहोमश्च शतं एवं जपः कन्यके द्वे । द्वितीयादिषु त्रिशतादि-होमजपौ त्रयादि कन्यका इत्यपरः । एतयोरेकमाश्रयेत् । तिथिवृद्धौ प्रति-पदादिक्रमेण शतादिहोमादिकम् । तिथिह्रासे तु तस्मिन्नेव दिने तद्द्वितय-कृत्यं, एकस्मिन्नेव काले होमादिकं च कुर्यात् । अवशिष्टमविशिष्टम् । एवं

कृते विद्या सिद्धा भवति। राजा च साधकस्य अर्चको भवति। अथवा— कुलार्णवोक्त नवरात्रपक्षोऽपि एकोत्तरवृद्धया वा तदसम्भवे यथोक्तक्रमेणैव वा कर्त्तव्यः। अयं स्वतन्त्रः न तु पूर्णिमाङ्गम्। तत्पक्षे पूर्णिमापूजाऽपि प्रत्येकमुक्तरीत्या कर्त्तव्येति दिक्॥ इत्याश्वयुजकृत्यम्।

## कार्तिककृत्यम्

अथ कार्तिक्यां प्राग्वदधिवासितं कुङ्कुमं सावरणायै देव्यै समर्प्य गोधूमादि पिष्टप्रकृतिकैः घृतपूरितैः प्रज्वालितकर्पूरवर्तिभिः प्रदीपैः नित्यहोमक्रमेण तत्तद्देवताभ्यो हुत्वा देव्याः पुरः शुचिनि भूतले षोडशदीपान् दत्त्वा अङ्गदेवीभ्यो नित्याभ्यः ओघत्रयगुरुभ्यः तत्तत्स्थाने निवेश्य तदभितस्त्रिकोणादि-चतुरस्रान्ताकृत्या च निधाय प्रतिदेवतमेकैकं दीपं निवेदयेत्। एतावद-सम्भवे एकस्मिन्नेव भाजने मध्ये एकं तदभितो नव वा नवयोनिचक्राष्टदलं-कमलान्यतमालङ्कृते वा तत्र मध्ये एकं कोणेषु दलेषु वाऽष्टौ दीपान् प्रज्वाल्य देव्यै मूलेन सप्रसूनं निवेदयेत्। शेषमभिहितवत्॥ इति कार्तिककृत्यम्॥

## मार्गशीर्षकृत्यम्

अथ मार्गशीर्षपूर्णिमायां सावरणां श्रीदेवीं सुगन्धिभिः कुसुमैरभ्यर्च्य माषपिष्टापूपान् कर्पूरसुरभिलं नारिकेलोदकं च प्रागुक्तान्यतमया भङ्ग्या सर्वाभ्यो देवताभ्यो निवेदयेत्। अन्यदविशेषम्॥ इतिमार्गशीर्षकृत्यम्॥

## पौषकृत्यम्

ततः पौष्यां प्राग्वदधिवासपूर्वकं शर्करया गुडेन वा साकं गव्यं दुग्धं उक्तेन केनचित् प्रकारेण निवेदयेत्। अन्यदविशेषम्॥ इति पौषकृत्यम्।

## माघकृत्यम्

तदनुमाघ्यां प्राग्वदधिवासितैः शुक्लैस्तिलैः अलाभे रक्तकृष्णैर्वा शुद्धै-स्सकुसुमैरभ्यर्च्य शर्करादुग्धापूपान् निवेदयेत्। अत्रापूपाः गोधूमादिपिष्ट-प्रकृतिका इति सम्प्रदायः। इतरत् समानम्॥ इति माघकृत्यम्॥

## फाल्गुनकृत्यम्

अथ फाल्गुन्यां सौवर्णराजतपुष्पैः पङ्कजैः कल्हारैः आम्रकुसुमैः मधूकैश्च यथासम्भवं मिलितैः प्राग्वदधिवासितैः सावरणां श्रीदेवीं वरिवस्येत्। इति फाल्गुनकृत्यम्॥

अयमेव नैमित्तिकार्चनविधिः गणपतिश्यामावार्तालीनां सामान्यक्रमोक्तानां देवतानाम्। सर्वत्रामुक पौर्णिमायां अमुकेन द्रव्य-विशेषेण अमुकदेवतां पूजयिष्ये इति सङ्कल्पः ॥

अत्राधिकमासापाते एकमासकृत्यस्य मासद्वये आवृत्तिः। क्षयमासप्रसक्तौ त्वेकस्मिन् मासे मासद्वयकृत्यमपि कार्यं भवति। नैमित्तिकार्चनमुख्यगौणकालातिक्रमे मूलविद्यासहस्रजपः प्रायश्चितं आम्नातं तन्त्रराजे—

नैमित्तिकातिक्रमणे सहस्रं प्रजपेत्तथेति ॥ इति पञ्चपर्वार्चनविधिः ॥

तन्त्रान्तरोक्तेषु युगमन्वादिषु विशेषदिवसेष्वपि श्रीदेव्यर्चनं अभ्युदयायैव। सूत्रकारेण काम्यहोमस्यैवोक्तत्वात् तत्पूजाऽनुक्तिरिति शिवम् ॥

इति नैमित्तिकप्रकरणं समासम्।

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे श्रीक्रमः समाप्तः।

श्रीश्यामला ( मातङ्गी)



माणिक्यवीणामुपलालयन्तीं ।
मदालसां मञ्जुलवाग्-विलासां ॥
माहेन्द्रनीलद्युतिकोमलाङ्गीं ।
मातङ्गकन्यां सततं स्मरामि ॥



श्रीमातङ्गी यन्त्रम्

## श्यामाक्रमः

श्रीललिता महात्रिपुरसुन्दर्याः प्रधानसचिवपदमलङ्करोति श्यामा तदुपासनद्वरा श्रीविद्या शीघ्रं प्रसीदति। यथा राजदर्शनोत्सुका आदौ प्रधानसचिवमुपसेव्य तत्द्वारा राजदर्शनं कुर्वन्ति तथैव श्यामायाः प्रथममुपासनं न्याय्यम्। प्रधानद्वारा राजप्रसादनं हि न्याय्यम्। (प० क० सू०)

श्रीमान् साधकः श्यामलां देवीमाराधयिषुः श्रीक्रमोक्तक्रमेण काल्यकृत्याह्निके निर्वर्तयेत्। अत्र विशेषः—

श्रीगुरुपादुकायामादौ त्रितारीस्थाने बालायोगः। सर्वकारणभूतायाः सम्विदश्चिन्तनं मूलाधारादिद्वादशान्ताख्यललाटोर्ध्वभागावधिकमेव। (रश्मिस्रगननुस्मरणम्) तत्र तत्र यथोचितं सम्बुद्ध्यादीनामूहः। आदित्यमण्डले वक्ष्यमाणया भङ्गया सङ्गीतयोगिन्या भावनम्। मूलेन अर्घ्यदानम्। वक्ष्यमाणमृष्यादिन्यासत्रयञ्चेति। इदं चाह्निकं स्वतन्त्रोपास्तौ, पुरश्चरणकाले च, न तु श्रीक्रमाङ्गत्वेन सहानुष्ठाने।

## यागमन्दिरप्रवेशः

अथापराह्णे यागमन्दिरमागत्य द्वारस्थण्डिलं गोमयेनोपलिप्य यागगृहञ्च रङ्गवल्लीपुष्पमालावितानकादिभिश्चालङ्कृत्य द्वारस्य दक्षवामशाखयोः उर्ध्वभागे च क्रमेण—

ऐं क्लीं सौः भद्रकाल्यै नमः, ३ भैरवाय नमः, ३ लम्बोदराय नमः, इति तिस्रो द्वारदेवताः सम्पूज्य, अन्तः प्रविष्टः, ३ रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः, इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा सपर्यासामग्रीं स्वस्य दक्षभागे निधाय दीपानभितः प्रज्वाल्य गन्धमाल्यादिभिरलङ्कृतात्मा ताम्बूलेन जातीपत्रफललवङ्गैलाकर्पूराख्यपञ्चतिक्तेन वा सुरभिवदनः सुप्रसन्नमनाः स्वास्तीर्णे शुचिनि ऊर्णामृदुनि बालातृतीयबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते आसने ३ आधारशक्तिकमलासनाय नमः, इति

प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेनासनेनोपविश्य ३ समस्तगुप्त-प्रकटयोगिनीचक्रदेवता श्रीपादुकाभ्यो नमः, इति मूर्ध्नि बद्धाञ्जलिः स्ववामदक्षपार्श्वयोः क्रमेण गुरुपादुकया श्रीगुरुं, महागणपतिमन्त्रेण च गणपतिं प्रणम्य, ऐं ह्रः अस्त्राय फट्, इति मन्त्रेण मुहुरावृत्तेन अङ्गुष्ठादि-करतलान्तकूर्परयोश्च विन्यस्य देहे च व्यापकं कृत्वा स्वस्य देवतैक्यं भावयन्—

ऐं क्लीं सौः अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रय-क्रूरदृष्ट्यवलोकनपूर्वकं तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् । तालत्रयं नाम, दक्षतर्जनीमध्यमाभ्यामधोमुखाभ्यां वामकरतले सशब्दमुपर्युपरि त्रिरभिघातः ।

## प्राणायामः षडङ्गादिन्यासपञ्चकम्

अथ ३ 'नमः' इत्यङ्गुष्ठमन्त्रमुच्चार्य अङ्कुशेन शिखां बद्ध्वा श्रीक्रमोक्त-प्रकारेण भूतशुद्धिम्-आत्मप्राणप्रतिष्ठाञ्च विधाय मूलेन विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य,

तेजोरूपदेवीमयं भावयन्नात्मानं, निजदेहे न्यासजालात्मकं वज्रकवचं धारयेत् ।

ऐं ह्रीं श्रीं ऐं क्लीं सौः, ऐं, सर्वजनमनोहारि हृदयाय नमः ।
७ सर्वमुखरञ्जिनि शिरसे स्वाहा ।
७ क्लीं ह्रीं श्रीं सर्वराजवशङ्करि शिखायै वषट् ।
७ सर्वस्त्रीपुरुषवशङ्करि कवचाय हुम् ।
७ सर्वदुष्टमृगवशङ्करि नेत्रत्रयाय वौषट् ।

७ सर्वसत्त्ववशङ्करि सर्वलोकवशङ्करि अमुकं (त्रैलोक्यं) मे वशमानय स्वाहा अस्त्राय फट् । इति मन्त्रान् हृदयादिषु न्यसेदिति षडङ्गन्यासः ॥१॥

अथ श्रीक्रमोक्तं मातृकान्यासं कुर्यात् ॥२॥

ऐं क्लीं सौः रत्यैः नमः, मूलाधारे, ३ प्रीत्यै नमः, हृदये,
३ मनोभवाय नमः, इति मुखे न्यसेत् ॥ इति रत्यादिन्यासः ॥३॥
ऐं क्लीं सौः ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः, ब्रह्मरन्ध्रे,

३ ॐ नमो नमः ललाटे,
३ भगवति नमः भ्रूमध्ये,
३ श्रीमातङ्गीश्वरि नमः दक्षनेत्रे,
३ सर्वजनमनोहारि नमः वामनेत्रे,
३ सर्वमुखरञ्जिनि नमः मुखे,
३ क्लीं नमः दक्षश्रोत्रे,
३ ह्रीं नमः वामश्रोत्रे,
३ श्रीं नमः कण्ठे,
३ सर्वराजवशङ्करि नमः दक्षांसे,
३ सर्वस्त्रीपुरुषवशङ्करि नमः वामांसे,
३ सर्वदुष्टमृगवशङ्करि नमः हृदये,
३ सर्वसत्त्ववशङ्करि नमः दक्षस्तने,
३ सर्वलोकवशङ्करि नमः वामस्तने,
३ अमुकं मे वशमानय नमः नाभौ,
३ स्वाहा नमः स्वाधिष्ठाने,

३ सौः क्लीं ऐं श्रीं ह्रीं ऐं नमः मूलाधारे (न्यसेत्,)

इति मूलखण्डसप्तदशकन्यासः ॥४॥

एतानेव प्रतिलोममूलमन्त्रखण्डान् मूलाधारस्वाधिष्ठाननाभिवामस्तनदक्षस्तनहृदयवामदक्षांसकण्ठवामदक्षश्रोत्रमुखवामदक्षनेत्रभ्रूमध्यललाट - ब्रह्मरन्ध्रेषु क्रमात् न्यसेत् । यथा—

ऐं क्लीं सौः सौः क्लीं ऐं श्रीं ह्रीं ऐं नमः मूलाधारे,

३ स्वाहा नमः स्वाधिष्ठाने,
३ अमुकं मे वशमानय नमः नाभौ,
३ सर्वलोकवशङ्करि नमः वामस्तने,
३ सर्वसत्त्ववशङ्करि नमः दक्षस्तने,
३ सर्वदुष्टमृगवशङ्करि नमः हृदये,
३ सर्वस्त्रीपुरुषवशङ्करि नमः वामांसे,
३ सर्वराजवशङ्करि नमः दक्षांसे,
३ श्रीं नमः कण्ठे,
३ ह्रीं नमः वामश्रोत्रे,
३ क्लीं नमः दक्षश्रोत्रे,
३ सर्वमुखरञ्जिनि नमः मुखे,
३ सर्वजनमनोहारि नमः वामनेत्रे,
३ मातङ्गीश्वरि नमः दक्षनेत्रे,
३ भगवति नमः भ्रूमध्ये,
३ ॐ नमो नमः ललाटे,

३ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः ब्रह्मारन्ध्रे। इति प्रतिलोममूलमन्त्रखण्डन्यासः॥५॥

## मन्दिरार्चनम्

अथामृताम्भोनिधिमध्यस्थमणिद्वीपमध्यगते कदम्बोद्याने मुक्ताकुसुम-मालिकाहरितपट्टवितानास्तरणवन्दनमालिकाद्यलङ्कृतं धूपधूपितं प्रज्वलत्प्र-दीपपरम्परं चतुर्द्वारं मरकतमण्डपं विचिन्त्य, तस्य प्रागादिषु द्वारेषु—

ऐं क्लीं सौः सां सरस्वत्यै नमः, लां लक्ष्म्यै नमः, शं शङ्खनिधये नमः, पं पद्मनिधये नमः, इति सम्पूज्य—

ऐं क्लीं सौः, लां इन्द्राय वज्रहस्ताय सुराधिपतये ऐरावतवाहनाय सपरिवाराय नमः, पूर्वे,

३ रां अग्नये शक्तिहस्ताय तेजोऽधिपतये अजवाहनाय सपरिवाराय नमः, आग्नेये,

३ टां यमाय दण्डहस्ताय प्रेताधिपतये महिषवाहनाय सपरिवाराया नमः दक्षिणे

३ क्षां निर्ऋतये खड्गहस्ताय रक्षोऽधिपतये नरवाहनाय सपरिवाराय नमः, नैर्ऋते,

३ वां वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय सपरिवाराय नमः, पश्चिमे

३ यां वायवे ध्वजहस्ताय प्राणाधिपतये रुरुवाहनाय सपरिवाराय नमः, वायव्ये

३ सां सोमाय शङ्खहस्ताय नक्षत्राधिपतये अश्ववाहनाय सपरिवाराय नमः, उत्तरे,

३ हां ईशानाय त्रिशूलहस्ताय विद्याधिपतये वृषभवाहनाय सपरिवाराय नमः, ऐशान्ये, इति प्रागाद्यष्टासु दिक्षु शक्रादीनभ्यर्च्य,

ऐं क्लीं सौः ॐ ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय सपरिवाराय नमः इति इन्द्रेशानयोः मध्ये,

३ श्रीं विष्णवे चक्रहस्ताय नगाधिपतये गरुडवाहनाय सपरिवाराय नमः, इति निर्ऋतवरुणयोः दिगन्तरे,

३ ॐ वास्तुपतये ब्रह्मणे नमः, इति वास्तुनि चार्चयेत् ।

## यन्त्रोद्धारः

अथ चन्दनपङ्कप्रकृतिके मण्डले क्षीरमिश्रितेन सिन्दूरादिना बिन्दुत्रिकोणपञ्चकोणाष्टदलषोडशदलाष्टपत्रचतुष्पत्रचतुस्रात्मकं चक्रं विलिख्य विलेख्य वा सुवर्णरजतताम्रस्फटिकमरकतरत्नाद्युत्कीर्णं वा तत्समास्तीर्णपट्टवसने श्रीखण्डरक्तचन्दनादिनिर्मिते पीठे निवेश्य यन्त्रप्राणप्रतिष्ठां कुर्यात् ।

यथा—ऐं क्लीं सौः श्यामयन्त्रस्य प्राणाः इह प्राणाः, ३ श्यामायन्त्रस्य जीवः इह स्थितः, ३ श्यामायन्त्रस्य सर्वेन्द्रियाणि, ३ श्यामायन्त्रस्य वाङ्मनःप्राणाः इहायान्तु स्वाहा ।

इति मन्त्रेण लिखितयन्त्रे प्राणप्रतिष्ठां विदध्यात् । सुवर्णादि कृतस्य यन्त्रस्य तु प्राणप्रतिष्ठा श्रीक्रमोक्तात्राप्यनुसन्धेया । अत्र देवतानामावाहस्त्वावश्यक एव । एवं देवतान्तरक्रमेष्वपि । ततो मूलेन चक्रे पुष्पाञ्जलिं विकीर्य, श्रीक्रमोक्तक्रमेण सामान्यविशेषार्घ्ये आसादयेत् । अत्र चोभयोरप्यर्घ्ययोः प्रवेशरीत्या अन्तरन्तश्चतुरस्रादिबिन्द्वन्तमण्डलकरणम् ।

ऐं क्लीं सौः अं आत्मतत्त्वाय आधारशक्तये वौषट्, इत्याधारस्थापनम् ।

३ उं विद्यातत्त्वाय पद्मासनाय वौषट्, इति पात्रनिधानम् ।

३ मं शिवतत्त्वाय सोममण्डलाय नमः, इति शुद्धजलापूरणम् ।

(अत्र वह्नि सूर्य सोमकला पूजनम्)

ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम् ।
आपूरितं महापात्रं पीयूषरसमावह ॥

इति क्षीरपूरणम् । युक्तं षडङ्गार्चनं, मूलेन दशधा अभिमन्त्रणम् । चतुर्णवतिमन्त्राभिमन्त्रणाभावश्च विशेषः । ततो विशेषार्घ्यबिन्दुभिः वरिवस्यावस्तूनि सम्प्रोक्ष्य ।

## चक्रदेवीपूजा

ऐं क्लीं सौः आधारशक्तिकमलासनाय नमः, इति पीठं पुष्पैरभ्यर्च्य, बिन्दुमध्ये ३ श्रीमातङ्गीश्वरीमूर्तये नमः, इति देव्याः मूर्तिं भावयित्वा, हृदि वक्ष्यमाणरूपां देवीं सञ्चिन्त्य, ३ श्रीमातङ्गीश्वर्यै लं पृथिव्यात्मकं गन्धं

कल्पयामि नमः इत्यादिताम्बूलान्तं मानसोपचारैरभ्यर्च्य, तां तेजोरूपेण परिणतां ब्रह्मरन्ध्रं प्रापय्य वहन्नासापुटद्वारा कृतविनिर्गमां कुसुमगर्भिते अञ्जलौ सन्निहितां देवीं ३ श्रीमातङ्गीश्वरि अमृतचैतन्यमावाहयामीति चक्रे भावितायां मूर्त्यामावाह्य मूलान्ते श्रीमातङ्गीश्वरि आवाहिता भव इत्यादि-रीत्या आवाहनसंस्थापन-सन्निरोधन-सम्मुखीकरणावगुण्ठनानि, तत्तन्मुद्रा-प्रदर्शनपूर्वकं विधाय, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत्। तत्प्रकारश्च श्रीक्रमतो ज्ञातव्यः। ततः ऐं क्लीं सौः श्रीमातङ्गीश्वर्यै पाद्यं कल्पयामि नमः इत्यादि भङ्ग्या पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजन-च्छत्रचामरयुगलदर्पणनैवेद्यपानीयताम्बूलान्तान् षोडशोपचारान् परि-कल्पयेत्। नैवेद्याङ्गत्वेन पूर्वेत्तरापोशनकरप्रक्षालनगण्डूषाचमनीयानि च दत्वा ताम्बूलं समर्पयेत्। नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणं, मूल-मन्त्रेण प्रोक्षणम्, वमित्यमृतबीजेनाभिमन्त्रणपूर्वं धेनुमुद्रया अमृती-करणम्। मूलेन सप्तवारमभिमन्त्रणं प्राणादिमुद्राप्रदर्शनञ्च कार्यम्। अथ मूलमन्त्रान्ते श्रीमातङ्गीश्वरीश्रीपादुकां पूजयामीति वामकरतत्त्वमुद्रासन्दष्ट-द्वितीयशकलगृहीतक्षीरबिन्दुभिस्सह समर्पितैः दक्षकरोपात्तैः कुसुमैः देवीं त्रिस्सन्तर्प्य, देव्या अग्नीशासुर वायव्यभागेषु मौलौ प्रागादिदिक्षु च प्रागुक्तषडङ्गमन्त्रान्ते क्रमेण—

ऐं क्लीं सौः हृदयाय नमः हृदयशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः
३ शिरसे स्वाहा शिरःशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।
३ शिखायै वषट् शिखाशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।
३ कवचाय हुँ कवचशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।
३ नेत्रत्रयाय वौषट् नेत्रशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।
३ अस्त्राय फट् अस्त्रशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

इति लयाङ्गत्वेनाङ्गदेवता आराध्य, देव्याः पश्चात् प्रागपवर्गरेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं वरिवस्येत्। यथा—

## दिव्यौघः

(अर्चने सर्वत्र श्रीपादुकां पूजयामि तर्पयामि नमः इति योजनम्)।

ऐं क्लीं सौः परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमेशानन्द, परशिवानन्द, कामेश्वर्यम्बा, मोक्षानन्द, कामानन्द, अमृतानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति दिव्यौघः।

ऐं क्लीं सौः ईशानानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः, तत्पुरुषानन्द, अघोरानन्द, वामदेवानन्द, सद्योजातानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः, इति सिद्धौघः।

ऐं क्लीं सौः पञ्चोत्तरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमानन्द, सर्वज्ञानन्द, सर्वानन्द, सिद्धानन्द, गोविन्दानन्द, शङ्करानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति मानवौघः।

## आवरणार्चनम्

(अर्चने सर्वत्र नामादौ त्रितारी अन्ते श्रीपादुकां पू० त० नमः)।

त्र्यस्रे देव्यग्रकोणादिप्रादक्षिण्यक्रमेण—

ऐं क्लीं सौः रतिश्रीपादुकां पूजयामि तर्पयामि नमः, प्रीति श्रीपादुकां पू० त० नमः, मनोभव श्रीपादुकां पूजयामि तर्पयामि नमः इति प्रथमावरणम्।

पञ्चारस्याराणां मूलेष्वग्रेषु च प्राग्वत्—

ऐं क्लीं सौः द्रां द्रावणबाणश्रीपादुकां पूजयामि तर्पयामि नमः, द्रीं-शोषणबाण, क्लीं बन्धनबाण, ब्लूं मोहनबाण, सः उन्मादनबाणश्रीपादुकां पूजयामि तर्पयामि नमः,

ऐं क्लीं सौः ह्रीं कामराजश्रीपादुकां पूजयामि तर्पयामि नमः, क्लीं मन्मथ, ऐं कन्दर्प, ब्लूं मकरकेतन, स्त्रीं मनोभवश्रीपादुकां पूजयामि तर्पयामि नमः, इति द्वितीयावरणम्।

अष्टदलस्य दलानां मूलेष्वग्रेषु च—

ऐं क्लीं सौः आं ब्राह्मीश्रीपादुकां पूजयामि तर्पयामि नमः ईं माहेश्वरी, ऊं कौमारी, ॠं वैष्णवी, ॡं वाराही, ऐं माहेन्द्री, औं चामुण्डा, अः चण्डिकाश्रीपादुकां पूजयामि तर्पयामि नमः,

ऐं क्लीं सौः लक्ष्मीश्रीपादुकां पूजयामि तर्पयामि नमः, सरस्वती, रति, प्रीति, कीर्ति, शान्ति, पुष्टि, तुष्टिश्रीपादुकां पूजयामि तर्पयामि नमः, इति तृतीयावरणम् ।

षोडशदले प्राग्वत्—

ऐं क्लीं सौः वामाश्रीपादुकां पूजयामि तर्पयामि नमः, ज्येष्ठा, रौद्री, शान्ति, श्रद्धा, सरस्वती, क्रियाशक्ति, लक्ष्मी, सृष्टि, मोहिनी, प्रमथिनी, आश्वासिनी, वीचि, विद्युन्मालिनी, सुरानन्दा, नागवुद्धिका श्रीपादुकां पूजयामि तर्पयामि नमः, इति चतुर्थावरणम् ।

द्वितीयाष्टदले प्राग्वत्—

ऐं क्लीं सौः अं असिताङ्ग भैरवश्रीपादुकां पूजयामि तर्पयामि नमः, इं रुरु, उं चण्ड, ऋं क्रोध, लृं उन्मत्त, एं कपालि, ओं भीषण, अं संहार-भैरवश्रीपादुकां पूजयामि तर्पयामि नमः, इति पञ्चमावरणम् ।

चतुर्दले प्राग्वत्—

ऐं क्लीं सौः मातङ्गीश्वरीश्रीपादुकां पूजयामि तर्पयामि नमः, सिद्धलक्ष्मी, महामातङ्गी, महासिद्धलक्ष्मीश्रीपादुकां पूजयामि तर्पयामि नमः, इति षष्ठावरणम् ।

चतुरस्रस्यान्तराग्नेयादिकोणेषु क्रमेण—

ऐं क्लीं सौः गं गणपतिश्रीपादुकां पूजयामि तर्पयामि नमः, दुं दुर्गा, वं वटुक, क्षं क्षेत्रपालश्रीपादुकां पूजयामि तर्पयामि नमः ।

देव्यग्रादिद्वारेषु प्रागाद्यास्वेकादशसु दिक्षु च—

ऐं क्लीं सौः सां सरस्वत्यै नमः इत्यादि ऐं वास्तुपतये ब्रह्मणे नमः इत्यन्तैः मन्त्रैः प्रागुक्तै वास्तुपतिपर्यन्तदेवताः समभ्यर्च्य, पूर्वरेखायां च—

ऐं क्लीं सौः हंसमूर्तिश्रीपादुकां पूजयामि तर्पयामि नमः, परप्रकाश, पूर्ण, नित्य, करुण श्रीपादुकां पूजयामि तर्पयामि नमः, इति सम्प्रदायगुरूंश्च पूजयेत् । इति सप्तमावरणम् ।

(सर्वा अप्यावरणदेवताः देव्या अभिमुखासीनाः स्वयं तत्तदभिमुखः पूजयामीति भावयेत्) ।

## गुरुपादुकापूजा

अथ स्वशिरसि ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं हस्ख्फ्रें ह स क्ष म ल व र यूं, स ह क्ष म ल व र यीं, ह्सौः स्हौः श्रीशिवादिगुरुश्रीपादुकां पूजयामीति समान्यपादुकया शिवादिगुरून्, ऐं क्लीं सौः हस्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौः स्हौः अमुकाम्बासहितामुकानन्दनाथश्रीपादुकां पूजयामीति च स्वगुरुमभ्यर्च्य,

पुनर्देवीं त्रिः सन्तर्प्य प्राग्वत् वालया षोडशधा चोपचरेत् ।

## बलिदानम्

ततः श्रीक्रमोक्तेन क्रमेण होमं कृत्वा कारयित्वा वा ( अकृत्वा वा इति पाठान्तरम् ) शुद्धजलेन त्रिकोणवृत्तचतुरस्रमण्डलत्रयं विधाय ऐं व्यापकमण्डलाय नमः, इति पुष्पैः समभ्यर्च्य अर्धान्नसलिलपूर्णसक्षीरोपादिमध्यमं सगन्धकुसुमं साधारं पात्रं निधाय ऐं क्लीं सौः श्रीमातङ्गीश्वरि इमं वलिं गृह्ण गृह्ण हुं फट् स्वाहा, ऐं क्लीं सौः श्रीमातङ्गीश्वरि शरणागतं मां त्राहि त्राहि हुं फट् स्वाहा, ऐं क्लीं सौः क्षेत्रपालनाथ इमं बलिं गृह्ण गृह्ण हुं फट् स्वाहा, इति मन्त्रान् क्रमेण पठन् देव्याः दक्षिणभागे बलित्रयं प्रदाय तत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि निषिच्य, वामपार्ष्णिघातकरास्फोटान् कुर्वाणः समुदञ्चितवक्त्रो नाराचमुद्रया बलिं भूतैः ग्राहयित्वा पाणी प्रक्षाल्य देव्यै प्रदक्षिणनतीर्विधाय पुष्पाञ्जलिं समर्प्य जपेत् ।

## श्रीमातङ्गीश्वरीमन्त्रजपः

अस्य श्रीमातङ्गीश्वरीमहामन्त्रस्य दक्षिणामूर्त्यृषये नमः—शिरसि, गायत्रीच्छन्दसे नमः—मुखे, श्रीमातङ्गीश्वरीदेवतायै नमः—हृदये । ऐं बीजाय नमः—गुह्ये, सौः शक्तये नमः—पादयोः, क्लीं कीलकाय नमः—नाभौ, ममाभीष्टसिद्धये विनियोगाय नमः—इति करसम्पुटे, न्यस्य मूलेन त्रिर्व्यापकं कृत्वा न्यासोक्तैरङ्गमन्त्रैः कराङ्गन्यासौ कृत्वा ध्यानम्—

मातङ्गीं भूषिताङ्गीं मधुमदमुदितां नीपमालाढ्यवेणीं
सद्वीणां शोणचेलां मृगमदतिलकामिन्दुरेखावतंसाम् ।

कर्णोद्यच्छङ्खपात्रां स्मितमधुरदृशा साधकस्येष्टदात्रीं
ध्यायेद्देवीं शुकाभां शुकमखिलकलारूपमस्याश्च पार्श्वे ॥

इति ध्यात्वा मनसा पञ्चधोपचर्य पुरश्चरणे वक्ष्यमाण पूर्वोत्तराङ्गमन्त्रसहितं मूलं श्रीक्रमोक्तेन विधिना यथाशक्ति जपित्वा पुनः न्यासादि विधाय,

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ॥

इति देव्या वामहस्ते सामान्यार्घ्यसलिलेन जपं समर्प्य, स्तुवीत—

## मातङ्गीस्तुतिः

मातङ्गी मातरीशे मधुमदमथनाराधिते महामाये ।
मोहिनी मोहप्रमथिनि मन्मथमथनप्रिये नमस्तेऽस्तु ॥
स्तुतिषु तव देवि विधिरपि पिहितमतिर्भवति विहितमतिः ।
तदपि तु भक्तिर्मामपि भवतीं स्तोतुं विलोभयति ॥
यतिजनहृदयनिवासे वासववरदे वराङ्गि मातङ्गि ।
वीणावादविनोदिनी नारदगीते नमो देवी ॥
देवि प्रसीद सुन्दरि पीनस्तनि कम्बुकण्ठि घनकेशि ।
मातङ्गि विद्रुमौष्ठिस्मितमुग्धाक्ष्यम्ब मौक्तिकाभरणे ॥
भरणे त्रिविष्टपस्य प्रभवसि तत एव भैरवी त्वमसि ।
त्वद्भक्तिलब्धविभवो भवति क्षुद्रोऽपि भुवनपतिः ॥
पतितः कृपणो मूकोऽप्यम्ब भवत्याः प्रसादलेशेन ।
पूज्यः सुभगो भवति जडश्चापि सर्वज्ञः ॥
ज्ञानात्मिके जगन्मयि निरञ्जने नित्यशुद्धपदे ।
निर्वाणरूपिणी शिवे त्रिपुरे शरणं प्रपन्नस्त्वाम् ॥
त्वां मनसि क्षणमपि यो ध्यायति मुक्तामणीवृतां श्यामाम् ।
तस्य जगत्त्रितयेऽस्मिन् कास्ताः ननु याः स्त्रियोऽसाध्याः ।
साध्याक्षरेण गर्भितपञ्चनवत्यक्षराञ्चिते मातः ।
भगवति मातङ्गीश्वरि नमोऽस्तु तुभ्यं महादेवि ॥

विद्याधरसुरकिन्नरगुह्यकगन्धर्वयक्षसिद्धवरैः ।
आराधिते नमस्ते प्रसीद कृपयैव मातङ्गि ॥

वीणावादनवेलानर्तितकलाबुधरगितवामकुचम् ।
श्यामलकोमलगात्रं पाटलनयनं स्मरामि त्वाम् ॥

अवटुतटघटितचूलीताडिततालीपलाशताटङ्काम् ।
वीणावादनवेलाकम्पितशिरसं नमामि मातङ्गीम् ॥

मातामरकतश्यामा मातङ्गी मदशालिनी ।
कटाक्षयतु कल्याणी कदम्बवनवासिनी ।

वामे विस्तृतिशालिनी स्तनतटे विन्यस्तवीणामुखं
तन्त्रीं तारविराविणीमसकलैरास्फालयन्ती नखैः ।

अर्धोन्मीलदपाङ्गमंसवलितग्रीवं मुखं बिभ्रती
माया काचन मोहिनी विजयते मातङ्गकन्यामयी ॥

वीणावाद्यविनोदगीतनिरतां लीलाशुकोल्लासिनीं

बिम्बोष्ठीं नवयावकार्द्रचरणामाकीर्णकेशालिकाम् ।

हृद्याङ्गीं सितशङ्खकुण्डलधरां शृङ्गारवेषोज्ज्वलां
मातङ्गीं प्रणतोऽस्मि सुस्मितमुखीं देवीं शुकश्यामलाम् ॥

स्रस्तं केसरदामभिः वलयितं धम्मिल्लमाबिभ्रती
तालीपत्रपुटान्तरेषु घटितैस्ताटङ्किनी मौक्तिकैः ।

मूले कल्पतरोर्महामणिमये सिंहासने मोहिनी
काचिद्गायनदेवता विजयते वीणावती वासना ॥

वेणीमूलविराजितेन्दुशकलां वीणानिनादप्रियां
क्षोणीपालसुरेन्द्रपन्नगवरैराधिताङ्घ्रिद्वयाम् ॥

एणीचञ्चललोचनां सुवसनां वाणीं पुराणोज्ज्वलां
श्रोणीभारभरालसामनिमिषः पश्यामि विश्वेश्वरीम् ॥

मातङ्गीस्तुतिरियमन्वहं प्रजप्ता
जन्तूनां वितरति कौशलं क्रियासु ।
वाग्मित्वं श्रियमधिकाञ्च गानशक्तिं
सौभाग्यं नृपतिभिरर्चनीयताञ्च ॥

## श्रीश्यामला-दण्डकम्

माणिक्यवीणामुपलालयन्तीं मदालसां मञ्जुलवाग्विलासाम् ।
माहेन्द्रनीलद्युति-कोमलाङ्गीं मातङ्गकन्यां मनसा स्मरामि ॥१॥
चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे ।
पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ॥२॥
माता मरकतश्यामा मातङ्गी मदशालिनी ।
कटाक्षयतु कल्याणी कदम्बवनवासिनी ॥३॥
जय मातङ्गतनये जय नीलोत्पलद्युते ।
जय सङ्गीतरसिके जय लीलाशुकप्रिये ॥

जय जननि सुधासमुद्रान्त-हृद्यन्मणिद्वीपसंरूढबिल्वाटवीमध्यकल्पद्रुमाकल्पकादम्बकान्तारवासप्रिये कृत्तिवासप्रिये सर्वलोकप्रिये । सदारारब्धसङ्गीतसम्भावनासम्भ्रमालोलनीपस्रगाबद्धचूलीसनाथत्रिके सानुमत्पुत्रिके । शेखरीभूतशीतांशुरेखामयूखावलीबद्धसुस्निग्धनीलालकश्रेणि - शृङ्गारिते लोकसम्भाविते । कामलीलाधनुसन्निभभ्रूलतापुष्पसन्देहसन्दोहकृल्लोचने, वाक्सुधासेचने, चारुगोरोचनापङ्ककेलीललमाभिरामे सुरामे रमे, प्रोल्लसद्वालिकामौक्तिकश्रेणिकाचन्द्रिकामण्डलोद्भासिलावण्यगण्डस्थलन्यस्तकस्तूरिकापत्ररेखासमुद्भूतसौरभ्यसम्भ्रान्त - भृङ्गाङ्गनागीतसान्द्रीभवन्मन्द - तन्त्रीस्वरे सुस्वरे भास्वरे, वल्लीकवादनप्रक्रियालोलतालीदलाबद्धताटङ्कभूषाविशेषान्विते सिद्धसम्मानिते, दिव्यहालामदोद्वेलहेलालसच्चक्षुरान्दोलनश्रीसमाक्षिप्तकर्णैकनीलोत्पले पूरिताशेषलोकाभिवाञ्छाफले श्रीफले, स्वेदबिन्दूल्लसत्फाललावण्यनिःस्यन्दसन्दोहसन्देहकृन्नासिकामौक्तिके सर्वविश्वात्मिके कालिके, मुग्धमन्दस्मितोदारवक्त्रस्फुरत्पूगताम्बूलकर्पूरखण्डोत्करे ज्ञानमुद्राकरे सर्वसम्पत्करे पद्मभास्वत्करे, कुन्दपुष्पद्युतिस्निग्धदन्तावली निर्मलालोलकल्लोलसम्मेलनस्मेरशोणाधरे चारुवीणाधरे पक्वबिम्बाधरे ॥१॥

सुललितनवयौवनारम्भचन्द्रोदयोद्वेललावण्यदुग्धार्णवाविर्भवत्कम्बुबिम्बोकभृत्कन्धरे सत्कलामन्दिरे मन्थरे, दिव्यरत्नप्रभाबन्धुरच्छन्नहारादिभूषा-

समुद्द्योतमानानवद्यांशुशोभे शुभे, रत्नकेयूररश्मिच्छटापल्लवप्रोल्लसद्दोर्लता-राजिते योगिभिः पूजिते, विश्वदिङ्मण्डलव्यापिमाणिक्यतेजः स्फुरत्कङ्कणालङ्कृते विभ्रमालङ्कृते साधकैः सत्कृते, वासराम्भवेलासमुज्जृम्भमाणारविन्दप्रतिद्वन्द्विपाणिद्वये सन्ततोद्यद्दये अद्वये, दिव्यरत्नोर्मिकादीधितिस्तोमसन्ध्यायमानाङ्गुलीपल्लवोद्यन्नखेन्दुप्रभामण्डले सन्नताखण्डले चित्प्रभामण्डले प्रोल्लसत्कुण्डले, तारकाराजिनीकाशहारावलिस्मेरचारुस्तनाभोगभारानमन्मध्यवल्लीवलिच्छेदवीचीसमुल्लाससन्दर्शिताकारसौन्दर्यरत्नाकरे वल्लकीभृत्करे किङ्करश्रीकरे, हेमकुम्भोपमोत्तुङ्गवक्षोजभारावनम्रे त्रिलोकावनम्रे, लसद्वृत्तगम्भीरनाभीसरस्तीरशैवालशङ्काकरश्यामरोमावलीभूषणे मञ्जुसम्भाषणे, चारुशिञ्जत्कटीसूत्रनिर्भर्त्सितानङ्गलीलाधनुःशिञ्जिनीडम्बरे दिव्यरत्नाम्बरे, पद्मरागोल्लसन्मेखलाभास्वरश्रोणिशोभाजितस्वर्णभूभृत्तले चन्द्रिकाशीतले ॥२॥

विकसितनवकिंशुकाताम्रदिव्यांशुकच्छन्नचारूरुशोभापराभूतसिन्दूरशोणायमानेन्द्रमातङ्गहस्तार्गले वैभवानर्गले श्यामले, कोमलस्निग्धनीलोत्पलाऽपादितानङ्गतूणीरशङ्काकरोदारजङ्घालते चारुलीलागते, नम्रदिक्पालसीमन्तिनीकुन्तलस्निग्धनीलप्रभापुञ्जसञ्जातदूर्वाङ्कुराशङ्कसारङ्गसंयोग - रिङ्खन्नखेन्दूज्जवले प्रोज्ज्वले निर्मले, प्रह्वदेवेशलक्ष्मीशभूतेशतोयेशवाणीशकीनाशदैत्येशवाय्वग्निकोटीरमाणिक्यसंघृष्टबालातपोद्दामलाक्षारसारुण्यतारुण्यलक्ष्मीगृहीताङ्घ्रिपद्मे सुपद्मे उमे ! ॥३॥

सुरुचिरनवरत्नपीठस्थिते सुस्थिते रत्नपद्मासने रत्नसिंहासने शङ्खपद्मद्वयोपाश्रिते, तत्र विघ्नेशदुर्गावटुक्षेत्रपालैर्युते मत्तमातङ्गकन्यासमूहान्विते मञ्जुलामेनकाद्यङ्गनामानिते भैरवैरष्टभिर्वेष्टिते, देविवामादिभिः शक्तिभिसेविते धात्रिलक्ष्म्यादिशक्त्यष्टकैः संयुते मातृकामण्डलैर्मण्डिते यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्चिते पञ्चबाणात्मिके पञ्चबाणेन रत्या च सम्भाविते, प्रीतिभाजा बसन्तेन चानन्दिते भक्तिभाजां परं श्रेयसे कल्पसे योगिनां मानसे द्योतसे छन्दसामोजसा भ्राजसे, गीतविद्याविनोदातितृष्णेन कृष्णेन सम्पूज्यसे, भक्तिमच्चेतसा वेधसा स्तूयसे विश्वहृद्येन वाद्येन विद्याधरैर्गीयसे ॥४॥

श्रवणहरणदक्षिणक्वाणया वीणया किन्नरैर्गीयसे यक्षगन्धर्वसिद्धाङ्गनामण्डलैरर्च्यसे, सर्वसौभाग्यवाञ्छावतीभिर्वधूभिः सुराणां समाराध्यसे सर्वविद्याविशेषात्मकं चाटुगाथासमुच्चारणं कण्ठमूलोल्लसद्वर्णराजित्रयं कोमलं श्यामलोदारपक्षद्वयं तुण्डशोभातिदूरीभवत्किंशुकं तं शुकं लालयन्ती परिक्रीडसे, पाणिपद्मद्वयेनाक्षमालामपि स्फाटिकीं ज्ञानसारात्मकं पुस्तकं चाङ्कुशं पाशमाबिभ्रती येन सञ्चिन्त्यसे तस्य वक्त्रान्तराद् गद्यपद्यात्मिका भारती निःसरेत् येन वा यावका भाकृतिर्भाव्यसे तस्य वश्या भवन्ति स्त्रियः पूरुषाः येन वा शातकुम्भद्युतिर्भाव्यसे सोऽपि लक्ष्मीसहस्रैः परिक्रीडते, किं न सिद्ध्येद् वपुः श्यामलं कोमलं चन्द्रचूडान्वितं तावकं ध्यायतः, तस्य लीलासरो वारिधिस्तस्य केलीवनं नन्दनं तस्यगीर्देवता किङ्करी तस्य चाज्ञाकरी श्रीः स्वयम्, सर्वतीर्थात्मिके सर्वमन्त्रात्मिके सर्वतन्त्रात्मिके सर्वयन्त्रात्मिके सर्वपीठात्मिके सर्वतत्त्वात्मिके सर्वशक्त्यात्मिके सर्वविद्यात्मिके सर्वयोगात्मिके सर्वनादात्मिके सर्वशिष्या(शस्या)त्मिके सर्वविश्वात्मिके सर्वदीक्षात्मिके सर्वसर्वात्मिके सर्वगे पाहि मां पाहि मां पाहि मां देवि ! तुभ्यं नमो देवि तुभ्यं नमः ।।५।।

इति श्यामलादण्डकं सम्पूर्णम्

श्यामे सङ्गीतमातः परशिवनिलये मुख्यसाचिव्यभारो-
द्वाहे दक्षे दयापूरितनिजहृदये मामकीं दैन्यवृत्तिम् ।
श्रीमत्सिंहासनेश्यां भववनपतितान्दावदग्धान्नमस्ते
त्रातुं पीयूषवर्षैः कथय परिकरं बद्धवत्यां विविक्ते ।।

इति मातङ्गिस्तुति सम्पूर्णा ।।

## सुवासिनी पूजादिशेषकृत्यम्

अथ श्यामलां शक्तिमाहूय श्रीक्रमोक्तक्रमेण तामुपचर्य तच्छेषमुररीकृत्य हविःप्रतिपत्त्यादिक्रमशेषं समापयेत् । हविः प्रतिपत्ती मूलेन सर्वेण तत्त्वत्रयशोधनं विशेषः ।

### श्यामोपासकनियमाः

एतदुपासकस्यावश्यमनुष्ठेयाः नियमाः—

कदम्वतरुं न छिन्द्यात्, वाचा कालीति पदं नोच्चारयेत्। वीणावेणु-वादननर्तनगाथागोष्ठीषु प्रवर्तमानासु पराङ्मुखो न भवेत् गायकान् न निन्द्यात्, इति।

### पुरश्चरण-विधानम्

एवं नित्यसपर्यां निर्वर्तयन् पुरश्चरणं कुर्यात्। तच्च जपः होमः तर्पणं ब्राह्मणभोजनश्चेति चतुर्भिरङ्गैरुपेतम्। दीक्षाप्रकरणोक्तकाले श्रीगुर्वनुज्ञातो ब्राह्मणैः स्वस्ति वाचयित्वा, आचम्य, प्राणानायम्य, अमुकशर्मवर्मादिरहं श्यामामन्त्रसिद्धिकामो लक्ष्यचतुष्ठयं जपं तद्दशांशहवनम्, तद्दशांशतर्पणम्, तद्दशांशब्राह्मणभोजनश्चेति पूर्णाङ्गं पुरश्चरणं करिष्य इति सङ्कल्प्य जपेत्।

अथ सति सम्भवे तत्रान्तरदृष्टेन विधिना ग्रामात् बहिः क्रोशे नगराच्च क्रोशद्वये क्षेत्रं परिगृह्णीयात्। अथवा समुद्रमहानदीतीरयोः पश्चिमाभिमुख-वृषशून्यशिवायतनयोः विष्णुगृहपुण्यक्षेत्रतीर्थारण्यपर्वतशिखराश्वत्थबिल्वमूल-विविक्तनिजगृहगोष्ठानां श्रीगुरुस्वेष्टदेवतासन्निध्योश्चान्यतमं देशमासाद्य दीपस्थानविन्यस्ते व्याघ्रचर्ममृगाजिनचित्रकम्बलकुशकटरक्तपटपट्टवसनोर्णा-वस्त्राद्यन्यतमे आसने उपविश्य, विघ्नानुत्सार्य, प्राणानायम्य, सङ्कल्प्य वक्ष्य-माणलक्षणया अक्षमालया वक्ष्यमाणसंस्कारया रुद्राक्षाद्यन्यतमया वा मालया पूर्वाङ्गमन्त्रपूर्वकं प्रत्यहं सहस्रसंख्याकं मूलमन्त्रं तद्दशांशान् उत्तराङ्ग-मन्त्रांश्च जपित्वा पुनर्न्यासादिकं कुर्यात्। पूर्वाङ्गमन्त्रो यथा—

हसन्ति हसितालापे मातङ्गिपरिचारिके। मम भयविघ्नापदां नाशं कुरु कुरु ठः ठः ठः हुं फट् स्वाहा। इति।

मूलमन्त्रश्च—न्यासोक्तसप्तदशखण्डसमष्टिरूपः।

उत्तराङ्गमन्त्रास्तु—ऐं नमः उच्छिष्टचाण्डलि मातङ्गि सर्वशङ्करि, स्वाहा, इति श्यामाङ्गं लघुश्यामा।

ऐं क्लीं सौः वद वद वाग्वादिनि स्वाहा, इति तदुपाङ्गं वाग्वादिनी।

ॐ ओष्ठापिधाना नकुली दन्तैः परिवृता पविः।

सर्वस्यै वाच ईशाना चारु मामिह वादयेत्। इति तत्प्रत्यङ्गं नकुली।

**जपकालः**

अयञ्च जपो अपराह्णे कर्तव्यः, अपराह्णे श्यामेति सूत्रेण अपराह्णस्य पूजाकालत्वविधानात्। अन्ये त्वामध्यन्दिनमेव। देशोपप्लवादिसम्भावनाया-मासायान्ह्मपीति स्थितिः।

## पुरश्चरणाङ्गहोमः

एवं जपोत्तरं तस्मिन्नेवाह्नि श्रीक्रमोक्तेन विधिना कुण्डस्थण्डिलान्य-तरप्रतिष्ठापितेऽग्नौ देव्या उपचारान्ते सर्वासामावरणदेवानां एकैकाहुतिं तत्तन्मन्त्रैः प्रधानदेवतायाः दशाहुतीश्च स्वाहाऽन्तमूलेन उद्देशत्यागपूर्वकं एकैकेन त्रिमध्वक्तेन पलाशकुसुमेन हुत्वा, अथ जपदशांशञ्च हुत्वा होमशेषं समापयेत्।

**मन्त्रान्ते या वह्निजाया सा तु मन्त्रस्वरूपिणी।**
**तदन्तेऽन्यां प्रयुञ्जीत सा होमाङ्गतया मता॥**

इति शक्तिसङ्गमतन्त्रवचनात् स्वाहाऽन्तमन्त्रेष्वपि पुनः स्वाहाप्रयोगः कार्यः।

इदं च द्रव्यं इह इन्द्रियकामाग्निहोत्राङ्गदधिवन्नित्यं काम्यं च, संयोग-पृथक्त्वात्। तिलैः शान्त्या इत्यादिविधीनामन्यतः सिद्धहोमाश्रयेण, गोदोह-नस्य तादृशप्रणयनाश्रयेणेव फलाय गुणविधिरूपत्वात्, सत्यां कामनायां अयमेव होमो द्रव्यान्तरैरपि वक्ष्यमाणैः कार्यः, काम्यस्य नित्य-बाधकत्वात्।

## पुरश्चरणाङ्गं तर्पणम्

ततो नद्यादौ चतुरस्रमण्डलं विधाय तत्र चिन्तिते श्यामायन्त्रे देवी-मावाह्य पञ्चधा उपचर्य सुरभिलेन सुवर्णरजतताम्रादिपात्रगृहीतेन सलिलेन मूलान्ते श्रीमातङ्गीश्वरीं तर्पयामीति होमादशांशं तर्पयेत्। सत्यानुकूल्ये जपस्थान एव वा पूजाचक्रे तर्पयेत्। "तर्पणेऽपि तथैव स्यान्नमसोऽन्ते पुनर्नमः" इति सङ्गमतन्त्रोक्तेः नमोन्तेष्वपि मन्त्रेषु पुनः नमस्तर्पयामीति। प्रयोगः। तन्त्रान्तरानुसारिणे मार्जनपक्षेऽपि नमो योजनं तत्रैवोक्तम्॥

## पुरश्चरणाङ्गं भोजनम्

ततः तर्पणदशांशसंख्याकानेतद्विद्यादीक्षितानलाभे यथासम्भवं तत्तन्मन्त्रदीक्षितान्वा सदाचारान् प्रातः निमन्त्रिताभ्यञ्जितान् ब्राह्मणान् सुवासिनीः कुमारीश्च यथाविभवं वस्त्रगन्धादिभिः देवताधियाऽभ्यर्च्यमृष्टान्नेन भोजितान् ताम्बूलदक्षिणापरितोषितान् प्रदक्षिणीकृतनमस्कृतानाशिषो गृहीत्वा विसृजेत्

तर्पणदशांशब्राह्मणभोजनाशक्तौ तु तर्पणोक्तवज्जले देवतामावाह्य उपचर्यं च मूलान्ते आत्मानमभिषिञ्चामि नमः, इति कुम्भमुद्रया तर्पणदशांशवारं मूर्धन्यभिषेकं वा कुशै मार्जनं वा विधाय तद्दशांशं ब्राह्मणान् भोजयेत् ॥ इत्येकः पक्षः ।

प्रतिलक्षान्ते सर्वान्ते वा होमादि कुर्यादित्यपरौ ।

## होमप्रत्याम्नायो जपः

होमाशक्तौ ब्राह्मणानां पुरश्चरणजपसंख्याद्विगुणो जप इति मुख्य पक्षः । होमसंख्या द्विगुणो जप इति गौणः । क्षत्रियादीनां त्रयाणां त्रिगुणादिर्जपः । एवं तर्पणेऽपि । द्विजभक्तस्य शूद्रस्य द्विजस्त्रीणामपि होमप्रतिनिधिः जप एव । तेषां होमे तु नाधिकारः । ब्राह्मणभोजनस्य तु न क्वापि प्रतिनिधिः ॥

## आरब्धस्य पुरश्चरणादेः आशौचेऽपि कार्यत्वम् ।

इदं च पुरश्चरणमारब्धं सत् आशौच प्राप्तावपि कार्यम् नित्यार्चनादि च ।

तदुक्तम्—

जपो देवार्चनविधिः कार्यो दीक्षान्वितैर्नरैः ।
नास्ति पापं यतस्तेषां सूतकं वा यतात्मनाम् ॥

इति देवीयामले ।

सूतके मृतके चैव नित्यं विष्णुमयस्य च ।
सानुष्ठानस्य विप्रेन्द्र सद्यः शुद्धि प्रजायते ॥

इति नारदपाञ्चरात्रे ।

शिव विष्ण्वर्चने दीक्षा यस्य चाग्निपरिग्रहः ।

इति तस्येति शेषः ।

ब्रह्मचारियतीनाञ्च शरीरे नास्ति सूतकम् ॥

इति विष्णुयामले ।

ब्राह्मणस्यैव पूज्योऽहं शुचेरप्यशुचेरपि ।
पूजां गृह्णामि शूद्राणां स्वाचरनिरतात्मनाम् ॥
यज्ञव्रतविवाहेषु श्राद्धे होमार्चने जपे ।
आरब्धे सूतकं न स्यादनारब्धे च सूतकम् ॥
आरम्भो वरणं यज्ञे संकल्पो व्रतजापयोः ।
नान्दीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति विष्णुवचनम् । ब्राह्मणस्य इत्युपलक्षणं क्षत्रियवैश्ययोः ।

न चैवापूज्य भुञ्जीत शिवलिङ्गं महेश्वरि ।
सूतके मृतके चापि न त्याज्यं शिवपूजनम् ॥

इति लिंगपुराणे । पराशरोऽपि—

उपासने तु विप्राणां अङ्गशुद्धिः प्रजायते ॥

इति च । एवं अन्यान्यपि वचनानि तन्त्रान्तरेषु बहुलं उपलभ्यमानानि विस्तरभयान्नेह लिखितानि । सूतकादौ नैमित्तिककाम्ययोः अनधिकार एव, साधकस्य प्रतिबन्धकबाहुल्यात् ॥

### सिद्धिपर्यन्तं पुरश्चरणस्य अभ्यासः

एकेन पुरश्चरणेन यदि न मन्त्रः सिध्यति तदा तस्य द्वयं त्रयं वा कुर्यात् । तथाऽपि तदसिद्धौ सिद्धिकारकाः प्रयोगाः ग्रन्थान्तरोक्ताः ग्राह्याः । मनोरथानामक्लेशः सिद्धेरुत्तमलक्षणम्, इत्यादि सिद्धिसूचकानि चान्यतो ज्ञेयानि, इह तु विस्तरभयान्न लिखितानि ।

सम्यक् सिद्धैकमन्त्रस्य पञ्चाङ्गोपासनेन हि ।
सर्वे मन्त्राश्च सिध्यन्ति तत्प्रभावात् कुलेश्वरि ॥
सम्यक् सिद्धैकमन्त्रस्य नासाध्यं विद्यते क्वचित् ।
बहुमन्त्रवतः पुंसः का कथा शिव एव सः ॥

अतः पुरश्चरणमावश्यकमिति ।

### पुरश्चरणप्रत्याम्नायः

अतः पुरश्चरणप्रत्याम्नायाः कतिचित् लिख्यन्ते । शशिसूर्योपरागे त्रिरात्रमेकरात्रं वा पूर्वमुपोष्य एकभुक्तं वा विधाय ग्रहणारम्भघटिकार्धात्

प्रागेव स्नातः समुद्रगाया नद्यास्तटादेर्वा नाभिमात्रजले तिष्ठन्, अशक्तौ तु तट एवोपविष्टः, आचम्य, प्राणानायम्य, देशकालौ संकीर्त्य ॐ अमुकराशिगते सवितरि सोमस्य सूर्यस्य वा ग्रहणे अमुकगोत्रोऽमुक शर्मवर्मादिरहं अमुकविद्यासिद्धिकामः स्पर्शमारभ्य विमुक्तिपर्यन्तं जपं करिष्य इति सङ्कल्प्य जपेत् । ततोऽपरेद्युः ग्रहणकालीनस्य जपस्य समसंख्याकं तद्दशांशं वा होमं, तर्पणं तत्समसंख्याकं वा ब्राह्मणभोजनञ्च सम्पादयेत् । यद्वा—ग्रहणपुण्यकाल एव मन्त्रानुसारेण जपस्य तत्समांशस्य तद्दशांशस्य वा होमस्य तदनुगुणस्य तर्पणस्य च कालं विभज्य जपाद्याचरेत् । परेद्युः तर्पणसमसंख्याकं तद्दशांशं वा ब्राह्मणभोजनं कारयेदित्येकः प्रकारः ॥

कृष्णाष्टम्यां प्रातः कृतनित्यक्रियः पूर्ववत् सङ्कल्प्य अयुतचतुष्टयं जपं सप्तधा विभज्य प्रत्यहं चतुर्दशोत्तरसप्तशताधिकसहस्रपञ्चकसंख्यया (५७१४) तत्कृष्णत्रयोदशी पर्यन्तं (६ ५७१४ × ३४२८४) जपित्वा चतुर्दश्यां षोडशोत्तर–सप्तशताधिक–सहस्रपञ्चकं (५७१६; व ५७१६ + ३४२८४ = ४००००) जपेत् । सङ्कल्पे चाद्य कृष्णाष्टमीमारभ्य एतच्चतुर्दशीपर्यन्तमिति विशेषः । होमादि विधिस्तु तद्दशांश एवेत्यन्यः ॥

प्रातः नित्यक्रियोत्तरं प्राग्वत् सङ्कल्प्य अकारादि क्षकारान्तान् आनुलोम्येनोच्चार्य मूलञ्च सकृदुच्चार्य पुनर्मातृकावर्णान् विलोमानुच्चारयेत् । इत्येवं रीत्या प्रत्यहं अष्टोत्तरशतसंख्यया मासमात्रं जपित्वा होमादि-कुर्यात् । सङ्कल्पस्तु एतदनुगुण एवोह्यः, इत्यपरः ॥

यथासम्भवं अनयोः प्रत्याम्नाययो जपस्य चतुर्गुणितत्वं तर्पणादेश्च तद्दशांशत्वं बोध्यम् । प्रत्यहं रात्रौ त्रिकालं सर्वोपचारैरिष्टदेवतां साङ्गां सावरणामर्चयेत् । एवं षण्मासान् मासमात्रं वा पूजयितः पुरश्चरणमन्तरेणापि विद्यासिद्धिर्भवति । संकल्पश्चैतदनुरूप एवोह्यः, इति चापरः ॥

सूर्योदयं समारभ्य यावत्सूर्योदयावधि ।
तावज्जप्त्वा निरातङ्कः सर्वसिद्धीश्वरो भवेत् ॥
सहस्रारे गुरो पादपद्मं ध्यात्वा प्रपूज्य च ।
केवलं देवभावेन जप्त्वा सिद्धीश्वरो भवेत् ॥ इति चान्यः

प्रकारान्तराणि च ग्रन्थान्तरेषु द्रष्टव्यानीति दिक् ॥

## कूर्मचक्रलक्षणम्

समीकृते भूतले प्राक् प्रत्यगायताः दक्षिणोत्तरायता चतस्रश्चतस्रो रेखा विलिख्य नव कोष्ठानि विधाय तत्र पूर्वादिप्रादक्षिण्यक्रमेण अष्टसु कोष्ठेषु क च ट त प य श ल, आख्यान् अष्टवर्गान् अकारादिस्वरद्वयं च विलिख्य मध्यकोष्ठे श्रीकारं विलिखेत्। इदं च कूर्मचक्रं क्षेत्रग्रामगृहभेदात् त्रिविधम्। तत्र क्षेत्रग्रामयोः तत्तन्नामाद्यक्षरयुक्तं कोष्ठं मुखम्। तत्पार्श्व-द्वयकोष्ठद्वयं हस्तौ। चरणमध्यगतं कोष्ठं च पुच्छमिति विवेकः। एवमुक्त-प्रकारस्य तदधः स्थितं कुक्षिः। तदधः स्थितौ चरणौ। कुक्षिमध्यगतं कोष्ठं पृष्ठम्। क्षेत्रादौ विभावितस्य कूर्मस्य मुखे पृष्ठे वा जपे होमे च सर्वार्थ-सिद्धिः। करयोः तनौ कोष्ठान्तराणि अनुपयुक्तानीति। कूर्मचक्रानावश्यक-तोक्ता कतिपयेषु स्थलेषु। यथा—

कुरुक्षेत्रे प्रयागे च गंगासागरसंगमे।
महाकाले च काश्याञ्च दीपस्थानं न चिन्तयेत्॥

इति। दीपस्थानोपलक्षितत्वात् कूर्मचक्रमपि दीपस्थानमित्युक्तम्। इह चक्रे चोक्तेषु कोष्ठेषु रिपुस्थानं विचिन्त्य तत्त्यागपूर्वकमवशिष्टं मित्रस्थानमुपा-देयम्। अरिमित्रविचारो यथा—

अद्वयस्य ठकारेण ठकारस्यापि तेन च।
लृद्वयस्य पकारेण पकारस्यापि तेन च॥
ओद्वयस्य षकारेण षकारस्यौयुगेन च।
जकारस्य टकारेण झकारस्य खकारतः॥
उकारस्य लकारेण फकारस्य घकारतः॥
भकारस्य तु रेफेण यकारस्य सकारतः॥
अरित्वमेषां वर्णानां अन्येषां मित्रभावना॥

### मालासंस्कारः

ताश्च अकारादिक्षकारान्तमातृकावर्णरुद्राक्षमुक्ताफलमाणिक्यस्फटिक-प्रवालस्वर्णरजतशंखरक्तचन्दनोपादानकमणिपुत्रजीवपद्मवीजकुशग्रन्थ्यादि-मय्यः॥

## अक्षमालायाः संस्कारानपेक्षा

अक्षमाला हि ब्रह्मरन्ध्रस्य दक्षभागादिनाभिमभिव्याप्य वामभागपर्यन्तं अवरोहारोहणक्रमेण ब्रह्मनाड्यां अन्योन्याभिमुखत्वेन ग्रथितैः आनुपूर्वेणोच्चारितैः अकारादिभिः ळकारान्तैः पुनः प्रातिलोम्येनोच्चारितैः च ळकारादिभिः अकारान्तैः वर्णै शतबीजात्मिका भवति। क्षकारस्य मेरुस्थानीयस्य लकारद्वयस्य मध्य उच्चारणमात्रम्। न तु जपसंख्याऽन्तर्गणना। अत्रानुलोम्येन अवरोहारोहयोः प्रथमं मातृका ततो मन्त्रः। प्रातिलोम्येन अवरोहारोहयोस्तु प्रथमं मन्त्रः ततो मातृकेति तत्त्वम्। शतान्ते अ क च ट त प य श, आख्यवर्गाष्टकादित्वेन जपस्य अष्टोत्तरशतत्वं ज्ञेयम्। एवं सहस्रादौ च। अस्याः मालायाः न संस्कारापेक्षा॥

## रुद्राक्षमालासंस्कार

अष्टोत्तरशतं रुद्राक्षान् षड्गुणिते वक्ष्यमाणान्यतमे सूत्रे सप्रणव-एकैकमातृकोच्चारणपूर्वकं अन्तरान्तरा सग्रन्थिकं अन्योन्याभिमुख-गोपुच्छाकारेण सर्पाकारेण वा ग्रथयित्वा स्थूलमेकं रुद्राक्षमेकीकृते सूत्राग्रद्वये मेरुत्वेन ग्रथयित्वा नवसंख्याकैः अश्वत्थपत्रैः अष्टदलपद्मं विरच्य तत्र मालां निवेश्य मूलमन्त्रान्ते गोमूत्रगोमयगव्यदुग्धदधि-घृताख्येन पञ्चगव्येन, ॐ सद्यो जातं प्रपद्यामि सद्यो जाताय वै नमोनमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः॥—इति मन्त्रान्ते कुशोदकेन च प्रक्षाल्य, ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठायनमो रुद्राय नमः कालाय नमः कलविकरणाय नमो वलविकरणाय नमो वलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः—इति मन्त्रान्ते चन्दनागुरुकूर्पूरादिभिराघर्षणं विधाय, ॐ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वेभ्य सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः॥ इति मन्त्रेण धूपयित्वा, ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयाद्—इति मन्त्रेण चन्दनकस्तूरीकुङ्कुमकर्पूरैः लेपयित्वा अक्षमालां वामकरपुटे निधाय, ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधि-

पतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्—इति मन्त्रेण अष्टोत्तरशतवारमभिमन्त्र्य रुद्राक्षमालायाः प्राणाः इह प्राणाः। रुद्राक्षमालायाः जीवः इह स्थितः। रुद्राक्षमालायाः सर्वेन्द्रियाणि रुद्राक्षमालायाः वाङ्मनःप्राणाः इह आयान्तु स्वाहा।—इति मन्त्रेण प्राणप्रतिष्ठां कृत्वा उपास्यदेवतां तत्रावाह्य, मूलेन पञ्चधा उपचर्य, तेन मातृकावर्णैश्च अभिमन्त्र्य होमप्रकरणोक्तरीत्या अग्निमुखं विधाय, मूलेन अष्टोत्तरशताज्याहुतीः हुत्वा, सम्पाताज्यं मालायां निक्षिपेत्। अशक्तौ तु होमसंख्या—द्विगुणं मूलमन्त्राभिमन्त्रणं, इति ॥

## मालान्तरसंस्कारः

अथान्यासां मालानां संस्कारः—उक्तरीत्या ग्रथितां मालां प्रासादमन्त्रेण पंचगव्ये क्षणं निक्षिप्य तस्मादुद्धृत्य कुशोदकेन प्रक्षाल्य चन्दनादिभिरुपलिप्य पात्रे निधाय पञ्चायतनदेवताः तत्तन्मन्त्रेण आवह्य पञ्चधोपचर्य प्रासादेन शतावाराभिमन्त्र्य सूर्यादीन् ग्रहान् इन्द्रादीन् दिक्पालांश्च तत्तन्मन्त्रेण सम्पूज्य सघृतैः तिलैः यथाशक्तिवारं मूलेनाग्नौ जुहुयात्। अशक्तौ अभिमन्त्रयेत्। ततो यथाविभवं काञ्चनं गुरवे दक्षिणां दत्वा ब्राह्मणांश्च भोजयेत्।

संस्कारान्तरं यथा—सूत्रं मणींश्च पंचगव्ये दिनत्रयं संस्थाप्य चतुर्थदिने उद्धृत्य अस्त्रेण प्रक्षाल्य, हृन्मन्त्रेण स्वेष्टमन्त्रेण वा प्रत्येकं आवृत्तेन मणीनन्योन्याभिमुखं ग्रथयित्वा स्थेण्डिले स्वेष्टदेवतासपर्यामण्डलं विधाय, तत्र तां अभ्यर्च्य, मूलं अष्टोत्तरशतसंख्यं जपित्वा तत्तत्कल्पोक्त-पुरश्चरणहोमद्रव्येण घृतेन वा यथाशक्ति हुत्वा, मण्डले मालां निधाय, तस्यामस्त्रमन्त्रः मूलमन्त्रषडङ्गमन्त्रांश्च विन्यस्य, तां स्वेष्टदेवतारूपां विभाव्य, सम्पूज्य सर्वंभूतबलिं दत्त्वा आचार्यं दक्षिणादिभिः परितोष्य ब्राह्मणान् भोजयेदिति ॥

उक्तसंस्कारविधिः त्रैवर्णिकविषयः। स्त्रीशूद्राणां तु उपास्य मूलमन्त्रेणैव सर्वं कार्यम् ॥

यन्मन्त्रजपार्थं या माला संस्कृता तया तस्यैव जपः कार्यो नान्यस्य।

अत्र च विशेष :—

शिवमन्त्रेण संग्रथ्य शक्तिमन्त्रं जपेदपि।
शक्तिमन्त्रेण संग्रथ्य शिवमन्त्रं जपेच्छिवे॥
ध्रुवेण मातृकाभिर्वा ग्रथ्यन्ते मणयो यदि।
तदा सर्वेऽपि जप्तव्या मनवो मालया तया॥ इति

ध्रुवः प्रणवः।

## देवताभेदेन सूत्रभेदः

देवताभेदेन सूत्रभेदे उक्तः। यथा—देव्या रक्तपट्टसूत्रम्। शिवस्योर्णाभवं श्वेतं वा वल्कलं वा। सूर्यगणेशयोः कार्पासजम्। तच्च सुवासिन्या ब्राह्मण्या कर्तितम्। स्वसमानजातीययोषित् कर्तितं वा। त्रिगुणं त्रिगुणी कृतम्। यत्र ब्राह्मणी कर्तितं न मिलति तत्र वर्णान्तरीयकेवलसुवासिनी-कर्तितं ग्राह्यम्। अन्येषु सूत्रेषु त्वैच्छिकं गुणस्थौल्यं मानञ्च॥

## मालासंस्कारकालः

मालासंस्कारकालस्तु—विष्णोः द्वादश्यां पूर्वान्हः। शक्तेः अष्टमी-नवमी चतुर्दशीनां रात्रिः। शिवस्य त्रयोदशी दिवा। सूर्यस्य सप्तमी। दिवा इति॥

## मालाभेदेन फलभेदः

मालाभेदेन फलभेदो यथा—मातृकाऽक्षमाला क्षिप्रं मन्त्रसिद्धयै। रुद्राक्षमाला मोक्षाय मौक्तिकमाणिक्यमय्यौ साम्राज्याय। स्फाटिकी सर्वेभ्यः कामेभ्यः। पुत्रजीवमयी सम्पत्सारस्वतावाप्त्यै। पद्मवीजमयी श्रीयशोभ्याम्। रक्तचन्दनमयी वश्यभोगाभ्याम्। इत्यन्यासामपि फलानि ग्रन्थान्तरेषु द्रष्टव्यानि।

## सूत्रजीर्णतादौ प्रायश्चित्तम्

सूत्रे जीर्णे नवेन ग्रथयित्वा मूलेनाष्टोत्तरशतवारानभिमन्त्रयेत्। जपसमये प्रमादात् करगलितायां छिन्नायां वा मालायां निषिद्धस्पर्शे वा अष्टोत्तरशतमूलमन्त्रजपः प्रायश्चित्तम्॥

## जपभेदाः

अथ जपभेदाः ज्ञानार्णवे—

निगदेनोपांशुना वा मानसेनाथवा जपेत् ।
निगदः परमेशानि स्पष्टं वाचा निगद्यते ॥
अव्यक्तश्च स्फुरद्वक्त्र उपांशुः परिकीर्तितः ।
मानसस्तु वरारोहे चित्तेनान्तररूपवान् ।
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ।
उपांशुस्मरणेनैव तुल्यं भवति शैलजे ।
उपांशुलक्षमात्रं तु यज्जप्तं कमलेक्षणे ।
मानसस्मरणेनैव तुल्यमेकेन सुन्दरि ॥

स्वच्छन्दतन्त्रसारे तु—

जपस्तु षड्विधः प्रोक्तस्तत् प्रकारोऽयमुच्यते ।
वाचिकं मानसं चैव योगिकं योगवाचिकम् ॥
योगमानसिकं चैव वाङ्मानसिकयोगिकम् ।
वाचा केवलयोच्चार्यं मन्त्रं देवीं विभाव्य च ॥
जपेद् यत् परमेशानि वाचिकं तत्प्रकीर्तितम् ।
देव्या रूपं च संचिन्त्य सावधानेन चेतसा ॥
मन्त्रस्याप्यनुसन्धानं मानसं परिकीर्तितम् ।
त्रिस्थानेन त्रिबीजानि क्रमात् संचिन्त्य मार्गतः ॥
आरोहो यौगिकं प्रोक्तमुच्यते योगवाचिकम् ।
लक्ष्ये मनः समायोज्य वाचा मन्त्रं जपेच्छिवे ॥
योगवाचिकमेतत् स्याद्योगमानसिकं शृणु ।
लक्ष्येण मानसं पूर्वं संयोज्य मनसा जपन् ॥
योगमानसिकं विद्यादथान्यदपि चोच्यते ।
मनसाऽपि जपेन्मन्त्रं बीजानारोहणक्रमात् ॥
वाङ्मानसिकयोगाख्यं जपमेतदनुत्तमम् ।
वाचिकेन जपेनैव केवला वाक् प्रवर्तते ॥

मानसाज्छ्रियमाप्नोति यौगिकाद् योगसिद्धयः ।
वाङ्मानसजपेनैव वाग्ज्ञानैश्वर्यसिद्धयः ॥
भवन्ति परमेशानि योगमानसिकेन तु ।
अणिमादीनि चान्यानि सर्वाणि लभते ध्रुवम् ॥
वाङ्मानसिकयोगाख्यजपेन परमेश्वरि ।
वागाद्यकुलपर्यन्तमचिराल्लभते नरः ॥
येन केन जपेनैव ह्रस्वदीर्घप्लुतक्रमात् ।
जप्ता विद्याश्च मन्त्राश्च सर्वे सर्वार्थदायिनः ।
भवन्ति गुरुवक्त्रेण लब्धाः सर्वाङ्गसुन्दरि ।
स्वयं निरीक्ष्य ये कोशं मन्त्रं विद्यामथापि वा ॥
गृण्हीयुर्ये व्रजेयुस्ते रौरवं नरकं शिवे ।
तस्मादास्तिक्यसंयुक्तः साधको देशिकाज्ञया ॥
शिवागमान्निरीक्षेत नान्यथा वीरवन्दिते ॥

इति जपभेदाः ।

## होमे वह्निस्थिति विचारः

तत्र मुहुर्तचिन्तामणौ—

सैकातिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रेभुवि वह्निवासः ।
सौख्याय होमः शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ॥

अस्यार्थः—शुक्ल प्रतिपदादिहोमदिनसंख्ययैकमधिकमङ्कमादित्यादि-वारसंख्यां च मेलयित्वा चतुर्भिर्हरणेन त्रये शिष्टे शून्ये वा वह्निर्भुवि वसति । तदा होमः सुखाय भवति । एकस्मिन् द्वये वा शेषे क्रमाद्दिवि पाताले च वह्निवासः । तदानीं होमेन प्राणार्थनाशौ भवतः इति ॥

तत्रैव ग्रहविचारे रुद्रयामले—

तेषां स्थितिक्रमं वक्ष्ये नक्षत्रेषु यथा स्थिताः ।
सूर्यो बुधो भृगुश्चैव शनिश्चन्द्रो महीसुतः ॥
जीवो राहुश्च केतुश्च नवैते देवि खेचराः ।
सूर्यभाच्चन्द्रभं यावत् गणयेच्च महेश्वरि ॥

त्रीणि त्रीणि च ऋक्षाणि रविभाद्दीनि दापयेत् ।
सूर्यादीनां फलं देवि शृणु वक्ष्ये तथाक्रमम् ॥
आदित्ये तु भवेच्छोको बुधे चैव धनागमः ।
शुक्रे लाभं विजानीयाच्छनौ पीड़ा न संशयः ॥
चन्द्रे लाभो महान् देवि भौमे चैव तु बन्धनम् ।
गुरुणा च धनप्राप्तिः राहौ हानिस्तथैव च ॥
केतुना जायते मृत्युः फलमेवं महेश्वरि ।
क्रूरहोमस्तथा देवि क्रूरग्रहमुखो भवेत् ॥

सूर्यभं सूर्याक्रान्तं नक्षत्रं, चन्द्रभं तद्दिवसनक्षत्रम् । दापयेत् सूर्यादिभ्यः इति शेषः । सूर्यनक्षत्रादिचन्द्रनक्षत्रपर्यन्तं नक्षत्राणां त्रयं त्रयं सूर्यादिस्वामिकमित्यर्थः । क्रूरहोमो मारणोच्चाटनादि फलकः । शेषं सुगमम् । एवं वह्निस्थिति ग्रहांश्च विचार्य सौम्यहोमः सौम्यग्रहेषु क्रूरश्च क्रूरग्रहेषु कार्यः ॥

## कुण्डस्थण्डिलयोः परिमाणम्

तत्र एकोनपञ्चाशत् संख्याकाहुतिपर्यन्तं स्थण्डिलमेव । तच्च अष्टादशांगुलप्रमाणं परितः अङ्गुष्ठोन्नतम् । अग्रे कुण्डेन सह विकल्पोऽशक्तिशक्तिभ्यां व्यवस्थितिः । पञ्चाशदादिनवनवति संख्याहुति पर्यन्तं मुष्टिमात्रम् । मुष्टिः अरत्निः । शतादिनवनवत्यधिकनवशत्याहुतिपर्यन्तं अरत्निमितम् । निष्कनिष्ठमुष्टिर्हस्तोऽरत्निः । सहस्रादि होमे हस्तमात्रम् । अयुतादौ द्विहस्तम् । लक्षादौ चतुर्हस्तम् । दशलक्षादौ षड्ढस्तम् । कोटिहोमादौ अष्टहस्तं वा । चतुर्विंशत्यंगुलैः हस्तः । अङ्गुलं तिर्यङ्निहिताष्टयवप्रमाणं स्वमध्यमामध्यपर्वमितं वा ज्ञेयम् । मुष्ट्या वा चतुरङ्गुलानि । अर्धयवोनचतुस्त्रिंशतांगुलैः द्विहस्तम् । सार्धैकचत्वारिंशता त्रिहस्तम् । अष्टचत्वारिंशता चतुर्हस्तम् । पादोनचतुःपञ्चाशता पञ्चहस्तम् । पादोनैकोनषष्ट्या षड्ढस्तम् । सार्धत्रिषष्ट्या सप्तहस्तम् । अष्टषष्ट्या यवोनया अष्टहस्तम् । द्विसप्तत्या नव हस्तम् । षट्सप्तत्या दश हस्तं कुण्डं—स्थण्डिलं वा भवति । कुण्डाङ्गानां व्यासखातनाभिकण्ठमेखलायोनीनां सम्यग्ज्ञान एव कुण्डं युक्तम् ।

अन्यथा अत्यन्तमनिष्टम् । स्थण्डिलं चतुरस्रमङ्गुलोत्सेधं चतुरङ्गुलोत्सेधं वा । स्थूलद्रव्यहोमे तत्तत्परिमाणस्यापर्याप्तौ स्वोत्तरपरिमाणमपि ग्राह्यम् ॥

## होमे इतिकर्त्तव्यता विशेषः

वहुऋत्विक्कर्तृके होमे यथाकालं प्रत्याहुति उद्देशत्यागयोः कर्तुमशक्यत्वात् यजमानो देवतां द्रव्यं च मनसा ध्यात्वा अमुकदेवताया इदं सर्वं होमद्रव्यजातं न ममेति त्यजेत् ॥

ऋत्विजस्त्वाचान्ताः कृतप्राणायामाः प्रत्येकं देशकालौ संकीर्त्य अमुकेन वृतोऽहं अमुकसङ्ख्याकहोममध्ये अमुकांशेन यजमानोपकल्पितामुकद्रव्येण होमं करिष्य इति सङ्कल्प्य आसनविधिं भूतशुद्ध्यादिकं तत्तदेवता ऋष्यादिन्यासत्रयं कृत्वा अग्नौ देवताध्यानमानसपूजान्ते प्राङ्मुखा वोदङ्मुखाः वा जुहुयुः । होमसङ्ख्यासमाप्तौ परिधिपरिस्तरणान्तः पतित हविः सर्वमग्नौ प्रक्षिपेत् । तद्वहिः पतितं तु न ।

अनेकदिनसाध्ये तु होमे प्रतिदिवसं कयाचित् सङ्ख्यया संस्थाप्य वन्हिरक्षणपूर्वकं शुभदिने समाप्तिं कुर्यात् । प्रतिदिनं होमाद्यन्तयोः प्रधानदेवतां अङ्गदेवताश्च गन्धपुष्पादिभिः अग्निमध्ये पूजयेत् । आरम्भे समाप्तिदिने अग्निमूलमन्त्रेण स्वाहा स्वधा सहितं अग्निं पूजयेत् । तत्र गन्धादिकं वहिरेव अग्नये दद्यात् ॥

यत्र होम एव प्रयोगविशेषे फलप्रदत्वात् प्रधानं न पुनर्जपाङ्ग तत्र तत्र ब्राह्मणभोजनसङ्ख्यया तन्त्रे विशेषानुक्तौ स्मृत्युक्ता ग्राह्या । तत्र लक्षहोमे षष्ठ्यधिका नवशती मुख्यः पक्षः । विंशत्यधिका पञ्चशती मध्यमः । दशाधिका त्रिशती अधमः ॥

यत्र प्रधानदेवता अङ्गत्वेन स्मृतितन्त्रोक्तयोरविरोधे समुच्चयपक्षमाश्रित्य ग्रहा अपि पूज्यन्ते । तत्र तदङ्गब्राह्मणभोजनमपि कार्यम् । तत्रोत्तमे पक्षे विंशत्यधिका सप्तशती ब्राह्मणानां भोजनीया । मध्यमपक्षे चत्वारिंशदुत्तरं शतत्रयम् । अधमे च दशाधिकं शतमिति ॥

## काम्यहोमद्रव्याणां मानं फलं च

तिलैश्चुलुकमितैः शतसंख्याकैर्वा प्रत्याहुतिहोमः शान्त्यै, आज्येन च कर्षप्रमाणेन। ग्रासमितैरन्नैरन्नाय। अमृतासमिद्भिः कनिष्ठास्थूलाभिः चतुरङ्गुलप्रमाणाभिः ज्वरोपशमनाय चूतपल्लवश्च। दुर्वाभिः तिसृभिस्तिसृभिरायुषे। कृतमालकुसुमैः धनाय। उत्पलैः भोगाय। विल्वदलैः राज्याय। समग्रैः पद्मैः साम्राज्याय। मुष्टिमितैः लाजैः कन्यायै। नन्द्यावर्तैः कवित्वाय। वञ्जुलमल्लिकाजातीपुन्नागैः भाग्याय। बन्धूकजपाकिंशुकमधूकैः ऐश्वर्याय। कदम्बैः वश्याय। लवणैः शुक्तिप्रमाणै आकर्षणाय। शालितण्डुलैः अर्धमुष्टिमितै धान्याय। कुंकुमगोरोचनादिभिः गुञ्जामितैः सौभाग्याय। पलाशपुष्पैः तेजसे कपिलाघृतेन चोक्तमानेन। धुत्तूरकुसुमैरुन्मादाय। विषवृक्षनिम्बश्लेष्मातकविभीतकसमिद्भिः दशाङ्गुलप्रमाणाभिः शत्रुनाशाय। निम्बतैलाक्तैः लवणैः उक्तमानैः मारणाय। काकोलूकपक्षेणैकेन विद्वेषणाय। तिलतैलाक्तै मरीचैः विंशत्या कासश्वासप्रशमनाय इति। पुष्पेषु स्थूलमेकैकं अल्पानि द्वित्राणि इति वा विवेकः। एतानि द्रव्याणि काम्यजपांगेषु होमेषु तत्तज्जपदशांशसंख्याकानि। प्राधान्येन होमे तु संख्याऽनुक्तौ सहस्रसंख्याकानि। इह च प्रथमं अभीष्टदेवतायै विज्ञाप्य अमुककर्म सिद्ध्यर्थं एतावदाहुतीः करिष्यामीति सङ्कल्पयेत्। कर्षस्तु षड्गुंजामितमाषषोडशकप्रमाणः। शुक्तिः कर्षद्वयम्। मुष्टिस्तु पलम्॥

## पुरश्चरणकाले विहितानि

मनःस्थैर्यशौचमौनमन्त्रार्थचिन्तननिर्वेदश्रद्धोत्साहक्रोधाभावसन्तोषेन्द्रियनिग्रहब्रह्मचर्यगुरुप्रणतिसुगन्धामलकस्नानसुवससुनरभिलानुलेपनमध्यपत्रवर्जपलाशपत्रालिमितैकवारभोजनप्रक्षालितदर्भास्तीर्णधौतवस्त्रशयनत्रिषवणस्नानादीनि। अशक्तौ तु प्रातःस्नानमात्रम्।

## निषिद्धानि

अप्रियानृतभाषणकरञ्जविभीतकार्कस्नुहिछायाक्रमणप्रतिग्रहादीक्षितस्त्रीशूद्रपतितनास्तिकसम्भाषणबह्वेकमलिनवस्त्रधारणकाम्यकर्माविहितकर्मकांस्यभोजनासत्संगोष्णजलस्नानकञ्चुकोष्णीषधारणप्राणिहिंसापादुकायानशय्यारोहणनग्नत्वकुशरहितकरत्वादीनि अतिभोजनञ्च॥

## भोज्यानि

शुक्लकविधान्नं हैमन्तनीवारकंगुषष्टिका यवाः शूद्रानवहृताः गुडवर्जितमैक्षवं कृष्णतिलमुद्गकलायकन्दविशेषनारिकेलकदलीलवलीपनसाम्रामलकार्द्रकसामुद्रलवणानुद्धृतसारगव्यपिप्पलीजीरकनारंगादीनि ॥

## अभोज्यानि

गुडकृत्रिमलवणपर्युषितनिस्स्नेहकीटादिदूषितकाञ्जिकगृञ्जनविल्व करंजलशुनमृणालकोद्रवतैलपक्वमाषमसूरचणकादिदेवधान्यादीनि ।

## भोजनपर्यायः

स्वेष्टदेवतायै निवेदितं सव्यंजनं अन्नं मूलेन प्रोक्ष्य सप्तवारं प्रतिद्रव्यमभिमन्त्र्य अश्नीयात् । उदकं द्वात्रिंशद्वारंमूलाभिमन्त्रितम् पिवेत् ॥

जपादिसमय आवश्यकोपाधौ शुचौ देशे तं निवर्त्य स्नात्वा शेषं समापयेत् । अशक्तौ तु मन्त्रभस्मान्यतरस्नानवस्त्रपरिवर्तने केवलं कुर्यादिति ॥

इत्थं कृतपुरश्चरणः सिद्धमनुः देवताप्रसादसम्पन्नः स्वातन्त्र्येणोपास्तौ श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनपरः सति कामे काम्यमनुतिष्ठन् पूर्णमनोरथः सुखी विहरेदिति शिवम् ॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे श्यामाक्रमः समाप्तः ॥

## श्रीदण्डिनीक्रमः

इत्थं साङ्गां सङ्गीतमातृकामिष्ट्वा सिंहासनाधिरूढायाः ललितायाः महाराज्ञ्या दण्डनायिकास्थानीयां दुष्टनिग्रहशिष्टानुग्रहनिरर्गलाज्ञाचक्रां समयसङ्केतां कोलमुखीं विधिवद्वरिवस्येत् ।

साधकस्तावन्निशीथे प्रबुद्धः श्रीक्रमोक्तेन क्रमेण श्रीगुरुध्यानादिप्राणायामान्तं विधिं विदध्यात् । तत्र च श्रीगुरुपादुकायामादौ त्रितारीस्थाने वाक् ग्लौं इति बीजद्वयं योज्यम् । ततो हृदयपरमाकाशे स्फुरतोऽखण्डानन्ददायिनः परसंवित्परिणतेरनाहतस्य नादास्यऽनुसन्धानेन भस्मितनिखिलकश्मलो मूलं मनसा दशवारमावर्त्य, उत्थाय निर्वर्तितावश्यको गृह एव वारुणमान्त्रभास्मनस्नानेष्वन्यतमं कुर्यात् । वारुणे मूलेन त्रिरुदकाञ्जलिदानं शिरसि, त्रिराचमनं, त्रिःप्रोक्षणं च विदध्यात् । मान्त्रभास्मनस्नाने स्मृत्युक्ते एव । अथ वाससी धौते परिधाय विधृतपुण्ड्रः मूलेन त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसे नाभिं हृदयं शिरश्चावमृशेत् ।

### यागमन्दिरप्रवेशः

एवं त्रिराचम्य यागमन्दिरमासाद्य गोमयेनोपलिप्तद्वारस्थण्डिलं, द्वारस्य दक्षवामोर्ध्वभागेषु क्रमेण—

ऐं ग्लौं भद्रकाल्यै नमः २ भैरवाय नमः, २ लम्बोदराय नमः, इति तिस्रो द्वारदेवताः समर्च्य, अन्तःप्रविष्टो रङ्गवल्लीपुष्पमालावितानकादिभिरलङ्कृत्य यागमन्दिरम्, ऐं ग्लौं रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा, सपर्यासामग्रीं दक्षभागे निधाय, दीपानभितः प्रज्ज्वाल्य, गन्धमाल्यादिभिरात्मानमलङ्कृत्य, ताम्बूलसुरभिलवदनो जातिपत्रफललवङ्गैलाकर्पूराख्यपञ्चतिक्तामोदितवदनो वा प्रसन्नमनाः स्वास्तीर्णे ऊर्णामृदुनि शुचिनि बालान्त्यबीजेन द्वादशवारमभिमन्त्रिते मूलमन्त्रोक्षिते आसने ऐं ग्लौं आधारशक्तिकमलासनाय नमः इति प्राङ्मुख उदङ्मुखो वा पद्मासनाद्यन्यतमेनासनेनोपविश्य, ऐं ग्लौं शिवादिश्रीगुरुभ्यो नमः, ऐं ग्लौं समस्तगुप्तप्रकटसिद्धयोगिनीचक्रश्रीपादुकाभ्यो नमः इति मूर्धनि बद्धाञ्जलिः

## श्रीवार्ताली ( वाराही )



पाथोरुहपीठगतां पाथोधरमेचकां कुटिलदंष्ट्रां ।
कपिलाक्षीत्रितयां घनकुचकुम्भां प्रणतवाञ्छितवदान्यां ॥
दक्षोर्ध्वतोऽरिखड्गौ मुसलमभितिं तदन्यतस्सद्वत् ।
शङ्खं खेटहलवरान् करैर्दधानां स्मरामि वार्तालीम् ॥

स्ववामदक्षपार्श्वयोः क्रमेण गुरुपादुकया श्रीगुरुं महागणपतिमन्त्रेण च गणपतिं प्रणम्य, ऐं ग्लौं ऐं ह्लः अस्त्राय फट्, इति मन्त्रेणावृत्तेनाङ्गुष्ठादि करतलान्तं कूर्परयोः देहे च क्रमेण न्यासव्यापके कृत्वा स्वस्य दैवतैक्यं भावयन्,

ऐं ग्लौं अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः।
ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रयक्रूरदृष्ट्यवलोकनपूर्वकं तालत्रयेण भौमान्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत्। तालत्रयं पूर्वमुक्तमेव।

**प्राणायामः**

अथ नमः इति अङ्गुष्ठमन्त्रमुच्चार्य अङ्कुशेन शिखां बद्ध्वा श्रीक्रमोक्तेन क्रमेण भूतशुद्धिं आत्मप्राणप्रतिष्ठाञ्च विधाय मूलेन प्राग्वत् विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य।

**द्वितारीन्यासः**

तेजोरूपदेवीमयं भावयन्नात्मानं स्वदेहे न्यासजालात्मकं वज्रकवचमामुञ्चेत्। तत्रादौ अं ऐं ग्लौं अं नमः शिरसि। आं ऐं ग्लौं आं नमः मुखवृत्ते इत्यादिरीत्या क्षान्तमातृकासम्पुटितमुक्तबीजद्वयं मातृकास्थानेषु न्यसेत्, इति द्वितारीन्यासः।

**करषडङ्गन्यासौ**

ऐं ग्लौं अन्धे अन्धिनि नमः अङ्गुष्ठाभ्याम् नमः,
२ रुन्धे रुन्धिनी नमः तर्जनीभ्याम् नमः,
२ जम्भे जम्भिनि नमो मध्यमाभ्यां नमः,
२ मोहे मोहिनी नमः अनामिकाभ्यां नमः
२ स्तम्भे स्तम्भिनि नमः कनिष्ठिकाभ्यां नमः,
इति पञ्चभिः मन्त्रैः, अङ्गुष्ठादिकनिष्ठान्तं न्यस्य,
ऐं ग्लौं ऐं नमो भगवति वार्तालि वर्तालि हृदयाय नमः,
२ वाराहि वाराहि शिरसे स्वाहा,
२ वराहमुखि वराहमुखि शिखायै वषट्,

२ अन्धे अन्धिनि नमः कवचाय हुम्,

२ रुन्धे रुन्धिनी नमः नेत्रत्रयाय वौषट्,

२ जम्भे जम्भिनि नमः अस्त्राय फट्,

इति मन्त्रैः हृदयादिषु न्यसेत्। नेह करन्यासेऽस्त्रमन्त्रः। तेन करतलन्यासो न भवति।

## अर्घ्यशोधनम्

ततः श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्ये आसादयेत्। अत्र चोभयोरप्यर्घ्ययोः प्रवेशरीत्या अन्तरन्तश्चतुरस्रादिमण्डलकरणम्—

२ अं आत्मतत्त्वाय आधारशक्तये वौषट्, इत्याधारस्थापनम्,

२ उं विद्यातत्त्वाय पद्मासनाय वौषट्, इति पात्रनिधानम्,

२ मं शिवतत्त्वाय सोममण्डलाय नमः, इति शुद्धजलापूरणम्,

ऐं ग्लौं ब्रह्माण्डखण्डसम्भूतमशेषरससम्भृतम्।
आपूरितं महापात्रं पीयूषरसमावह॥

इति क्षीरपूरणे मन्त्रान्तरं चोक्तम्, षडङ्गं, (चतुर्नवतिमन्त्राभिमन्त्रणाभावः,) मूलेन दशधा अभिमन्त्रणञ्च विशेषः। अथ विशेषार्घ्यबिन्दुभिः सपर्यासामग्रीं पावयित्वा।

## सप्तार्णमन्त्रपञ्चकन्यासः

अन्धे अन्धिनि नमः इत्यादीन् पञ्च मन्त्रान् उक्तबीजद्वयादिकान् शिरोवदनहृदयगुह्यपादेषु न्यस्य।

## अष्टखण्डन्यासः

मूलस्य खण्डैरष्टभिः वक्ष्यमाणेषु स्थानेषु न्यसेत्। यथा—

ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि इति आपादजानु,

२ अन्धे अन्धिनि नमः इत्याजानुकटि,

२ रुन्धे रुन्धिनि नमः इत्याकटिनाभि,

२ जम्भे जम्भिनि नमः इत्यानाभिहृदयम्,

२ मोहे मोहिनी नमः इत्याहृदयकण्ठम्,

२ स्तम्भे स्तम्भिनि नमः इत्याकण्ठभ्रूमध्यम्,

२ सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं नमः इत्याभ्रूमध्यललाटम्,

२ ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट् इत्याललाटब्रह्मरन्ध्रं, चेति।

### मातृकास्थानेषु मूलपदन्यासः

ततो मूलमन्त्रस्य द्विचत्वारिंशत्पदानि मातृकास्थानेषु न्यसेत्। यथा—

ऐ ग्लौं ऐं नमः शिरसि, ग्लौं मुखवृत्ते, ऐं नेत्रयोः, नमो कर्णयोः, भगवति नासापुटयोः, वार्तालि कपोलयोः, वार्तालि ओष्ठयोः, वाराहि दन्तपङ्क्त्योः, वाराहि ब्रह्मरन्ध्रे, वाराहमुखि मुखान्तः, वाराहमुखि दक्षदोर्मूले, अन्धे तन्मध्यसन्धौ, अन्धिनि तन्मणिबन्धे, नमो तदङ्गुलिमूले, रुन्धे तदङ्गुल्यग्रे, रुन्धिनि वामदोर्मूले, नमो तन्मध्यबन्धौ, जम्भे तन्मणिबन्धे, जम्भिनि तदङ्गुलिमूले, नमो तदङ्गुल्यग्रे, मोहे दक्षोरुमूले, मोहिनि तज्जानुनि, नमो तत्पादसन्धौ, स्तम्भे तदङ्गुलिमूले, स्तम्भिनि तदङ्गुल्यग्रे, नमो वामोरुमूले, सर्वदुष्ट-प्रदुष्टानां वामजानुनि, सर्वेषां तत्पादसन्धौ, सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं तदङ्गुलिमूले, कुरु तदङ्गुल्यग्रे, कुरु पार्श्वयोः, शीघ्रं पृष्ठे, वश्यं नाभौ, ऐं जठरे, ग्लौं हृदि, ठः दक्षकक्षे, ठः अपरगले, ठः वामकक्षे, ठः हृदादिहस्तयोः, हुं हृदादिपादयोः, अस्त्राय हृदादिपाय्वन्तं, ऐ ग्लौं फट् नमः हृदादिमूर्धान्तम्, इति।

### तत्त्वाष्टकन्यासः

ततः ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि इत्यादिरीत्या प्रागुक्तानाम् अष्टानां खण्डानां प्रत्येकमन्त्र क्रमेण ह्लां शर्वाय क्षितितत्त्वाधिपतये नमः, ह्लीं भवाय अम्बुतत्त्वाधिपतये नमः, ह्लूं रुद्राय वह्नितत्त्वाधिपतये नमः, ह्लैं उग्राय वायुतत्त्वाधिपतये नमः, ह्लौं ईशानाय भानुतत्त्वाधिपतये नमः, सों महादेवाय सोमतत्त्वाधि-

पतये नमः, ह्रं पशुपतये यजमानतत्त्वाधिपतये नमः, भौं भीमाय आकाश-तत्त्वाधिपतये नमः, इति उक्तेषु पादादिजान्वित्यादिष्वष्टसु स्थानेषु तत्त्वाष्टकं न्यसेत् ।

## यन्त्रप्राणप्रतिष्ठा

अथ मूलेन व्यापकत्रयं न्यस्य स्वपुरतः श्वेतपटपट्टदुकूलान्यतमे लिखिते लेखिते वा सुवर्णरजतताम्रचन्दनपीठादौ लिखिते उत्कीर्णे वा दृष्टिमनोहरे भूपुरत्रयसहस्रपत्रशतपत्राष्टपत्रषडरपञ्चारत्र्यस्रबिन्दुमये चक्रे सुकुमाञ्जलिं विकीर्य,

ऐं ग्लौं वार्तालियन्त्रस्य प्राणाः इह प्राणाः, ऐं ग्लौं वार्तालियन्त्रस्य जीव इह स्थितः, ऐं ग्लौं वार्तालियन्त्रस्य सर्वेन्द्रियाणि, ऐं ग्लौं वार्तालियन्त्रस्य वाङ्मनःप्राणाः इहायान्तु स्वाहा, इति यन्त्रप्राणप्रतिष्ठां विदध्यात् ।

## पीठपूजा

'अर्चने 'द्वितारी' 'नमः' इति सर्वत्र योजनम्'

ऐं ग्लौं स्वर्णप्रकाराय नमः, सुराब्धये, वराहद्वीपाय, वराहपीठाय, आं आधारशक्तये, कूं कूर्माय, कं कन्दाय, अं अनन्तनालाय नमः, इति पीठस्य मध्ये ।

ऐं ग्लौं ऋं धर्माय नमः, ॠं ज्ञानाय, लृं वैराग्याय, ॡं ऐश्वर्याय नमः इति तस्य आग्नेयादिदिक्षु ।

ऐं ग्लौं ऋं अधर्माय नमः, ॠं अज्ञानाय, ॡं अवैराग्याय, लृं अनैश्वर्याय नमः, इति प्रागाद्यासु दिक्षु चाभ्यर्च्य,

ऐं ग्लौं त्र्यरस्वारषडरदलाष्टकशतपत्रसहस्रारपद्मासनाय नमः, इति चक्रमनुना चक्रमिष्ट्वा,

ऐं ग्लौं वह्निमण्डलाय नमः, सूर्यमण्डलाय, सोममण्डलाय, सं तत्त्वाय, रं रजसे, तं तमसे, आं आत्मने, अं अन्तरात्मने, पं परमात्मने, ह्रीं ज्ञानात्मने नमः इति च तत्रैव विरवस्येत् ।

(स्वर्णप्राकाराय नमः इत्याद्याः ह्रीं ज्ञानात्मने नमः इत्यन्ताः एते सप्तविंशतिः, पीठमनवो ज्ञेयाः) ।

ततः २ ह्रीं प्रेतपद्मासनाय सदाशिवाय नमः, इति पुष्पैः बिन्दौ देव्यासनमभिपूज्य ।

## मूर्तिकल्पनम्

तत्र २ ल्ह षा ई वराहमूर्तये ठः ठः ठः ठः हुँ फट् ग्लौं ऐं इति मूर्तिकरिण्या विद्यया चक्रे देव्या मूर्ति सङ्कल्प्य ।

## देवीध्यानम्

हृदि देवीं ध्यायेत् । यथा—

पाथोरुहपीठगतां पाथोधरमेचकां कुटिलदंष्ट्राम् ।
कपिलाक्षित्रितयां घनकुचकुम्भां प्रणतवाञ्छितवदान्याम् ॥
दक्षोर्ध्वतोऽरिखड्गौ मुसलमभीतिं तदन्यतस्तद्वत् ।
शङ्खं खेटहलवरान् करैर्दधाना स्मरामि वार्तालीम् ॥

## देव्याः षोडशोपचारपूजा

अथ वक्ष्यमाणेन प्रकारेण देव्यै मनसा पञ्चोपचारानर्पयित्वा, भक्तानुग्रहात्तेजोरूपेण परिणतां ब्रह्मरन्ध्रं प्राप्य, वहन्नासापुटद्वारा निर्गतां कुसुमगर्भिते निजाञ्जलौ सन्निहितां तां मूर्तौ मूलविद्यया आवाह्य, आवाहिता भवेत्यादिरीत्या तत्तन्मुद्राप्रदर्शनपूर्वकम् आवाहन संस्थापन-सन्निधापन-सन्निरोधन-सम्मुखीकरणा-वगुण्ठानादीनि विधाय, वन्दनधेनुयोनिमुद्राश्च प्रदर्शयेत् । ततः ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि हृदयाय नमः इत्यादिकान् प्रागुक्तान् षडङ्गमन्त्रान् २ अन्धे अन्धिनि नमः इत्यादिकान् पञ्चाङ्गमन्त्रांश्च न्यासोक्तभङ्ग्या देव्याः तत्तदङ्गे कुसुमेन विन्यस्य, ऐं ग्लौं वाराह्यै पाद्यं कल्पयामि नमः इत्यादिरीत्या देव्यै पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनच्छत्रचामरयुगलदर्पणनैवेद्यपानीयताम्बूलाख्यान् षोडशोपचारान् कृत्वा, नैवेद्याङ्गत्वेन पूर्वोत्तरापोशनकरप्रक्षालनगण्डूषाचमनीयानि च प्रदद्यात् । नैवेद्ये त्रिकोणवृत्तचतुरस्रमण्डलकरणम्, मूलेन प्रोक्षणम्, वं इति धेनुमुद्रया चामृतीकरणं मूलेन सप्तवारमभिमन्त्रणं, प्राणादिमुद्राप्रदर्शनञ्च विधेयम् ।

## देवीतर्पणम्

अथ मूलान्ते वार्तालिश्रीपादुकां पूजयामि तर्पयामि नमः इति वामकरतत्त्वमुद्रासन्दष्टद्वितीयशकलगृहीतक्षीरबिन्दुभिस्सह दक्षकरोपात्तकुसुमक्षेपैः

देवीं दशवारं सन्तर्प्य, पूर्वोक्तानां षडङ्गमन्त्रणामन्ते—हृदयशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, शिरःशक्ति श्रीपादुकां पूययामि तर्पयामि नमः, शिखाशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, कवचशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, नेत्र शक्तिश्रीपादुकां पूजयामि तर्पयामि नमः, अस्त्रशक्तिश्रीपादुकां पूजयामि तर्पयामि नमः इति क्रमेण देव्यङ्गे अग्निशासुरवायुकोणेषु मौलौ प्रागादिदिक्षु च षडङ्गानि सम्पूज्य ।

## ओघत्रययजनम्

पृष्ठतः प्रागपवर्गरेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं यजेत् । यथा—

ऐं ग्लौं परप्रकाशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमेशानन्द, परशिवानन्द, (परसिद्धानन्द इति पाठान्तरं) कामेश्वर्यम्बानन्द, मोक्षानन्द, कामानन्द, अमृतानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः । इति दिव्यौघः ।

ऐं ग्लौं ईशानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, तत्पुरुषानन्द, अघोरानन्द, वामदेवानन्द, सद्योजातानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति सिद्धौघः ।

ऐं ग्लौं पश्चोत्तरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, परमानन्द, सर्वज्ञानन्द, सिद्धानन्द, गोविन्दानन्द, शङ्करानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, इति मानवौघः ।

## आवरणार्चनम्

अङ्गाद्यावरणान्तानामर्चनप्रकारस्तु पूर्वोक्त एव ।

त्र्यस्रे देव्यग्रकोणमारेभ्य प्रादक्षिण्यक्रमेण—

ऐं ग्लौं जम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः, मोहिनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः इति प्रथावरणम् ।

पश्चारे—

ऐं ग्लौं अन्धिनीश्रीपादुकां पूजयामि तर्पयामि नमः, रून्धिनि, जम्भिनी, मोहनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः इति द्वितीयावरणम् ।

षट्कोणस्य कोणमूलेषु—

ऐं ग्लौं आ क्षा ई ब्राह्मीश्रीपादुकां पूजयामि तर्पयामि नमः, ई ला ई माहेश्वरी, ऊ हा ई कौमारी, ॠ सा ई वैष्णवी, ऐ शा ई इन्द्राणी, औ वा ई चामुण्डाश्रीपादुकां पूजयामि तर्पयामि नमः इति सम्पूज्य तस्यैव कोणाग्रेषु मध्ये च—

ऐं ग्लौं य म र यूं यां यीं यूं यैं यौं यः याकिनी जम्भय जम्भय मम सर्वशत्रूणां त्वग्धातुं गृह्ण गृह्ण अणिमादि वशं कुरु कुरु स्वाहा याकिनी श्रीपादुकां पूजयामि तर्पयामि नमः।

२ र म र यूं रां रीं रूं रैं रौं रः राकिनी जम्भय जम्भय मम सर्वशत्रूणां रक्तधातुं पिव पिव अणिमादि वशं कुरु कुरु स्वाहा राकिणी श्रीपादुकां पूजयामि तर्पयामि नमः।

२ ल म र यूं लां लीं लूं लैं लौं लः लाकिनी जम्भय जम्भय मम सर्वशत्रूणां मांसधातुं भक्षय-भक्षय अणिमादि वशं कुरु कुरु स्वाहा लाकिनी-श्रीपादुकां पूजयामि तर्पयामि नमः।

२ ड म र यूं डां डीं डूं डें डौं डः डाकिनी जम्भय जम्भय मम सर्व शत्रूणां मेदोधातुं ग्रस ग्रस अणिमादि वशं कुरु कुरु स्वाहा डाकिनी श्रीपादुकां पूजयामि तर्पयामि नमः।

२ क म र यूं कां कीं कूं कैं कौं कः काकिनी जम्भय जम्भय मम सर्वशत्रूणां अस्थिधातुं भञ्जय भञ्जय अणिमादि वशं कुरु कुरु स्वाहा काकिनीश्रीपादुकां पूजयामि तर्पयामि नमः।

२ स म र यूं सां सीं सूं सैं सौं सः साकिनी जम्भय जम्भय मम सर्वशत्रूणां मज्जाधातुं गृह्ण गृह्ण अणिमादि वशं कुरु कुरु स्वाहा साकिनी-श्रीपादुकां पूजयामि तर्पयामि नमः।

२ ह म र यूं हां हीं हुं हैं हौं हः हाकिनी जम्भय जम्भय मम सर्वशत्रूणां शुक्रधातुं पिव पिव अणिमादि वशं कुरु कुरु स्वाहा हाकिनी श्रीपादुकां पूजयामि तर्पयामि नमः इति धातुनाथानिष्ट्वा,

षडरस्य दक्षवामपार्श्वयोः क्रमेण—

ऐ ग्लौं क्रोधिनीश्रीपादुकां पूजयामि तर्पयामि नमः ।

२ स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः । तत्रैव—

२ स्तम्भनमुसलायुधाय नमः । २ आकर्षणहलायुधाय नमः ।

षडराद् वहिः देव्याः पुरतः—

ऐं ग्लौं क्षौं क्रौं चण्डोच्चण्डाय नमः, इति तृतीयावरणम् ।

अष्टदले—

ऐं ग्लौं वार्तालीश्रीपादुकां पूजयामि तर्पयामि नमः, वाराही, वराहमुखी, अन्धिनी, रुन्धिनी, जम्भिनी, मोहिनी, स्तम्भिनीश्रीपादुकां पूजयामि तर्पयामि नमः ।

तद्वहिः पुरतो देव्याः—

ऐं ग्लौं महामहिषाय देवीवाहनाय नमः । इति चतुर्थावरणम् ।

शतपत्रे देवीपुरतोऽष्टत्रिंशद्दलसन्धिषु—

ऐं ग्लौं जम्भिन्यै नमः, इन्द्राय, अप्सरोभ्यः, सिद्धेभ्यः, द्वादशादित्येभ्यः, अग्नये, साध्येभ्यः, विश्वेभ्यो देवेभ्यः, विश्वकर्मणे, यमाय, मातृभ्यः, रुद्रपरिचारकेभ्यः, रुद्रेभ्यः, मोहिन्यै, निर्ऋतये, राक्षसेभ्यः, मित्रेभ्यः, गन्धर्वेभ्यः, भूतगणेभ्यः, वरुणाय, वसुभ्यः, विद्याधरेभ्यः, किन्नरेभ्यः, वायवे, स्तम्भिन्यै, चित्ररथाय, तुम्बुरवे, नारदाय, यक्षेभ्यः, सोमाय, कुवेराय, देवेभ्यः, विष्णवे, ईशानाय, ब्रह्मणे, अश्विभ्यां, धन्वन्तरये, विनायकेभ्यो नमः । तद्वहिः—

ऐं ग्लौं रौं क्षौं क्षेत्रपालय नमः । सिंहवराय देवीवाहनाय नमः ।

तद्वहिः—

ऐं ग्लौं महाकृष्णाय मृगराजाय देवीवाहनाय नमः । इति पञ्चमावरणम् ।

सहस्रारे अष्टधा विभक्ते प्रतिपञ्चविंशत्युत्तरशतदलं प्राग्वत् क्रमेण—

ऐं ग्लौं ऐरावताय नमः, पुण्डरीकाय, वामनाय, कुमुदाय, अञ्जनाय, पुष्पदन्ताय, सार्वभौमाय, सुप्रतीकाय नमः ।

एते दिग्गजाः सुराग्रेर्बहिर्वा प्रागाद्यासु यष्टव्याः। बाह्यप्राकारस्याष्टासु प्रागाद्यासु दिक्षु अध उर्ध्वं च क्रमेण प्राग्वत्—

ऐं ग्लौं क्ष्लौं हेतुकभैरवक्षेत्रपालाय नमः। हेतुकभैरवश्रीपादुकां पूजयामि तर्पयामि नमः।

ऐं ग्लौं त्रिपुरान्तकभैरवक्षेत्रपालाय नमः। त्रिपुरान्तकभैरवश्री०

२ अग्निभैरवक्षेत्रपालाय नमः। अग्निभैरवीश्री०

२ यमजिह्वभैरवक्षेत्रपालाय नमः। यमजिह्वभैरवश्री०

२ एकपादभैरवक्षेत्रपालाय नमः। एकपादभैरवश्री०

२ कालभैरवक्षेत्रपालाय नमः। कालभैरवश्री०

२ करालभैरवक्षेत्रपालाय नमः। करालभैरवश्री०

२ भीमरूपभैरवक्षेत्रपालाय नमः। भीमरूपभैरवश्री०

२ हाटकेशभैरवक्षेत्रपालाय नमः। हाटकेशभैरवश्री०

२ अचलभैरवक्षेत्रपालाय नमः। अचलभैरवश्रीपादुकां पू० तर्पयामि नमः इति षष्ठावरणम्।

(सर्वा अप्यावरणदेवताः देव्यभिमुखासीनाः, स्वयं च तत्तदभिमुखः पूजयामीति भावयेत्।)

### देव्याः पुनः पूजाविबलिदानान्तं

इत्थं षडावरणीमभ्यर्च्य पुनर्देवीं त्रिवारं सन्तर्प्य पुनः षोडशभिरुपचारैरुपचर्य श्रीक्रमोक्तेन विधिना होमं तदन्ते बलिदानञ्च कुर्यात्।

होमाकरणपक्षे—देव्याः पुरतो वामभागे हस्तमात्रं सामान्योदकेनोपलिप्य त्रिकोणवृत्तचतुरस्रात्मकं मण्डलं परिकल्प्य रक्तान्नहरिद्रान्नसक्तुशर्कराहेतुफलत्रयमाक्षिकमुद्गत्रयमाषचूर्णदधिक्षीरघृतैः शुद्धौदनं सम्मर्द्य, कुक्कुटाण्डप्रमाणान् दशपिण्डान् कपित्थफलमानञ्च एकं पिण्डं विधाय तत्र निधाय तत्समीपे सादिमद्वितीयतृतीयं चषकं च निधाय, ऐं ग्लौं क्ष्लौं हेतुक भैरव क्षेत्रपालाय नमः इत्यादिभिः पूर्वोक्तैः दशभिः मन्त्रैः हेतुकादिभ्योऽचलान्तेभ्यो दशभ्यः क्रमेण दश पिण्डान् दश दिक्षु दत्वा मध्ये स्थूलमेकं

पिण्डं चषकं च 'ऐं ग्लौं क्षौं क्रौं चण्डोच्चण्डाय नमः' इति मन्त्रेण तस्मै दद्यात्।

फलत्रयम्—त्रिफला। मुद्गत्रयं—हरितं कृष्णं पीतम्।

अथ पाणिं प्रक्षाल्य, देव्यै पुष्पाञ्जलित्रयं दत्वा प्रदक्षिणनमस्कारोत्तरं जपेत्।

### वाराहीमन्त्रजपः

अस्य श्रीवाराहीमहामन्त्रस्य ब्रह्मण ऋषये नमः, इति शिरसि, गायत्र्यै छन्दसे नमः इति मुखे, वाराह्यै देवतायै नमः इति हृदये, ऐं ग्लौं वीजाय नमः इति गुह्ये, फट् शक्तये नमः इति पादयोः, ठः ठः ठः ठः कीलकाय नमः इति नाभौ, मम सर्वाभीष्टसिद्ध्यर्थे विनियोगाय नमः इति करसम्पुटे च विन्यस्य, मूलेन त्रिव्यापकं कृत्वा, अन्धे अन्धिनि नमः इत्यादिभिः पञ्चभिः मन्त्रैः पूर्वोक्तैः अङ्गुष्ठादिकनिष्ठान्तम्, २ ऐं नमो भगवति वार्तालि वार्तालि हृदयाय नमः इत्यादिभिश्च हृदयादिषु न्यासं विधाय, उक्तप्रकारेण ध्यात्वा, मनसा २ श्रीवाराह्यै लं पृथिव्यात्मकं गन्धं कल्पयामि नमः, २ श्रीवाराह्यै हं आकाशात्मकं पुष्पं कल्पयामि नमः, २ श्रीवाराह्यै यं वाय्वात्मकं धूपं कल्पयामि नमः, २ श्रीवाराह्यै रं अग्न्यात्मकं दीपं कल्पयामि नमः, २ श्रीवाराह्यै वं अमृतात्मकं नैवेद्यं कल्पयामि नमः, नैवेद्याङ्गत्वेन च २ श्रीवाराह्यै सं सर्वात्मकं ताम्बूलं कल्पयामि नमः इति पञ्चोपचारानार्चयं, विघ्नदेव्यङ्गोपाङ्गप्रत्यङ्गसहितं मूलमन्त्रमष्टोत्तरशतवारान् यथाशक्ति वा, श्रीक्रमोक्तेन विधिना जपेत्।

स्तं स्तम्भिन्यै नमः इति वाराह्या विघ्नदेवीमन्त्रः। एतं जपारम्भे त्रिवारं जपेत्। मूलमन्त्रश्च न्यासोक्ताष्टखण्डसमष्टिरूपः। लं वाराही लं उन्मत्तभैरवीपादुकाभ्यां नमः, इति वाराह्यङ्गं लघुवाराही। ॐ ह्रीं नमो वाराहि घोरे स्वप्नं ठः ठः स्वाहा इति तदुपाङ्गं स्वप्नवाराही। ऐं नमो भगवति महामाये पशुजनमनश्चक्षुस्तिरस्करणं कुरु कुरु हुँ फट् स्वाहा, इति तत्प्रत्यङ्गं तिरस्करिणी। एतान् त्रीन् मन्त्रान् मूलजपान्ते तद्दशांशं जपेत्। पुनः न्यासध्यानादि कृत्वा जपं निवेद्य स्तुवीत।

## वाराहीस्तोत्रम्

कुवलयनिभा कौशेयार्धोरुका मुकुटोज्जवला
हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी ।
कपिलनयना मध्ये क्षामा कठोरघनस्तनी
जयति जगतां मातः सा ते वराहमुखी तनुः ॥१॥

तरति विपदो घोरा दूरात्परिह्रियते भय-
स्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया ।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं
वशयति जगत्सर्वं वाराहि यस्त्वयि भक्तिमान् ॥२॥

स्तिमितगतयस्सीदद्वाचः परिच्युतहेतयः
क्षुभितहृदयास्सद्यो नश्यद्दृशो गलितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषाः
भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ॥३॥

किसलयमृदुहस्तः क्लिश्येत कन्दुकलीलया
भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से हस्ते हलं समयद्रुहां
हरसि च तदाघातैः प्राणानहो तव साहसम् ॥४॥

जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयोः
मृदुभुजलतामन्दाक्षेपप्रणलितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवै
रुपशमयतां शत्रून् सर्वानुभे मम दैवते ॥५॥

हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां
रुधिरमदिरासक्तः प्राणोहपारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुखो
भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः ॥६॥

क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परै
श्चतुरुदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ।
जननि कथमुत्तिष्ठेत् पातालसर्पविलाविला
तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ॥७॥

तमसि बहुले शून्याटव्यां पिशाचनिशाचार-
प्रथमकलहे चोरव्याघ्रोरगद्विपसङ्कटे ।
क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतोभयं
सकृदपि मुखे मातस्त्वन्नाम सन्निहितं यदि ॥८॥

विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं
सकलफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां
सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम् ॥९॥

इत्यनुग्रहाष्टकम्

देवि क्रोडमुखि त्वदङ्घ्रिकमलद्वन्द्वानुषक्तात्मने
मह्यं द्रुह्यति यो महेशि मनसा कायेन वाचा नरः ।
तस्याद्य त्वदयोग्रनिष्ठुरहलाघातप्रभूतव्यथा
पर्यस्यन्मनसो भवन्तु वपुषः प्राणाः प्रयाणोन्मुखाः ॥१॥

देवि त्वत्पदपद्मभक्तिविभवप्रक्षीणदुष्कर्मणि
प्रादुर्भूतनृशंसभावमलिनां वृत्तिं विधत्से मयि ।
यो देही भुवने तदीयहृदयान्निर्गतैर्लोहितैः
सद्यः पूरयसे कराब्जचषकं वाञ्छाफलैर्मामपि ॥२॥

चण्डोचण्डमखण्डदुष्टहृदयप्रोक्षिप्तरक्तच्छटा—
हालापानमदाट्टहासजनिताटोपप्रतापोत्कटम् ।
मातर्मत्परिपन्थिनामपहृतैः प्राणैस्त्वदङ्घ्रिद्वय
ध्यानोद्दामरवैर्भवोदयवशात् सन्तर्पयामि क्षणात् ॥३॥

वाराहि व्यथमानमानसगलत्सत्त्वं त्वदाज्ञाबलात्
सीदद्धैर्यमपाकृताद्धचवसितं प्राप्तालिखार्थाहतिम् ।
क्रन्दद्बन्धुजनं कलङ्कितकुलं कण्ठे व्रणोद्यत्कृमिं
पश्यामि प्रतिपक्षमाशु सततं श्रान्तं लुठन्तं पुनः ॥४॥

वाराहि त्वमशेषजन्तुषु पुनः प्राणात्मिका स्पन्दसे
शक्तिव्याप्चराचरामिह खलु त्वामेतदभ्यर्थये ।
त्वत्पादाम्बुजसङ्गिनो मम सकृत् पापं चिकीर्षन्ति ये
तेषां मा कुरु शङ्करप्रियतमे देहान्तरावस्थितिम् ॥५॥

विश्वाधीश्वरवल्लभे विजयसे या त्वं नियत्यात्मिके
भूतानां पुरुषायुषावधिकरी पाकप्रदा कर्मणाम् ।
तां याचे भवतीं किमप्यवितथं योऽस्मद्विरोधी जन-
स्तस्यायुर्मम वाञ्छितावधि भवेन्मातस्तवैवाज्ञया ॥६॥

मातस्सम्यगुपासितुं जडमतिस्त्वां नाद्य शक्नोम्यहं
यद्यप्यञ्चितदेशिकाङ्घ्रिकमलानुक्रोशपात्रस्य मे ।
जन्तुः कश्चन चिन्तयत्यकुशलं यस्तस्य तद्वैशसं
भूयाद्देवि विरोधिनो मम च ते श्रेयः पदासङ्गिनः ॥७॥

श्यामां तामरसारुणत्रिनयनां सोमार्धचूडां जग-
त्त्राणव्यग्रहलामुदग्रमुसलामत्रस्तमुद्रावतीम् ।
ये त्वां रक्तकपालिनीं शिववरारोहे वराहाननां
भावे सन्दधते कथं क्षणमपि प्राणन्ति तेषां द्विषः ॥८॥

इति निग्रहाष्टकम्

## वृन्दाराधनं, गुरुसन्तोषणं, शक्तिबटुकपूजा च

अथ योगिनीवीरयुग्मसमुदायात्मकं वृन्दं गन्धादिभिराराध्य, यथाविभवं श्रीगुरुं सन्तोष्य, सर्वलक्षणसम्पन्नाः तिस्रः शक्तीर्बटुकञ्चाहूयाभ्यज्य, स्नपयित्वा, मध्ये वार्तालीवुद्धयैकां क्रोधिनीस्तम्भिनीबुद्धया च द्वे पार्श्वयोरुपवेश्य, चण्डोच्चण्डधिया बटुकं चाग्रे समुपवेश्य, द्वितारी नमः सम्पुटितैः

तत्तन्नाममन्त्रैः गन्धादिभिः क्षीरादिभिश्च सर्वैः द्रव्यैः सन्तोष्य, मम श्री-वार्तालीमन्त्रसिद्धिः भूयादिति शक्तीः प्रार्थयेत् । ताश्च प्रसीदन्त्वधिदेवता इति प्रतिब्रूयुः ।

### हविःप्रतिपत्तिः

अथ श्रीक्रमोक्तक्रमेण हविः प्रतिपत्तिकर्मादिविशेषार्घ्यविसर्जनान्तं शेषं निर्वर्तयेत् । हविः प्रतिपत्तौ मूलेन तत्त्वत्रयशोधनमेवेति विशेषः ।

### मन्त्रसाधनम्

एवं नित्यक्रममाचरन् श्यामाक्रमोक्तेन पुरश्चरणप्रकारेण प्रत्यहं सहस्र-संख्यया, लक्षसंख्याकं प्रकृते कलियुगत्वाच्चतुर्गुणितं जपं पुरश्चरणम् कृत्वा तद्दशांशं नारिकेलोदकैः सन्तर्प्य, तद्दशांशं तापिच्छकुसुमैः तिलैः चुलुकमितैः शतसंख्याकैर्वा हरिद्राखण्डैर्वा तन्त्रान्तरोक्तैः त्रिमध्वक्तैः हेतुमिश्रैश्च जुहुयात् । इह पञ्चधोपचारात् प्राक् महाव्याहृत्यादिषु च आज्येनैव होमः । इतरेषु तापिच्छादिना । एवं सिद्धमन्त्रः स्वतन्त्रोपास्तौ श्रीक्रमोक्तेन क्रमेण नैमित्तिकार्चनरतः सत्यां कामनायां पूर्वोक्तेनैव क्रमेण तत्तत्काम्यानुगुणं होमं कृत्वा सफलमनोरथ आज्ञासिद्धः सुखी विहरेत् । इति शिवम् ॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे वाराहीक्रमः समाप्तः ।

मातर्वाराहि जाते तवचरणसरोजार्चनं वा जपं वा
कर्तुं शक्तो न चाहं तदपि च सदये मय्यतस्त्वां हि याचे ।
यस्त्वां दंष्ट्राशिताग्रां त्रिनयनलसितां चारुभूदारवक्त्रां
मूर्ति चित्ते विधत्ते तदरिगणविनाशोऽस्तु तस्मिन् क्षणे वै ।

———

## परा-क्रमः

### कल्यकृत्यमाह्निकञ्च

श्रीमान् साधकः कल्ये प्रवुद्धः शयन एव स्थितः श्रोत्राचमनभस्मधारणे विधाय, श्रीक्रमोक्तेन क्रमेण श्रीगुरोर्ध्यानं वक्ष्यमाणया मूलपूर्विकया सामान्यपादुकया सुमुखादिमुद्राप्रदर्शनपूर्वकं वन्दनञ्च विधाय, वक्षमाणया रीत्या प्राणानायम्य ब्रह्मरन्ध्रसम्वन्धिनि सहस्रदलकमले सुखासीनायाः वक्ष्यमाणध्यानोक्तमूर्त्त्याः शक्तिबीजाभिन्नायाः यशोऽम्वायाः चरणयुगलविगलदमृतरसविसरपरिप्लुतमात्मानं ध्यात्वा मूलं मनसा दशवारमावर्त्त्य, वह्न्नाडी पार्श्वपादमुत्थाय, निर्वर्तितावश्यकः उक्तया भङ्ग्या विहितदन्तधावनादिस्नानञ्च शुचिवासो वसानः विधृतपुण्ड्रः सर्वेण मूलेन त्रिराचम्म द्विः परिमृज्य सकृदुपस्पृश्य चक्षुषी नासिके श्रोत्रे अंसे नाभिं हृदयं शिरश्चावमृशेत् ।

### यागमन्दिरप्रवेशः

एवं त्रिराचम्य, यागमन्दिरमासाद्य, द्वारस्थण्डिलं गोमयेनोपलिप्य, यागगृहञ्च रङ्गवलीपुष्पमालिकावितानादिभिश्चालङ्कृत्य द्वारस्य दक्षवामशाखयोः उर्ध्वभागे च क्रमेण—

सौः भद्रकाल्यै नमः, भैरवाय, लम्बोदराय नमः, इति तिस्रो द्वारदेवताः सम्पूज्य, अन्तः प्रविष्टः सौः रक्तद्वादशशक्तियुक्ताय दीपनाथाय नमः, इति पुष्पाञ्जलिना भूमौ दीपनाथमिष्ट्वा, सपर्यासामग्रीं स्वदक्षिणभागे निधाय, प्रज्ज्वालितदीपो गन्धमाल्यादिभिरलङ्कृतात्मा जातपत्रफलैलालवङ्गकर्पूराढ्यपञ्चतिक्तेनामोदितवदनः प्रसन्नमनाः स्वास्तीर्णे उर्णामृदुनि शुचिनि मूलेन द्वादशवारमभिमन्त्रिते सकृत्प्रोक्षिते चासने सौः आधारशक्तिकमलासनाय नमः, इति प्राङ्मुख उदङ्मुखो वा पद्मस्वतिकाद्यन्यतमेनासनेनोपविश्य सौः समस्तगुप्तप्रकटसिद्धयोगिनीचक्रदेवताश्रीपादुकाभ्यो नमः, इति मूर्धनि वद्धाञ्जलिः सौः ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें ह स क्ष म ल व र यूं स ह क्ष म ल व र यीं ह्सौः स्हौः अमुकाम्बासहितामुकानन्दनाथश्रीगुरुपादुकां

पूजयामीति मन्त्रेण मस्तके निजदेशिकमभिवन्द्य गं गणपतये, नमः इति बद्धाञ्जलिः ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते गच्छन्तु शिवाज्ञया ॥

इति मन्त्रं सकृदुच्चार्य युगपद्वामपार्ष्णिभूतलत्रिराघातकरास्फोटत्रितय-क्रूरदृष्ट्यवलोनपूर्वकं तालत्रयेण भौमन्तरिक्षदिव्यान् भेदावभासकान् विघ्नानुत्सारयेत् ।

## प्राणायामः

अथ श्रीक्रमोक्तेन विधिना भूतशुद्धिमात्मप्राणप्रतिष्ठाञ्च विधाय सौः वर्णपूर्वकं मातृकावर्णैः श्रीक्रमोक्तेन क्रमेण बहिर्मातृकान्यासं कृत्वा षोडशवारमावृत्तेन मूलेन पूरकं, चतुःषष्टिवारमावृतेन कुम्भकं द्वात्रिंशद्वारमावृत्तेन रेचकम्, इति विंशतिधा षोडशधा दशधा सप्तधा त्रिधा वा प्राणानायम्य ।

## अङ्गन्यासः

तेजोरूपदेवीमयं भावयन्नात्मनं मुहुरावृत्तेन सौः नमः इति नमोऽन्तेन मूलेन शिरोमुखहृन्मूलाधारेषु न्यासं विधाय सर्वाङ्गे च व्यापकं कृत्वा, सौः स् हृदयाय नमः सौः औ शिरसे स्वाहा सौः औः शिखायै वषट् सौः स् कवचाय हुम् सौः औ नेत्रत्रयाय वौषट् सौः औः अस्त्राय फट् इति मूलमन्त्रावयवैर्द्विरावृत्तैः वर्णषडङ्गं सर्वेण मूलेन षड्वारमावृत्तेन मन्त्रषडङ्गञ्च कुर्यात् । इह मूलमन्त्रस्य तृतीयोऽवयवः केवलो विसर्गो न त्वकारविशिष्ट च ज्ञेयम् ।

## चिदग्नौ सर्वतत्त्वविलापनम्

अथ काकचञ्चूपुटाकृतिना मुखेन बाह्यमनिलमन्तराकृष्य संस्तभ्य मूलं सप्तविंशतिवारमावर्त्य वक्ष्यमाणक्षित्यादिशिवान्तषट्त्रिंशतत्त्वाकं वेद्यं नाभौ मुद्रितं विभाव्य पुनः प्रोक्तवारं मूलं जपित्वा 'नमः' इति शिखाबन्धोत्तरं पूर्ववद् अनिलमापूर्य तेन सर्वकारणचिद्रूपमग्निमुद्दीप्य तत्र प्राङ्मुद्रितस्य वेद्यस्य विलयनं भावयित्वा ।

## अर्घ्यशोधनम्

श्रीक्रमोक्तेन क्रमेण सामान्यविशेषार्घ्यौ आसादयेत् । अत्र चोभयोरप्यर्घ्ययोः प्रवेशरीत्या अन्तरन्तश्चतुरस्रादिबिन्द्वन्तमण्डलकरणम् अं आत्म-

तत्त्वाय आधारशक्त्यै वौषडित्याधारस्थापनम्, उं विद्यातत्त्वाय पद्मासनाय वौषडिति पात्रनिधानम्, मं शिवतत्त्वाय सोममण्डलाय नमः इति शुद्ध-सलिलापूरणम् ।

ब्रह्माण्डखण्डसम्भूतमशेषरससंभृतम् ।
आपूरितमहापात्रं पीयूषरसमावह ॥

इति क्षीरपूरणम् हृदयशक्तिश्रीपादुकां पूजयामीत्याद्यस्त्रान्तं प्रागुक्त-षडङ्गद्वयम् मूलेन दशधा अभिमन्त्रणम् चतुर्नवतिमन्त्राभिमन्त्रणाभावश्च विशेषः । ततो विशेषार्घ्यबिन्दुभिः वरिवस्या वस्तूनि सम्प्रोक्ष्य ।

तत्त्वकदम्बस्य हृत्पद्मस्थापनम्

पूर्वं नाभौ मुद्रयित्वा तप्तायोद्रवमिव चिदग्नौ विलापितं षट् त्रिंशत्तत्त्व-कदम्बरूपं वेद्यं हृत्सरोजमानीय स्थापयेत् ।

पराचक्रनिर्माणम्

अथ कुसुमक्षेपैः मूलपूर्वकैः वक्ष्यमाणैः मन्त्रैः परास्बायाश्चक्ररूपमासनं निर्मिमीत । यथा—

सौः पृथ्वीयोगपीठाय नमः अप् तेज वायु आकाश गन्ध रस रूप स्पर्श शब्द उपस्थ वायु पाद पाणि वाक् घ्राण जिह्वा चक्षुः त्वक् श्रोत्र अहङ्कार बुद्धि मनः प्रकृति पुरुष नियति काल अविद्या कला राग माया शुद्धविद्या ईश्वर सदाशिव शक्ति शिवयोगपीठाय नमः इत्येवं पराचक्रं निर्माय ।

चक्रे देव्याः पूजा

ब्रह्मरन्ध्रे— अकलङ्कशशाङ्काभा त्र्यक्षा चन्द्रकलावती ।
मुद्रापुस्तलसद्बाहा पातु मां परमा कला ।

इति ध्यातां सादाख्यचन्द्रकलारूपां श्रीपराम्बां मूलेन हृदयगतं परा-चक्रे आवाह्य मूलान्ते श्रीपराम्बा आवाहिता भव इत्यादिरीत्या तत्तन्मुद्रा-विधानपूर्वकं आवाहनाद्यवगुण्ठनान्तं कृत्वा वन्दनधेनुयोनिमुद्राः प्रदर्श्य मूलेन पुनः पुनरावृतेन श्रीपरादेव्यै पाद्यं कल्पयामि नमः इत्यादिरित्या पाद्यार्घ्याचमनीयस्नानवासोगन्धपुष्पधूपदीपनीराजनछत्रचामरयुगदर्पणनैवे—

द्यपानीयताम्बूलाख्यान् षोडशोपचारान् विधाय नैवद्याङ्गत्वेन पूर्वोत्तरापोशने हस्तप्रक्षालनगण्डूषाचमनीयानि च दद्यात्। नैवेद्याय त्रिकोणवृत्तचतुरस्रमण्डलकरणम् मूलेन प्रोक्षणम् वं इति धेनुमुद्रया अमृतीकरणम् मूलेन सप्तवाराभिमन्त्रणम् प्राणादिमुद्राप्रदर्शनञ्चानुष्ठेयम्। ततो वामकरतत्त्वमुद्रा सन्दष्टद्वितयशकलगृहीतक्षीरबिन्दुसहपतितैः दक्षकरोपात्तैः कुसुमैः सौः स् प्रकाशरूपिणी पराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः, सौः औ विमर्शरूपिणी पराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः, सौः औः प्रकाश विमर्शरूपिणी पराभट्टारिका श्रीपादुकां पू० त० नमः, सौः प्रकाशविमर्शरूपिणीपराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः, इति त्रिभिः मन्त्रैः क्रमेण देव्या मूलाधारहृन्मुखेष्वभ्यर्च्य सौः महाप्रकाशविमर्शरूपिणीपराभट्टारिका श्रीपादुकां पूजयामि तर्पयामि नमः इति मन्त्रेण देवीं दशवारं सन्तर्प्य।

### देव्याम् अखिलतत्त्वहोमभावनम्

तामेव कालाग्निकोटिदीप्तां ध्यात्वा, तस्यां सौः पृथ्वीं जुहोमि स्वाहा, सौः आपो जुहामि स्वाहा इत्यादिरीत्या प्राग्वद्विलाप्य हृदये स्थापितं षट्त्रिंशत्तत्त्वकदम्बकं पृथक् पृथक् मनसा जुहुयात्।

### गुर्वोघत्रययजनम्

ततो मूलपूर्विकयोक्तया श्रीगुरुपादुकया मस्तकस्थं श्रीगुरुं त्रिः सम्पूज्य पुनश्चिदग्निमुद्दीप्तं विभाव्य देव्याः पश्चात् प्रागपवर्गे रेखात्रये दक्षिणसंस्थाक्रमेण गुर्वोघत्रयं यजेत्। यथा—सौः पराभट्टारिकादेव्यम्वाश्रीपादुकां पूजयामि तर्पयामि नमः, अघोरानन्दनाथ श्री०, श्रीकण्ठानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः इति दिव्यौघः।

सौः शक्तिधरानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, क्रोधानन्दनाथ श्री०, त्र्यम्बकानन्दनाथश्रीपादुकां पू० तर्पयामि नमः इति सिद्धौघः।

सौः आनन्दानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः, प्रतिभादेव्यम्बानन्द, वीरानन्द, संविदानन्द, मधुरादेव्यम्बानन्द, ज्ञानानन्दः, श्रीरामानन्दः, योगानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः। इति मानवौघः।

## बलिदानम्

ततः त्रिकोणवृत्तचतुरस्रमण्डलं कृत्वा ऐं व्यापकमण्डलाय नमः इति पुष्पेणाभ्यर्च्य, अर्धान्नं सलिलपूर्णं सक्षीरोपादिमध्यमञ्च पात्रं निधाय, ॐ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् स्वाहेति त्रिः पठित्वा बलिं दत्वा, तत्त्वमुद्रास्पृष्टं क्षीरं बल्युपरि निषिच्य, वामपार्ष्णिघातकरास्फोटौ कुर्वाणः समुदञ्चितवक्त्रो नाराचमुद्रया बलिं भूतैः ग्राहयित्वा, पाणीं प्रक्षाल्य, मानसिकीः प्रदक्षिणनतीः विधाय, देव्यैः पुष्पाञ्जलिं दद्यात् ।

## परामनुजपः

अस्य श्रीपराभट्टारिकामहामन्त्रस्य भैरवाय ऋषये नमः, इति शिरसि, गायत्र्यैः छन्दसे नमः, इति मुखे, पाराम्वायै देवतायै नमः, इति हृदये, सं बीजाय नमः, इति गुह्ये, औः शक्तये नमः इति पादयोः सौःकीलकाय नमः इति नाभौ, मम सर्वाभीष्टसिद्धये विनियोगाय नमः इति करसम्पुटे च न्यस्य, मूलेन त्रिर्व्यापक कृत्वा ।

सां अङ्गुष्ठाभ्यां (हृदयाय) नमः, सीं तर्जनीभ्यां (शिरसे स्वाहा), सूं मध्यमाभ्यां नमः (शिखायैवषट्) सैं अनामिकाभ्यां नमः (कवचाय हुं), सौं कनिष्ठिकाभ्यां नमः (नेत्रत्रयाय वौषट्), सः करतलकरपृष्ठाभ्यां नमः (अस्त्राय फट्) इति मन्त्रैः कराङ्गन्यासौ कृत्वा । अकलङ्केति ध्यात्वा,

षडुपचारैः मनसा अभ्यर्च्य,

मूलं सहस्रं त्रिशतं शतं वा श्रीक्रमोक्तेन विधिना जपित्वा स्तुवीत ।

## परास्तुतिः

यथा—

याऽघोरादिभिरेतैः पारम्पर्यक्रमागतैर्नाथैः ।
प्रथते तां विश्वमयीं विश्वातीतां स्वसंविदं नौमि ॥१॥
आनन्दचरणकमलामकलङ्कशशाङ्कमण्डलच्छायाम् ।
तन्मण्डलाधिरूढां तत्कलया कलितकलां नौमि ॥२॥
इच्छादिशक्तिशूलाम्बुजमूलां मूलकुण्डलीरूपाम् ।
नित्यामप्यणुरूपामणोश्च महतो महीयसीं नौमि ॥३॥

मौक्तिकमणिगणरुचिरां शशाङ्कनिर्मोकनिर्मलं क्षौमम् ।
निवसनां परमेशीं नमामि सौवर्णसम्पुटान्तःस्थाम् ॥४॥
भक्तजनभेदभञ्जनचिन्मुद्राकलितदक्षपाणितलाम् ।
पूर्णाहन्ताकारणपुस्तकवर्येण रुचिरवामकराम् ॥५॥
सृष्टिस्थितिलयकृद्भिर्नयनाम्भोजैश्शशीनदहनाख्यैः ।
मौक्तिकताटङ्काभ्यां मण्डितमुखमण्डलां परां नौमि ॥६॥
षड्गलितषडूर्मिषडरीन् धिक्कृत्याशु स्वभक्तवर्गस्य ।
कञ्चुकपञ्चकनोदनसञ्चितसम्वित्प्रकाशिनीं नौमि ॥७॥
अध्वातीतं बुद्ध्वा बुधाः प्रबुद्धाः परं पदं यस्याः ।
कैवल्यं यान्ति हठात् कटाक्षपातेन तां परां नौमि ।
यः पठतीदं स्तोत्रं पात्रं स भवेच्च पञ्चवर्गस्य ॥८॥
गुरुचरणकमलभाजा सहजानन्देन योगिनाऽभिहितम् ॥९॥

॥ इति परास्तुतिः ॥

## हविः शेषस्वीकरणम्

अथ—

सौः आत्मतत्त्वं शोधयामि नमः स्वाहा ।
सौः विद्यातत्त्वं शोधयामि नमः स्वाहा ।
सौः शिवतत्त्वं शोधयामि नमः स्वाहा ।

इति मन्त्रैः तत्त्वत्रयशोधनपूर्वकं हविः शेषं स्वीकृत्य मूलेन देवीं विसृज्य, तेनैव ब्रह्मरन्ध्रं नीत्वा विशेषार्घ्यपात्रमामस्तकमुद्धृत्य "आर्द्रं ज्वलति" इति मन्त्रेण तदर्घ्यमात्मनः कुण्डलिन्यग्नौ हुत्वा कामकलात्मकं देवीरूपं भावयन्नात्मानं कृतकृत्यो भवेत् ।

## मन्त्रसाधनम्

एवं नित्यक्रमं निर्वर्तयन् श्यामाक्रमोक्तक्रमेण लक्षजपं पुरश्चरणम् कलौ तच्चतुर्गुणितं प्रत्यहमयुतसङ्ख्यया, ग्रहणादिजपप्रत्याम्नायान्वा कृत्वा, होमतर्पण-ब्राह्मणभोजनानि क्रमेण दशांशतः कुर्यात् । होमद्रव्यस्य तन्त्रा-

न्तरेष्वदर्शनात्, आज्यमेव । ततः सिद्धमनुः काम्यलिप्सुर्यदि श्यामाक्रमोक्तै-रेव द्रव्यैः हुत्वा पूर्णमनोरथः सुखी विहरेत् । एतदेकविश्रान्तिमभिलषतोऽप्य-यमेवोपास्तिक्रम इति शिवम् ॥ परापद्धतिः समाप्ता ।

नित्यनैमित्तिकक्रमौ शिष्यसुतादिभिरपि कारयितुं शक्येते । नित्यक्रमस्य प्रमादादिना अतिक्रमे मूलशतजपः प्रायश्चित्तमाम्नातम् ।

आपदि तु—अशक्तः कारयेत् पूजां दद्याद्वाऽर्चनसाधनम् ।
दानाशक्तः सपर्यान्तं पश्यत्तत्परमानसः ॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे सपर्यापद्धतिः समाप्ता ।

श्रीविद्यारत्नाकरे सपर्याक्रमः पूर्णतां गतस्तेन श्रीललितामहात्रिपुरसुन्दरी-प्रसीदतु ।



# परिशिष्टम्

## श्रीविद्यामन्त्रभाष्यम्

ज्योतिषामपि ज्योतिर्निर्दृश्यदृक्स्वरूपो महान् प्रकाशः शिवः। तद्विज्ञाने जाते सर्वं विज्ञातं भवति। तस्मिन् दृष्टे सर्वं बाधितं भवति। तस्य नैसर्गिकी स्फुरत्ता विमर्शरूपा शक्तिः, तद्योगादेव विश्वोत्पत्तिस्थितिलयलीलत्वं शिवस्य। तदुक्तं वरिवस्यारहस्ये "स जयति महान् प्रकाशो यस्मिन् दृष्टे न दृश्यते किमपि। कथमिव तस्मिन् ज्ञाते सर्वं विज्ञातमुच्यते वेदे। नैसर्गिकी स्फुरत्ता विमर्शरूपाऽस्य वर्तते शक्तिः"। इति। तद्विज्ञानार्थमेव चतुर्दश विद्यास्थानानि। तेष्वपि सारभूता वेदाः। तेष्वपि गायत्री। तस्या रूपद्वितयम्। तत्रैकं स्पष्टम्। द्वितीयं परमगोपनीयं श्रीविद्याख्यम्। तदेव कामो योनिः कमलेत्येवं साङ्केतिकैः शब्दैर्वेदोऽपि व्यवहरति।

तत्र कादिविद्यायाः कादिवर्णास्तु स्पष्टाः। हृल्लेखायान्तु व्योमाग्निवामलोचनाविन्द्वर्धचन्द्ररोधिनीनादनादान्तशक्तिव्यापिकासमनोन्मनीति द्वादश संहृतिः। विन्द्वादिनवानां संहृतिर्नाद उच्यते। तत्र कामकला (ईकारः) त्रिकोणा (एकारः) च मात्राद्वितयोच्चार्या। विन्दुरहितहृल्लेखा मात्रात्रितयोच्चार्या। अन्ये स्वरा मात्राकालोच्चार्याः। व्यञ्जनानि तु अर्धमात्रोच्चार्याणि। विन्दोरपि व्यञ्जनत्वादर्धमात्रैव। "एकमात्रो भवेद्ध्रस्वः द्विमात्रो दीर्घं उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनन्त्वर्धमात्रकम्"॥ इति वचनादर्धचन्द्ररोधिन्यादयः पूर्वपूर्वार्धाः। विन्दोरर्धः कालश्चन्द्ररोधिन्याः तस्यार्धः कालो रोधिन्या इत्येवम्।

कालपरमाणुर्लव उच्यते। तदुक्तम् "नलिनीपत्रसंहत्याः सूक्ष्मसूच्यभिवेधने। दले दले तु यः कालः स कालो लवसंज्ञितः"॥ इति। तथा षट्पञ्चाशदुत्तरशतद्वयलवैरेका मात्रा। तथा च बिन्दोरष्टाविंशदुत्तरशतं लवाः।

अर्धचन्द्रस्य चतुःषष्टिः। रोधिन्याः द्वात्रिंशत्। नादस्य षोडश। नादान्तस्याष्टौ। शक्तेश्चत्वारः। व्यापिकाया द्वौ। समनाया एको लवः। उन्मनाया नास्त्येव कालः। "अतः सूक्ष्मतमः कालो नोपलभ्यो भृगूद्वह"।

केषाञ्चिन्मतरीत्या द्वादशोत्तरपञ्चशतलवात्मकत्वमेव मात्रायाः स्वरूपम्। ततश्च मात्रायाः द्वादशोत्तरपञ्चशततमो भाग उन्मनाकालः।

प्रथमकूटे अष्टादश वर्णाः, द्वितीये द्वाविंशतिवर्णाः, तृतीयेऽप्यष्टादशैव। तदुक्तं वरिवस्यारहस्ये "प्रथमेऽष्टादश वर्णाः द्वाविंशतिरक्षराणि मध्ये स्युः। प्रथमेन तुल्यमन्त्यं संघातेनाष्टपञ्चाशत्"॥ इति। संहृत्य लवत्रयन्यूना एकत्रिंशन्मात्रा मन्त्रे सम्पद्यते। तत्र प्रथमकूटं प्रलयाग्निनिभं मूलाधारमारभ्याऽनाहतं यावत्, द्वितीयं कोटिसूर्याभमनाहतमारभ्याज्ञाचक्रं यावत्, तृतीयं कूटं कोटिचन्द्राभं तदारभ्य ब्रह्मरन्ध्रं यावत्, माला मणिवद्वर्णाः क्रमेणोपर्य्युपरि भाव्या आधारोत्थितो नादो गुण इव वर्णमध्ये गतो भाति। इदञ्च स्थानत्रयं बिन्द्वादिरहितकूटत्रयस्यैव। बिन्द्वादिनवकस्य तु स्थितिस्थानरूपाकारानाह वरिवस्यारहस्यकारः "मध्ये फालं बिन्दुर्दीप इवाभाति वर्त्तुलाकारः"। तदुपरि गतोऽर्धचन्द्रोऽन्वर्थं कान्त्या तथाकृत्या। अथ रोधिनी तदूर्ध्वं त्रिकोणरूपा च चन्द्रिका कान्ति। नादस्तु पद्मरागवत्, अण्डद्वयवर्त्तिनीव सिरा॥ नादान्तस्तडिदाभः स व्यवस्थितबिन्दुयुक्तलाङ्गलवत्। तिर्यग्बिन्दुद्वितये वामोद्गच्छत्सिराकृतिः शक्तिः। बिन्दूद्गच्छत्° त्र्यस्राकारधरा व्यापिका प्रोक्ता। ऊर्ध्वाधो बिन्दुद्वयसंयुतरेखाकृतिः समना। सैवोर्ध्वबिन्दुहीनोन्मना तदूर्ध्वं महाबिन्दुः। शक्त्यादीनान्तु वपुर्द्वादशरविकान्तिपुञ्जाभम्॥" इति।

तथा च—

मूलाधारे क ए, स्वाधिष्ठाने ईल, मणिपूरे ह्र् ई अनाहते हसक, विशुद्धौ हल, अज्ञायां ह्रीं सकल, सहस्रारे ह्रीं, बिन्दुः ÷ ॅ, अर्धचन्द्रः ◡, रोधिनी▽ॅ, नादः ०।०, नादान्तः ०५ॅ, शक्तिः ¦ ०, व्यापिका ▽ॅ, समना ⁰₀, उन्मनी | ॅ, महाबिन्दुः ०।

मन्त्रवर्णानां कण्ठताल्वादीन्युत्पत्तिस्थानानि आन्तरान् वाह्यांश्च यत्नान् ज्ञात्वा तेषां स्थितिस्थानानि च ज्ञात्वा वर्णानेवमुच्चारयेद्यथा प्राथमिको नादो द्वितीयकूटेन सार्धमुच्चारितो भवेत्। द्वितीयनादस्तु तृतीयेन कूटेन सार्धमुच्चारितो भवेत्। प्राक्तनयोः विन्द्वादिनवकयोस्तु सम्मेलनेन तृतीयं यथा तत्संवलितं भवेत्तथोच्चारणीयम्। तृतीयकूटस्थं नादं बिन्द्वादि समनान्तमुच्चारयेत्। एतदुच्चारणमुन्मन्यन्तर्निलीनं विभावयेत्।

श्रीविद्याया वाग्भवकामराजशक्तिकूटानां व्यष्टिसमष्टिभेदेन चतुर्धा भिन्नानां चत्वारि वीजानि सृष्टिस्थितिसंहारानाख्यारूपाणि भावनीयानि। तान्येव ज्ञातृज्ञानज्ञेयानि तत्सामरस्यञ्च, तान्येवाग्निचक्रसूर्यचक्राणि ब्रह्मचक्रञ्च, मित्रीशनाथषष्ठीशनाथोड्डीशनाथचर्यानन्दनाथश्च, जाग्रत्स्वप्नसुषुप्तयस्तुरीया च वामाज्येष्ठारौद्र्यः शान्ता च, इच्छाज्ञानक्रिया अम्बिका च कामेश्वरीवज्रेश्वरीभगमालिन्यो महात्रिपुरसुन्दरी च, आत्मान्तरात्मपरमात्मानो ज्ञानात्मा च, आत्मतत्त्वविद्यातत्त्वशिवतत्त्वानि सर्वतत्त्वञ्च, कामरूपपूर्णगिरिजालन्धराण्योड्यानपीठञ्च, प्रागदक्षिणपश्चिमान्वया उत्तरान्वयश्च, एत एव समयाम्नायपदाभ्याञ्च कथ्यन्ते। स्वयम्भूवाणेतराणि परञ्च, पश्यन्तीमध्यमावैखर्यः परा च, एतान्येव पुटधामतत्त्वपीठान्वयलिङ्गमातृकारूपेण चिन्तनीयानीत्यर्थः। तदुक्तंवरिवस्यारहस्ये 'पुटधामतत्त्व-पीठान्वय-लिङ्गक-मातृतत्समीष्टीनां रूपान्तराणि वीजान्यमूनि चत्वारि चिन्तनीयानि' इति।

सृष्टिस्थितिसंहाराख्यानि त्रिविधान्यपि कर्माणि प्रत्येकमपि त्रिविधानि। तद्यथा—सृष्टिसृष्टिः, सृष्टिस्थितिः, सृष्टिसंहृतिः, एवं स्थितिसृष्टिः, स्थितिस्थितिः, स्थितिसंहृतिश्च, संहृतिसृष्टिः, संहृतिस्थितिः, संहृतिसंहृतिः। स्वशक्तिभिः सहिता ब्रह्माद्या एतत्कर्मगामधिपतयः। तत्र प्रथमकूटे ककारो ब्रह्मणो रूपम्, त्रिकोणा भारतीस्वरूपा, तुर्यः स्वरः विष्णुस्वरूपः, लकारः पृथ्वीस्वरूपः, हकारो रुद्ररूपः, रेफो रुद्राणीस्वरूपः, तुर्यस्वरस्तु शान्ताम्बिकात्मकमिथुनस्वरूपः। द्वितीयकूटे मध्यमहकारं परित्यज्यावशिष्टाक्षरे-

ष्वपि पूर्वोक्तैव रीतिः। तृतीयुकूटे तु द्वितीयकूटस्थत्यक्तहकारस्य ब्रह्मरूपत्वं, सकारो भारतीरूपः, शेषाः पूर्ववत्। प्रथमकूटे हल्लेखान्तर्गतकामकलाया या सपरार्धकला तुरीयविन्दुरूपा, बिन्दुना मुखं, बिन्दुद्वयेन कुचौ, सपरार्द्धेन योनिः, सैव वन्हिकुण्डलिनी; द्वितीयकूटे सैव सूर्यकुण्डलिनी, सैव तृतीयकूटे सोमकुण्डलिनी। बिन्द्वादि नवकसमष्टिरूपो नादो दीपशिखाग्रवर्त्तिकज्जलल्लेखावत्तत एवोत्पद्यते। अनाहतमारभ्योत्थिते नादे त्रैलोक्यमोहनसर्वाशापूरकसंक्षोभणकचक्रत्रयस्य त्रिविधसृष्टिरूपस्य बिन्दुस्थानमारभ्योत्थिते नादे, सर्वरोगहरसर्वसिद्धिप्रदसर्वानन्दमयचक्रत्रयस्य त्रिविधसंहृतिरूपस्य च चिन्तनं कार्यम्।

वाह्येन्द्रियव्यवहाररूपा जागरावस्था, तद्धेतुर्ज्ञानंतृतीयकूटस्थहृल्लेखास्ये रेफे भावनीयम्। बाह्लेन्द्रियानपेक्षान्तःकरणव्यवहाररूपा स्वप्नावस्था, तज्जनकज्ञानरूपः प्रकाशः हृल्लेखास्थया कामकलया बोध्यः। अथापि स्वप्नावस्था गलस्ये द्वितीयकूटस्थे लकारे चिन्त्या, वृत्तिसामान्या भावरूपा अविद्या वृत्तिरूपा वा सुषुप्तिः ललाटस्थाने तृतीयकूटस्थहृल्लेखास्थे बिन्दौ चिन्त्या, चिदभिव्यञ्जकनादस्य वेदनं तुर्यावस्था, तद्धेतुः प्रकाशः अर्धचन्द्ररोधिनी नादेषु भावनीयः। मनोवचनातीतप्रत्यगानन्दघन एव तुर्यातीवस्था नादान्तादिपञ्चके भाव्या तार्तीयके रेफस्थाने बिन्दौ रोधिन्यां नादान्तव्यापिकयोः चन्द्रकतुल्यानि पञ्चशून्यानि भाव्यानि। नीरूपं षष्ठं महाशून्यम् उन्मन्यां चिन्त्यम्।

प्राणात्ममानसानां संयोगः प्राणविषुवसंज्ञकः। प्राथमिककूटनादे व्यष्टिसमष्टिभेदेन बीजचतुष्कस्य स्वस्य चैक्येन नादमयताविभावनं मन्त्रविषुवम्। मूलाधारादिषट्चक्रस्याध ऊर्ध्वं चैकैको ग्रन्थिरिति द्वादश ग्रन्थयः। तद्भेदनमार्गेणैव षुसुम्नानाडी मूलाधाराद्ब्रह्मरन्ध्रं व्याप्नोति। तेनैव मार्गेण नादस्य वर्णपंक्तेश्च नाडीसंयुतत्वेन भावनयोच्चारणं नाडीविषुवम्। तृतीयकूटस्थरेफादिषु सप्तसु स्थानेष्वाधारादारब्धस्य नादस्याभिधानादुत्तरोत्तरक्षणेषु कांस्यतालध्वनिवत् सौक्ष्म्यतारतम्य शक्तौ लयभावनं प्रशान्त-

विषुवम् । शक्त्यन्तर्गतनादं समनायां लयचिन्तनं शक्तिविषुवम् । समनोर्ध्वं पुनरुज्जीवनस्य सूक्ष्मतमस्य नादस्योन्मन्यां लयः कालविषुवम् । अकुलहस-स्रारादिकोन्मनान्तप्रदेशसंस्थेषु ककारादिषून्मनान्तेषु श्रीविद्याकूटलयेषु अयुतोत्तराष्टशतोत्तरसप्तदशत्रुटिपर्यन्तं विद्यावयवस्थानसंलग्नतापूर्वकं नादो-च्चारणे कृते सति तत्त्वस्य संविदभेदस्य बोधो भवति, तदिदं तत्त्वविषु-वम् । एवं पूर्वोक्तरीत्या पञ्चावस्था षट्शून्यानि सप्तविषुवानि नव चक्राणि मनोरथांश्च स्मरतो विद्यावर्णोच्चारणं जपः ।

कामयत इति कः परं ब्रह्म, 'कं ब्रह्मेति' श्रुतेः । क्रमेरौणादिको डः । जगत्सिसृक्षावान् परमेश्वरस्तत्पदार्थः काम इत्युच्यते । तदेव गायत्र्यास्त-दिति शब्दार्थः । एकारस्य त्रिकोणत्वाद्योनिरित्यर्थः । तदेव प्राणिप्रसव-कारणम् । त्रिकोणा शक्तिरेकारेण महाभगेन प्रसूते, तस्मादेकार एव गृह्यते । सवितुरिति तु प्रत्ययान्तप्रथमान्तपदस्य स एवार्थः, षूञ् प्राणिप्रसवे इति धातुस्मरणात् । तच्च सर्वसम्भजनीयत्वात् वरेण्यम् सर्वप्राणिपरप्रेमास्पदम् । अत एव वरेण्यम् इत्यस्यापि स एवार्थः । 'यदेकादशमाधारं बीजं कोणत्रया-त्मकम् । ब्रह्माण्डादि कटाहान्तं जगदद्यापि दृश्यते' ॥ इति वामकेश्वरस्मर-णात् । ईयते योगिभिः सर्वान्तर्यामितयेति ई । पदानां मध्यवर्तित्वेन तुरीय-स्वरेण सर्वान्तर्यामी शिवः । स एव देवस्य भर्ग इत्यनयोरर्थः । सोऽर्ङस् इति देवस्येति पदमपि प्रथमान्तमेव । भर्गः शिवः । धत्त इति धीः सर्वाधारः शिव इति देवस्य भर्गो धीरिति गायत्र्याः पदत्रयस्यार्थः । स एव तुरीय-स्वरस्यार्थः । 'तस्माद्भर्गो देवस्य धीत्येवमीकारः' इति श्रुतेः । ल इति पृथ्वीबीजस्य ससागरं सभूधरं भूमण्डलमर्थः । भूमण्डलमित्यपि पञ्चभूतो-पलक्षणम् । तदपि च मृद्घट इतिवत् परमात्मसामानाधिकरण्येन भूमण्डलोपलक्षितपञ्चभूतात्मना परिणतं परमात्मतत्त्वमेव ल इत्यस्यार्थः । गायत्र्यां महीति पदस्यापि स एवार्थः । महत्त्वात् काठिन्याच्च मही पृथ्वीति बोध्यते । ह्रीम् इति हकारस्य हृदयमर्थः । तत्र हृदये ई गतौ इट् गतौ इति धातोः ई इत्यस्य वासोऽर्थः । तथा च ह्री हृदयागारवासिनी

हृल्लेखा तां माति बोधयतीति ह्रीम् परमात्मतत्त्वावभासिनी गुणत्रयातीता निर्गुणब्रह्मास्वरूपा राजराजेश्वरी। धियो यो न प्रचोदयात् इति गायत्र्यास्तृतीयपादस्य स एवार्थः। अस्मदादीनां धियो वुद्धीः ध्यानादिरहिते निष्प्रपञ्चे वस्तुनि प्रेरयति-परतत्त्वविषयकज्ञानजननीत्यर्थः। परोरजसेऽसावदोम् इति तुरीयपादस्य गुणत्रयातीतं ब्रह्मैवार्थः। रजसः परं परोरजसे सोः शे इत्यादेशः। रजोऽतीतं निर्मलं निर्गुणमिति यावत्। रजःशब्दस्य गुणत्रयोपलक्षकत्वात्। सावदोम् इत्यस्य सवदोऽवदश्च प्रणवो वोद्धयते। स च वक्तुं शक्यो वक्तुमशक्यश्च। शब्दैः शक्तिमर्यादया न बोध्यः। शक्यतावच्छेदकधर्ममात्रस्य परस्मिन्नभावात्। लक्षणया तु बोध्यते, सत्यज्ञानादिपदशक्यविशिष्टतादात्म्यवत्त्वात्। 'यतो वाचो निवर्तन्ते' 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतिभ्यः। अकारोकारमकारैः प्रणवे ब्रह्मविष्णुरुद्रात्मकं ब्रह्मार्थः। हृल्लेखाया अपि तदर्थः। तथा च सर्वजगत्सिसृक्षावान् कामेश्वरः, जगत्कारणरूपा कामेश्वरी, शिवः सर्वान्तर्यामी सर्वाधारः पञ्चभूताद्यात्मना परिणतः परवस्तुविषयकज्ञानजनको निर्गुणो वेदैर्लक्षणया गम्यः शक्त्या चागम्यः ब्रह्मविष्णुरुद्रात्मक इति प्रथमकूटस्यार्थः। एवं श्रीविद्याया द्वितीयकूटस्थब्रह्मशिववाचिप्रथमहकारस्य गायत्र्यास्तत्पदस्य च शिवोऽर्थः, सकारस्य सवितुरित्यस्य च सवितार्थः, ककारस्य वरेण्यमित्यस्य च सर्वसंभजनीयसर्वप्राणिपरप्रेमास्पदमित्यर्थः। द्वितीयहकारस्य भर्गो देवस्य धी इत्यस्य च सर्वान्तर्यामिसर्वधारकः शिवोऽर्थः। तृतीयकूटे सकेत्याभ्यां तत्सवितुर्वरेण्यं भर्गो देवस्य धीत्यन्तगायत्र्या अर्थ उच्यते। सकारेण कामेश्वरः सर्वजगद्योनिः, ककारेण सर्वधारकः सर्वप्राणिप्रेमास्पदं शिवः, द्वितीयतृतीयकूटयोर्लह्रीं इत्येताभ्यां पूर्वोक्तरीत्या पञ्चभूताद्यात्मना परिणतः परमात्मैवार्थो बोध्यते, उभयत्रापि हृल्लेखाभ्यां गायत्र्याश्चतुर्थचरणार्थो वोध्यते। तथा च त्रिरावृत्तायाश्चतुश्चरणाया गायत्र्या अर्थः पञ्चदश्याः कूटत्रयेण बोध्यते। त्रिपुरोपनिषद्ययमर्थो निरूपितः। देवीभागवते च 'सर्वचैतन्यरूपां तामाद्यां विद्याञ्च

धीमहि। बुद्धिं या नः प्रचोदयात्' इति ह्याद्यायाः श्रीविद्याया एव ब्रह्मरूपत्वं प्रतिपादितम्।

एवं प्रकाशविमर्शात्मकस्य तत्त्वस्य प्रकाशांशभूता वामाज्येष्ठारौद्र्यस्तिस्रः शक्तयो ब्रह्मविष्णुरुद्राः पुरुषाः, तत्समष्टिः शान्तात्मिक शक्तिः तुरीया विमर्शांशभूता। इच्छाज्ञानक्रियास्तिस्रः शक्तयः तद्भार्यात्वेन भारतीपृथ्वीरुद्राण्यः स्त्रीरूपाः प्रसिद्धाः, तत्समष्ट्यम्बिकाशक्तिस्तुरीया।

प्रथममिथुनत्रयं ईकारविनिर्मुक्तकूटत्रयस्य क्रमेणार्णः। ईकाराणान्तु तुरीयमिथुनमर्थः। वक्ष्यमाणे शाक्तेऽर्थे त्वेकैकस्मिन्नपि कूटे रेफान्तवर्णषट्कस्यापि मिथुनत्रयमर्थ इति भेदः। वामेच्छे ब्रह्मभारत्यौ ज्येष्ठाज्ञाने हरिक्षिती। रौद्रीक्रिये शिवापर्णे त्रिभिः कूटैः क्रमान्मिथुनत्रयं वाच्यम्, हृल्लेखास्थैरीकारत्रितयैस्तु तत्समष्ट्यात्मकं शान्ताम्बिकात्मकं बोध्यम्। वामेच्छाद्याः षडीकार इति सप्तभिरक्षरैः त्रिरावृत्तैरियं विद्या सञ्जाता। तेन तन्मयी वामादिसप्तशक्तीनां समष्टिः परदेवता षट्त्रिंशत्तत्त्वरूपादस्मान्मात्रयापि भिद्यते। मन्त्रे तृतीयवर्णस्य तुर्यस्वरस्य ज्येष्ठाशक्तिवाचकत्वेन वामादिषट्कान्तःपातित्वेनावशिष्टानां हृल्लेखास्थानामेव कामकलानाम् ईकारपदेन परामर्शान्न त्रिरावृत्तैरिति संख्याविरोधः।

ककारस्य वामात्रिकोणाया इच्छातुर्यस्वरस्य ज्येष्ठा लकारस्य ज्ञानात् त्रिरावृत्तैर्हृल्लेखास्थैः ईकारै रौद्रीक्रिये सर्वसमष्टिरूपा च।

नच शाक्तार्थेन पौनरुक्त्यम्, तत्र वामादिषट्कं कामकलाया अभिन्नमिति वाक्यार्थः। अत्र तु वामादिकामकलान्तसप्तकाभिन्नो मन्त्र षट्त्रिंशत्तत्वाभिन्नमात्रभिन्न इत्यर्थं इति भेदात्। अथवा—

शिवशक्तिसमष्टिजन्यत्वान् मन्त्रराजः स्पन्दश्च तद्व्यष्टिरूपौ शिवशक्तिमयौ। तेन जगन्मन्त्रदेवीनामभेदभावनं भावार्थः : तदुक्तं योगिनीहृदये—

**....'चलत्ता संस्थितस्य तु। धर्माधर्मस्य वाच्यस्य विषामृतमयस्य च। वाचकाक्षरसंयुक्तैः कथिता विश्वरूपिणी॥ तेषां समष्टिरूपेण-पराशक्तिं तु मात्रिकाम्। कूटत्रयात्मिकां देवीं, समष्टिव्यष्टिरूपिणीम्॥**

आद्यां शक्तिं भावयन्तो भावार्थं इति मन्वते।' इति तदर्थो वरिवस्या-रहस्ये "पराहन्तेत्यादि भावार्थकत्वतलादिवाच्यत्वाद्धर्मः शक्तिर्निर्धर्मकत्वादधर्मःशिवः शक्तिरहितस्य शिवस्य स्पन्दनाक्षमत्वाद्भवस्पन्दं प्रति शक्तेः कारणतावच्छेदकत्वात् कारणत्वम्, तेन जननमरणादिक्लेशमसंसार-जनकत्वाद्विषं शक्तिस्तद्विनिर्मोकादमृतं शिवस्तदुभयस्य वाच्यस्य वाचके ये अक्षरे हकाराकाररूपे ताभ्यां व्यस्ताभ्यां तदुभयसमावेशरूपकामकला-क्षरेण चास्य चलत्तासंस्थितस्य नश्वरयुक्तस्य जगतो मन्त्रराजस्य च सम्यक् परिणामपरिणामिभावेन युक्तेः सम्बन्धादेषा विद्या विश्वरूपिणी, एका-कारेणोभयोरभेदात् शिवशक्तिसामरस्यरूपस्य पराशक्त्यादिपदवाच्यस्य कारणस्य कार्याभ्यां विश्वविद्याभ्यामभेदात्" इति।

ब्रह्मपरिणामभूता सृष्टिर्द्वेधा अर्थमयी शब्दमयी च, चक्रमयी देहमयी चेति। सृष्टिद्वयन्तु बालक्रीडनकार्थं स्थूलगृहसमानाकारत्वेन सूक्ष्मगृहनिर्माण-तुल्यमर्थसृष्ट्यन्तर्गतमेव न ततो भिन्नम्। पूर्वोक्ता द्विविधापि सृष्टिः सम-कालीनोत्पत्तिका समकालीनाभिवृद्धिशालिनी च। यथा बीजाङ्कुरतच्छाये। छायादर्शनेन वृक्षानुमितिदर्शनात् छायायां वृक्षसमानाकारत्वं वृक्षाविना-भावश्च विनाऽनुपपन्नमिति तद्द्वयमपि कल्प्यते। तद्वत् शब्दोऽप्यर्थाविनाभूत अर्थज्ञानजनकज्ञानविषयत्वात् 'वागर्थाविव सम्पृक्तौ' इति महाकविप्रयोग-दर्शनाच्च। तथार्थसमानाकारोपि। यावन्तः शब्देऽवयवाः तावन्तोऽर्थे तज्ज्ञाने चाभ्युपेतव्याः यथा चैत्रस्तण्डुलं पचति इत्यत्र चैत्रपदं तु प्रत्ययः, तण्डुल-पदं अम् प्रत्ययः, पचिधातुः ति प्रत्ययश्चेति षडवयवात्मकस्य वाक्यस्य चैत्रः कर्तृत्वम्, तण्डुलः कर्मत्वम्, तेजःसंयोगः कृतिश्चेति विशकलिताः षडर्थाः, तेषां परस्परमभिव्याहारस्य तु परस्परसम्बन्धविशेषो तत्तत्पदार्थ-विशिष्टा भावनैव वाक्यर्था इति मीमांसकाः, एवं तज्ज्ञानमपि षट्पदार्था-स्तत्सम्बन्धादींश्च विषयीकुर्वत्तत्समानाकारं भवति, अन्यथा ज्ञानानां परस्परं वैलक्षण्यनुपपत्तेः, अन्तःकरणपरिणामविशेषरूपे ज्ञाने तत्तदाकारत्वेन परि-णतत्वकल्पनसम्भवाच्च। अत एव चैत्रस्तण्डुलं पचतीत्याकारं ज्ञानमिति

सकलतान्त्रिकाणां व्यवहारः। अनयोः सृष्ट्योर्ज्ञानजनकन्तु मन एव। तच्च शब्दं श्रोत्रद्वारैव गृह्णाति अर्थन्तु कञ्चन चक्षुरादिद्वारेति विशेषः।

द्वे अपि सृष्टी स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमभेदात् प्रातिस्विकं चतुर्विधे, श्रोतमनसोरप्यर्थान्तःपातित्वात् चातुर्विध्यम्। एवञ्च स्थूलश्रोत्रेण स्थूलशब्दस्य श्रवणात् स्थूलार्थस्य स्थूलमनसा ज्ञानम्, सूक्ष्मश्रोत्रेण सूक्ष्मशब्दश्रवणात् सूक्ष्मार्थस्य सूक्ष्ममनसा ज्ञानम्। श्रोत्रमनसोः सूक्ष्मत्वादिकन्तु शास्त्राभ्यासादिपाटवजन्यम्। 'निर्विचारवैशारद्येऽध्यात्मप्रसादः ऋतम्भरा तत्र प्रज्ञा' इति सूत्रयोरेतत्स्पष्टम्। श्रुतिरपि "चत्वारि वाक् परमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः। गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति।"

वैखरी मध्यमा पश्यन्ती परा इति चतुर्विधा वाचः, एतदर्था अपि चतुर्विधा विज्ञेयाः। मस्तकाद्यवयवेन्द्रिये प्राणदशब्दशालित्वं स्थूलजगदादिव्यक्तौ सद्योजातशिशौ पिपीलिकादौ चेत्यविवादम्। इयाँस्तु भेदः-स्थूले स्थूला अवयवाः सूक्ष्मे तु सूक्ष्माः। तथा च वैखरीरूपघटपदवाच्यापेक्षया मध्यमादिरूपघटपदैर्वाच्या घटाः युक्तिभिः कल्प्याः। ते चार्थाः सङ्कोचं गच्छन्तः केचिदस्पष्टनिखिलावयवकाः, केचित्तु सङ्कुचज्जलूकाकमठादिवत् अस्पष्टकिञ्चिदवयवका अप्यवयवन्यूनाधिकभावेन परिणामभेदेऽपि द्रव्याभेदस्य मीमांसकादिभिरप्यङ्गीकाराद्। यथायथमूहनीयम्।

चतुर्णां वाचकानां चतुर्भ्यो वाच्येभ्यो भेदा अपि चतुर्विधाः। सृष्टिचतुष्टयस्यापि मूलभूतो बिन्दुर्बीजस्थानापन्नः तस्मादपि परतः सूक्ष्मतरापेक्षया सूक्ष्मतममपि विशिष्य तद्वाचकत्वादभिन्नशब्दार्थरूपं शब्दब्रह्मेत्यादिपदनिर्देश्यं परं ब्रह्मैव। तच्च प्रकाशैकाकारस्य अर्थादत्यन्तभिन्नस्य शब्दब्रह्मेत्यादिपदनिर्दिशविशेषस्याभावात् अनिर्देश्यम् अग्राह्यम् अशब्दम् अस्पर्शम् इत्यपास्तविशेषम्।

वस्तुतः सृष्टिद्वयमूलभूतसूक्ष्मरूपविशेषात्मकत्वात् अभिन्नशब्दार्थरूपं शब्दब्रह्मेत्यादिपदनिर्देश्यं परं ब्रह्मैव। तच्च प्रकाशकस्वरूपम् 'पटः स्फुरति

घटः स्फुरति' इत्यादिप्रत्ययेन पदार्थमात्रस्फुरणस्य तत्तदभिन्नस्यानुभवसिद्धत्वात् प्रकाशः स्फुरति इति प्रत्ययात् प्रकाशस्यापि स्फुरणमवश्यं वाच्यम्। तच्च स्फुरणं शक्तिः प्रकाशस्फुरणात्मकयोः शिवशक्त्योर्मिलितयोरेव जगत्कारणत्वमन्यतरस्य तत्त्वानुपपत्तेः। तथा च शुद्धस्य शिवस्य केवलायाः शक्तेर्जगत्कारणत्वं तत्र तत्रोच्यमानं शिवशक्तिरूपस्योभयात्मनएव बोध्यम्।

अहमित्यत्र प्रकाशस्वरूपः शिवस्त्वकारस्तद्वाच्यश्च स्फुरणरूप शक्तिः हकारस्वरूपा तत्पदवाच्या। तावेतावकारहकारौ परारूपौ सूक्ष्मतमौ। परादिसृष्टिमूलभूतस्य बीजस्थानीयस्य बिन्दुविशेषस्य तु व्यक्ताव्यक्तविलक्षणौ वाचकौ, तस्यापि जनकस्य परब्रह्मणस्तु केवलमव्यक्तावेव शून्यस्वरूपौ वाचकौ। तयोः शून्यस्वरूपत्वादेव विसर्गरूपस्य शून्यद्वयस्य सूक्ष्मयोः अकारहकारयोरिवोच्चारणं भवति। तदुक्तं **'अहमित्येकमद्वैतं यत्प्रकाशात्मविभ्रमः। ककारः सर्ववर्णाग्रचः प्रकाशः परमः शिवः॥ हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्त्तितः। अनयोः सामरस्यं यत् परस्मिन्नहमि स्फुटम्। शून्याकाराद् विसर्गान्ताद् बिन्दुप्रस्पन्दसंविदः।''** इति योगिनीहृदये च शून्याकारः शून्यमात्ररूपो यो विसर्गान्तः षोडशस्वरान्त्यः तस्मात् बिन्दुविशेष उत्पन्न इति तदर्थः। विसर्गस्य अव्यक्तहकारतुल्यत्वेनाकारस्यापि तत्र सत्त्वेन षोडशस्वरकीर्त्तनम्। तेन अकारहकारावेव शून्याकारे कीर्त्तितौ वेदितव्यौ।

तथा कश्चित् पुरुषः उत्पत्स्यमानपुत्राद्यदृष्टवशात् उत्पादनेच्छाविशिष्टः स्वीयामुत्पादनशक्ति भार्यामवलोक्य स्वार्धाङ्गिन्यां स्वयमन्तः प्रविशति शुक्ररूपेण 'आत्मा वै पुत्र नामासि' इति श्रुतेः प्रवेश्यमानस्य स्वभिन्नत्वात् स्थूलतरभेदाक्रान्तत्वाच्च नाभेदभानम्। ततस्तस्य शुक्रस्यान्तः शोणितबिन्दुरूपेण भार्या प्रविशति। तेन च स बिन्दुरूच्छूनो भवति। स एष वटोदुम्बरादिबीजस्थानीयः। तस्मादङ्कुरविशेषाद्युत्पत्ति क्रमेण कालान्तरे पुत्राद्युत्पत्तिः।

यथा वा सूर्याभिमुखदर्पणे तदन्तःप्रविष्टकिरणात् उभयकिरणसङ्कलनरूपस्तेजोबिन्दुविशेषः कुड्यादौ प्रादुर्भवति तथा प्राण्यदृष्टवशात् स्वान्तः-

संहृतविश्वसिसृक्षया प्रकाशरूपं ब्रह्म स्वीयां शक्तिमवलोकयितुं तदभिमुखीभूय तदन्तस्तेजोरूपेण प्रविश्य शुक्रबिन्दुभावमयते। ततस्तं बिन्दुं रक्तरूपा शक्तिः प्रविशति। तया सम्मिश्र-बिन्दुरुच्छूनो भवति। तत्र च हार्दकलारूप एकः पदार्थविशेषो भवति। स च बिन्दुः समष्टिरूपेणैकः स्फुटशिवशक्तिसामरस्यनामा कामो रविरग्निसोमात्मक इत्यादिशब्दैर्व्यवह्रियते। व्यष्टिरूपेण द्वयं तत्र शुक्लइन्दू रक्तोऽग्निरिति विन्दुद्वयात्मकत्वात् विसर्ग इति च व्यवह्रियते। अत एव च रवे रात्रौ, अग्नौ अमावास्यायाम् चन्द्रे च प्रवेशस्य श्रुतिसिद्धत्वात् समष्टिबिन्दो रवित्वमेवञ्च कामाख्यो बिन्दुर्विसर्गो हार्दकला चेति त्र्यवयवक एक पदार्थोऽणादिप्रत्याहारवत् कामकलेत्युच्यते। इदमेव समस्तसृष्टिबीजम्। अत एव अकारहकारयोर्मध्ये सर्ववर्णपाठः। लकारस्य ककाररूपत्वात्, क्षकारस्य क्षयो रूपत्वाच्च न तद्बहिर्भावः। एतन्मूलभूतं ब्रह्म तु तुरीयबिन्दुरित्युच्यते। तद्रूपाभ्यां शून्यस्वरूपाभ्याम् अकार-हकारभ्यां उत्पन्ना कामकला व्यक्ताव्यक्तविलक्षणा अहम्पदवाच्या अकारहकारोभयात्मकत्वं शिवशक्तिद्वयरूपत्वञ्चायम्पदस्य निष्कृष्टोऽर्थः।

तज्जन्यानां सूक्ष्मादिस्थूलान्तानाम् अखिलसृष्टीनाम् अहम्पदवाच्यत्वम्। यथा उदुम्बरपदवाच्यवीजाज्जनितानां परस्परविलक्षणानामपि पर्णकाष्ठकुसुमफलकृमीणाम् सर्वेषामुदुम्वरत्वम् उदुम्बरपर्णमुदुम्वरकृमिः इत्यादि व्यवहारात्। तथा च "ब्रह्म वा इदमग्र आसीत् तत् आत्मानमेवावेत् अहं ब्रह्मास्मीति।" (वृहदारण्यकोपनिषदि) 'त्वं वा अहम्, अहं वै त्वम्', (ऐतरेयोपनिषद्) अस्मच्छब्दस्य सर्वनामताऽप्यत एव हंसः सोऽहमित्यादिरूपेण पूर्णा अहम्भावनारूपा उपासना प्रसिद्धा। अहमिति समाहारद्वन्द्वसमासः। 'अहमेव इदं सर्वं' इति श्रुतेश्च। विरूपाक्षपञ्चाशिकायां, "स्वपरावभासनक्षम आत्मा विश्वस्य यःप्रकाशोऽसौ। अहमिति स एक उक्तोऽहन्तास्थितिरीदृशी तस्य।" एतादृशस्य अहम्पदार्थस्य यथा अहमिति पदं वाचकं तथा उत्तमपुरुषस्यैकवचनमपि वाचकम्। तस्य च परस्मैपदात्मनेपदभेदेन द्वैविध्येऽपि तिपः इटश्च इकारत्वेन अनुगमात्

इत्वमेव शक्यतावच्छेदकम्। अन्यायश्चानेकशब्दत्वमितिन्यायात् तस्य च धातूत्तरत्वेनोक्तं पुरुषत्वादिना वा उपस्थितिः पदार्थस्मारकत्वे तन्त्रम्। एर्णलादावपि लुप्तस्य स्मरणम् तदभावे शक्तिभ्रमाद्बोधः। तत्र च अकार-हकारयोरदर्शनेऽपि शास्त्रप्रामाण्यात् सूक्ष्मरूपौ तौ स्त इति स्वीकार्यम्। तस्यैव च हार्दकलायोगे दीर्घताऽपि सम्पद्यते इति तुरीयस्वरस्य कामकला-रूपत्वं मन्त्ररहस्यविद्भिः प्रतिपाद्यते। तदुक्तं योगिनीहृदये—"**मध्यबिन्दु-विसर्गान्तः सकास्थानमये परे। कुटिलारूपके तस्याः प्रतिरूपं वियत्कला॥**" इति। मध्मबिन्दुः कामाख्यः तस्य तुरीयबिन्दुविसर्गमध्य-पातित्वात् समष्टेर्व्यष्टिमध्यएवान्तर्गतत्वाच्च विसर्गो व्यष्टिरूपं बिन्दुद्वयं तयोरन्तर्मध्ये सम्यक् चैतन्यात्मनावस्थानम्। तन्मये तत्प्रधाने परे चरमे अकारहकाररूपे अक्षरे मातृकाणां क्रमेण पाठे चरमत्वात् हकारस्य व्युत्क्रमेण पाठे त्वकारस्य चरमत्वात्। किञ्च इमे अक्षरे कुटिलारूपके कुटिले अकुलकुले कुण्डलिन्यौ तयो रूपान्तरे तस्यास्तयोः कुण्डलिन्योः इत्यर्थः। वियत्पदेन शून्याकारत्वात् कामः प्रतिपाद्यते। कलापदेन हार्दक-लावत्त्वात् विसर्गः, यतः कामविसर्गयोः कुण्डलिनीप्रतिबिम्बरूपत्वं, ततः कुण्डलिन्यभिन्नाकारहकाररूपत्वं संभवतीति भावः, इति वरिवस्यारहस्ये तद्-व्याख्या। एवमकारहकारैकाररूपा कामकला। तद्भूते मन्त्रे विजातीयाक्षर-वत्त्वान्यथानुपपत्त्यापि तयोर्गर्भे सूक्ष्मरूपेणान्येषां वर्णानामर्थसृष्टेश्चावस्थानं सिद्ध्यति। यथा वटबीजरूपे सम्पुटे पर्णकाष्ठादेः। यथा च वटबीजानां स्फोटेनैवाङ्कुराद्युत्पत्तिरिति बीजस्य पूर्वोत्तरार्धयोर्वियोगे इत्यविवादम्। तच्चार्धद्वयं महति वृक्षे कस्मिन् भागेऽस्तीति तु दुर्ज्ञेयम्। एवं मन्त्रांशेऽपि अकारहकारयोरवस्थितयोः परिज्ञानाय संकेतभाषयोक्तं योगिनीहृदये—'**मध्यप्राणप्रथारूपस्पन्दव्योम्निस्थिता पुनः। मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः। राहुकूटाद्वयस्फूर्जत् इति**''''॥' तदर्थोऽपि वरिवस्यारहस्ये कलाकामयोर्मध्यस्य विसर्गस्य यः प्राणश्चैतन्यं तस्य प्रथा पृथुत्वेन श्रूय-माणता स्थूलतेति यावत्। तद्रूपं यत् स्पन्दव्योम हकारः स्पन्दते उत्पद्यते

इति स्पन्दः स्पन्दो व्योम यस्मादिति व्युत्पत्तेः। हकाराद्व्योम सम्भूतम् इत्युक्तेरिति केचित्। मध्यात्मको विसर्गाभिन्नो यः प्राणो हकारस्तस्य प्रथारूपो यः स्पन्दः स्थूलरूपा सृष्टिरित्यर्थः, तद्रूपं व्योम हकार इत्यर्थो युक्तः। हः शिवो गगनः प्राण इति मातृकाकोशात्। मध्यम इत्यस्य द्विरन्वयः। तत्रैकपदं मन्त्रपिण्डेन सह सामानाधिकरण्येनान्वेति, अपरं वैयधिकरण्येन, मध्यमकूटस्य मध्यमव्यञ्जने द्वितीयहकार इत्यर्थः द्वितीयगेषु सप्तसु व्यञ्जनेषु तस्य चतुर्थत्वेन मध्यमत्वात् तत्र स्थिता स्त्रीलिङ्गाच्छक्ति-विशेष्या। तृतीयकूटे तु सकारेऽकारो मूलबीजीय इत्याह।

राहुकूटेऽतिलघुषोढान्यासान्तर्गतग्रहन्यासे राहोः शषसहाख्यवर्णचतुष्टय-सहितस्य वक्त्रे न्यासः। वक्त्रेशादिचतुवर्णैं सहितं 'राहुमेवं च' इतिवच-नात्। तेन शादिचतुष्कं राहुकूटम्। तत्र द्वयभिन्नोऽद्वयस्तृतीयः साकारस्त-स्मिन् स्फूर्जत् शोभमानं नपुंसकलिङ्गबलात् ब्रह्म विशेष्यं शिव इत्यर्थः। तथा च अकारहकारौ परस्पराश्लिष्टौ शून्याकारौ प्रकाशस्फुरणात्मक-शिवशक्तिस्वरूपौ वेदान्तवेद्यं ब्रह्म। तदेव विश्वसिसृक्षया स्वार्धशक्तिं विलोकयद् बिन्दुर्भवति। तमिन्दुरूपं शक्तिस्तु रक्तबिन्दुतया प्रविशति। एतत्पिण्डद्वितयं विसर्गसंज्ञं हकारचैतन्यं मिश्रस्तु तत्समष्टिः। कामाख्यो रविरकार-चैतन्यम्। एषाऽहंपदतुर्यस्वरकामकलादिशब्दनिर्देश्या वागर्थ-सृष्टि-बीजम्। तेनाहन्तामयं विश्वं भवति। अन्त्यप्रथमे मध्यचतुर्थे मन्त्रेऽपि तौ व्यक्तौ। तेनाम्बामनुजगतामभेद एवात्र भावार्थः।

कामकलाविमर्शेऽपि—

अन्तर्लीनविमर्शः प्रकाशमात्रतनुः पूर्णाहंभावभावनागर्भितो महेशो विश्वोत्पत्त्यादिकृत्यपञ्चककारणम्। शक्तिश्च शिवादिषट्त्रिंशत्तत्त्वमयी सर्वप्रपञ्चात्मिका तदुत्तीर्णा च। शिवस्य जगन्निर्मातृत्वं तया शक्त्या विना नोपपद्यते। तत्र प्रकाशस्वभावस्य तु परमशिवरवेः किरणसमूहः विस्फुरण-शक्तिरूपे विशदे विमर्शदर्पणे प्रतिफलति। यथा लोके सूर्याभिमुखस्थित-दर्पणतले सूर्यकिरणप्रतिफलनान्तरं निकटगते कुड्ये सूर्यकिरणप्रतिहत-

तेजोबिन्दुः प्रत्यक्षं प्रपद्यते, तथैव प्रकाशस्वरूपपरमेश्वरस्य दर्पणस्वरूप-विमर्शसम्बन्धे जाते महाबिन्दुः पूर्णोऽहमित्येवंरूपः परमेश्वरः प्रकाशते। सितशोणबिन्दुयुगलकामेश्वरीरूपं दिव्यमिथुनम्। तदेव वागर्थसृष्टिहेतुः। परमेश्वरः स्वाङ्गभूताखिलप्रपञ्चविलयात्मकविमर्शशक्तिमनुप्रविश्य बिन्दु-भावं मन्यते। ततो विमर्शशक्तिरपि स्वान्तर्गतप्रकाशमयं बिन्दुमनुप्रविशति। ततश्च बिन्दुरुत्पन्नो भवति। तस्माद् बिन्दोर्नादात्मिका समस्ततत्त्वगर्भिणी जीवरूपा वालाग्रवत्सूक्ष्मरूपिणी भवति। बिन्दुनादस्वरूपयोस्तयोः प्रकाश-विमर्शयोरहमिति शरीरं भवति। विमर्शो रक्तबिन्दुरूपतां प्रकाशः शुक्ल-बिन्दुरूपतां भजति। उभयोर्मेलने मिश्ररूपं सर्वतेजोमयं परमात्मस्वरूपं भवति। तदेव सितशोणबिन्दुसमरसीभूतो मिश्रबिन्दुरुच्यते। अग्नीषोम-रूपिणी विमर्शशक्तिः तदुभयभूतकामेश्वराविनाभूता महात्रिपुरसुन्दरी बिन्दु-समष्टिरूपा कामकला प्रोच्यते। निर्विशेषप्रकाशस्वरूपोरविरस्या मुखं, शशि-हुताशनरूपबिन्दुयुगलं तस्याः स्तनद्वयं, तत्समरसीभावो योनिः। तदुक्तम्—

मिहिरबिन्दुमुखीं तदधोलसच्छशिहुताशनबिन्दुयुगस्तनीम्।
हसपरार्धकलारचनास्पदां भजत नित्यमिमां परदेवताम्॥

'इकारोर्ध्वगतो बिन्दुर्मुखं भानुरधो गतौ। स्तनौ दहनशीतांशु योनि-हार्धकला भवेत्॥'

वर्णपदमन्त्ररूपा वाक्कला तत्त्वभुवनात्मा अर्थः। तावेतौ वागर्थौ नित्यसंपृक्तौ प्रकाशविमर्शात्मकौ ताभ्यामेव षडध्वात्मकसर्वप्रपञ्चोत्पत्तिश्रव-णात्। कामकलारूपायास्त्रिपुरसुन्दर्या एव मातृ-मान-मेयपुट-धाम-पीठ-शक्ति-चक्रादिरूपेणाविर्भाव इति कामकलाविलासे विशदम्। अपरिच्छिन्नानन्त-तेजोराशिमयी अनन्तकोटियोगिनीवृन्दसमाराधिता नित्यनिरवधिकाति-शयानन्दमयात्मसाम्राज्यसम्पदभिमानशालिनी महात्रिपुरसुन्दरी यदा चक्रा-कारेण परिणमते, तदा तस्यास्तेजःपुञ्जात्मकदेहस्य किरणरूपाणामवयवानां तत्तदावरणदेवतारूपे परिणतिर्भवति। तदेतत्सर्वमुक्तं कामकलाविलासे—
'सेयं परा महेशी चक्राकारेण परिणमेत यदा। तद्देहावयवानां परिणति-

रावरणदेवताः सर्वाः ॥ आसीना बिन्दुमये चक्रे सा त्रिपुरसुन्दरी देवी । कामेश्वराङ्कनिलया कलया चन्द्रस्य कल्पितोत्तंसा ॥ पाशाङ्कुशेक्षुचापप्रशूनशरपञ्चकाञ्चितस्वकरा ॥ बालारुणारुणाङ्गी शशिभानुकृशानुलोचनत्रितया ॥'

सम्प्रदायार्थस्तु—

व्योमवाय्वग्निजलभूमिबीजैः ह, क, र, स, ल वर्णैर्युक्तत्वादियं विद्या पञ्चभूतमयी । तदुक्तम्—"हकाराद्व्योम सम्भूतं ककारात्त प्रभञ्जनः । रेफादग्निः सकाराच्च जलतत्त्वस्य सम्भवः । लकारात्पृथिवी जाता तस्माद्विश्वमयी च सा ।" इति । यद्यपि प्रकाशविमर्शसामरस्यात्मकवस्तुविशेषस्यैव शब्दार्थसृष्टिजनकत्वमविशिष्टं, तथापि प्रकाशांशस्यार्थसृष्टौ विमर्शांशस्य शब्दसृष्टौ जनकत्वं, तयोः परस्परसापेक्षत्वेन स्वस्वकार्यजनकत्वस्य श्रुतिस्मृतिसिद्धत्वात्तथा च विमर्शशक्तेर्हकार उत्पन्नः ततः प्रकाशाद्व्योम ततो विमर्शात्ककारः, ततः प्रकाशाद्वायुः, ततो विमर्शाद्रेफस्ततः प्रकाशादग्निः, ततो विमर्शात्सकारः, ततः प्रकाशाज्जलम्, ततो विमर्शाल्लकारः, ततः प्रकाशात्पृथिवी इत्येवंक्रमेण पञ्चमहाभूतोत्पत्तौ सत्यामपि हकारवद्विमर्शविशिष्टप्रकाशस्यैव व्योम प्रति कारणत्वात्कारणतावच्छेदकस्य हकारे सिद्धे विनिगमनाविरहात्कारणत्वमपि सिद्ध्यति, एवमेव ककारादिष्वपि । नचैवं हकारादेर्वाय्वादिकं प्रत्यपि करणत्वापत्तिरिति वाच्यम्, तेषामन्यथासिद्धत्वात्, पारम्पर्येण तत्त्वेऽपि दोषाभावाच्च ।

ननु तर्हि विद्यायां पञ्चभूतात्मकं वर्णपञ्चकमेवास्तु किमधिकैर्वर्णैरितिचेन्न; व्योमादीनां पञ्चचतुस्त्रिद्व्येकशब्दादिगुणात्मकत्वेन पञ्चदशार्णानामुपपत्तेः । व्योम्नि पञ्चभूतगाः पञ्चविधाः शब्दाः, वायौ वाय्वादिगताश्चतुर्विधाः स्पर्शाः, तेजसि त्रिविधानि रूपाणि, जले द्विविधोरसः, भूमावेकविधो गन्धः । पञ्चदशभिर्गुणैः पञ्चदशानां वर्णानामभेदः । अथवा विद्यायां मायात्रये हकारत्रयं मध्यकूटे च द्वौ हकारौ तैः पञ्चभिः पञ्चशब्दाः बोध्यन्ते । तदुक्तम्—'व्योमबीजैस्तुविद्यास्थैर्लक्षयेच्छब्दपञ्चकम्' इति ।

अत एव भावार्थप्रकरणे हकारस्य शक्तिवाचकत्वेऽप्यत्र शब्दलक्षणकत्वानुपपत्यभावः, गङ्गायां घोषमत्स्यौ इत्यादौ वृत्तिद्वयस्यापीष्टत्वात्। अथवा तत्र शिवशक्त्यात्मकमूलबीजात्मकयोरकारहकारयोः सूक्ष्मतमं रूपमिह तु वैखर्यात्मकयोः स्थूलरूपयोरर्थान्तरपरत्वमुच्यते। तथा च मध्यमहकारे ध्वन्यंशः परब्रह्मवाचकः वर्णांशस्तु शब्दलक्षक,। सर्वेष्वपि वर्णेषु वर्णांशध्वन्यंशौ परस्परसंसृष्टौ कत्वादिवर्णधर्माणां तारत्वमन्द्रत्वषड्जत्वादिध्वनिधर्माणाञ्च सर्ववर्णेष्वनुभूयमान्त्वात् ध्वन्यालम्बनत्वेनैव तत्तद्वर्णानामेकैकरूपत्वेऽपि देवदत्तयज्ञदत्ताद्युच्चारितवर्णानां वैलक्षण्यप्रतीत्युपपत्तिः।

मायास्थैस्त्रिभिस्तृतीयाक्षररूपेण च चतुर्भिरीकारैश्चतुर्विधाः स्पर्शाः बोध्याः। अत्र पक्षे न ककारैः स्पर्शाः बोध्याः। तदुक्तम् 'महामाया त्रयेणापि कारणेन च बिन्दुना। वाय्वग्निजलभूमीनां स्पर्शानाञ्च चतुष्टयम्। उत्पन्नं भावयेद्देवि स्थूलसूक्ष्मविभेदतः॥' इति। बिन्दुनेति कामकलाचतुष्कस्यापि विशेषणम्। त्रिविधं रूपं मायान्तर्गतैस्त्रिरेफैर्जन्यते। "रूपाणां त्रितयं तद्वत्त्रिभी रेफैर्विभावितम्' इति। सकार-द्वयेन रसद्वयम्, 'विद्यास्थैश्चन्द्रबीजैस्तु स्थूलः सूक्ष्मो रसः स्मृत' इति-वचनात्।

चन्द्रबीजैः सकारैः स्थूलो व्यापको जलगतः, सूक्ष्मः व्याप्यो भूगतो रसश्च बोध्येते। चन्द्रबीजैरिति बहुवचनमविवक्षितम्, विद्यायां सकारद्वयस्यैव सत्त्वात्। हादिविद्यायान्तु सकारत्रयस्य सत्वेन तत्रामृतगतोऽप्येषः रस इति। तेन रसत्रयं बोध्यते। लकारस्तु गन्धबोधकः 'वसुन्धरागतोगन्धस्तल्लिपिर्गन्धवाचिका' इतिवचनात्।

न च विद्यायां लकारत्रयमित्येकेन गन्धबोधोपपत्तावितरयोर्वैयर्थ्यमिति वाच्यम्, भुवनत्रयेण सह वाच्यवाचकसम्बन्धाल्लकारत्रयस्योपपत्तेः। ये यद्यज्जनकास्तेषां तेषां त एवार्था इत्यस्यापवादोऽपि विद्यास्थैः ककारैस्त्रिभिः अशुद्धमिश्रशुद्धाः अधमा मध्यमा उत्तमाः साधकाः प्रोच्यन्ते। तत्र भेदैकदृष्टयः शिवाहंभावनाहीनाः कर्मैकरताः प्रथमाः। सपक्वमलकर्माणः सूक्ष्मपुर्यष्टसम्बन्धशालिनः कर्मज्ञानमार्गयोः साधारणा द्वितीयाः निरस्तभेदाः

सर्वत्र-शिवैकदृष्टयस्तृतीयाः। तदुक्तम्—'अशुद्धमिश्रशुद्धानां प्रमातॄणां परं वपुः। क्रोधीशत्रितयेनाऽस्य विद्यास्थेन प्रकाश्यते ॥' इति।

द्वितीयतृतीयवर्णौ हृल्लेखात्रयञ्च मुक्त्वाऽवशिष्टेषु दशाक्षरेषु अकारा दश भवन्ति। ते च जीवराशिबोधकाः। एकेनापि बोधसम्भवेऽपि दशभिरभिधानं जीवानामानन्त्यबोधनाय। विद्यायाः प्राणभूत एकादशस्वरः एकारः प्राणवाचकः, तदुक्तम्—'श्रीकण्ठदशकं तद्वदव्यक्तस्य हि वाचकम्। प्राणभूतः स्थितो देवि तद्वदेकः वशः स्वरः। एकः सन्नेव पुरुषो बहुधा जायते हि सः।' इति। इह श्रीकण्ठा अकाराः। अव्यक्तो जीवः। बिन्दुभिः त्रिभिः सरुद्रेश्वरसदाशिवा बोद्ध्यन्ते। रुद्रपदेनात्र तेजस्तत्त्वं बोध्यते। ततः पुरुषनियतिकालरागविद्याकलामायानां परिग्रहः। 'पुरुषादिकमायान्तं तेजस्तत्त्वं महेश्वरि' इति स्वच्छन्दसंग्रहोक्तेः॥ शान्तिः प्रकृतिः शुद्धविद्या च नादत्रितयेन बोध्यन्ते अर्धचन्द्राद्युन्मानान्तं वर्णाष्टकं नादपदेनोच्यते। तत्राद्यत्रितयेन शान्तिः प्रकृतिः शुद्धविद्या बोध्यन्ते। एवं व्योमबीजपञ्चकेन चतसृभिः कामकलाभिः द्वाभ्यां चन्द्रबीजाभ्यां त्रिभीरेफैस्त्रिभिर्लकारैः त्रिभिः ककारैः त्रिभिर्बिन्दुभिः त्रिभिर्नादैः श्रीकण्ठदशकेनैकेन एकादशस्वरेण इति संहृत्य सप्तत्रिंशत्पदानि तेषां षट्त्रिंशत्तत्वानि तत्त्वातीतमेकं परं ब्रह्म चार्थः। तानि च तत्त्वानि शिवः, शक्तिः, सदाशिवः, ईश्वरः, शुद्धविद्या, माया, कला, अविद्या, रागः, कालः, नियतिः, पुरुषः, प्रकृतिः, अहङ्कारः, बुद्धिः, मनः, श्रोत्रं, त्वक्, चक्षुः जिह्वा, घ्राणम्, वाक्, पाणिः, पादः, उपस्थः, शब्दः, स्पर्शं, रूपं, रसः, गन्धः, आकाशः, वायुः, तेजः, आपः, पृथ्वीत्येतानि। तत्र शिवशक्तिशुद्धविद्या प्रकृतयः बिन्द्वर्थाः। सदाशिवादिपुरुषान्ताः नव नादार्थाः। शब्दादय आकाशादयश्च श्रोत्रादयो वागादयश्च पञ्च पञ्च हकारादेरर्थाः। अहङ्कारादित्रितयं तु ककारत्रयस्यार्थः। एकादशस्वरस्य तत्त्वातीतं ब्रह्मार्थः। यद्यपि हकारादेः शब्दाद्यर्थकत्ववत् इन्द्रियाद्यर्थकत्वं नोक्तम् तथापि स्वरव्यञ्जनभेदेन सप्तत्रिंशत्प्रभेदिनी। 'सप्तत्रिंशत्प्रभेदेन षट्त्रिंशतत्त्वरूपिणी। तत्त्वातीतस्वभावाऽत्र विद्यैषा भाव्यते मया।' इति वचनबलात्तथा कल्पनीयम्।

यत्तुसप्तत्रिंशद्वर्णानां सप्तत्रिंशति-तत्त्वेषु क्रमेण छक्तिरस्त्वित्याहुस्तन्न, हकारादौ क्लृप्तशक्तित्यागस्य शक्त्यन्तरस्वीकारस्य चापत्तेः। एकस्याऽने-कार्थत्वं तु न दोषः, एकत्र शक्तिरन्यत्र लक्षणेति सुवचत्वात्। न च युगपद्-वृत्तिद्वयविरोधः, एतद्वचनबलादेव सप्तत्रिंशत्त्वस्य शक्ततावच्छेकत्वाङ्गी-कारेण पूर्ववत्तस्यादोषत्वात्। प्रमाणप्रमितत्वाविशेषादनेकार्थत्वस्यापि हर्यादिपदवदविरोधाच्च। क्लृप्तशक्तिपरित्यागस्तु सर्वथाऽप्रामाणिकः यद्यपि पूर्वविद्यायामष्टपञ्चाशद्वर्णा उक्ताः, कथमिह सप्तत्रिंशत्त्वेन गण्यन्त इति भवत्यशङ्का, तथापि तथाप्यस्याः संख्यायाः पदगतत्वेनोपपत्तिर्वाच्या।

ननु विभक्त्यन्तस्यैव पदत्वात्कथमिह पदभाक्त्वमितिचेन्न, अर्थवत्त्वेन प्रत्यक्षरं प्रातिपदिकसंज्ञायां सुबुत्पत्तौ सुपां सुलुगिति लोपस्वीकारेण विभ-क्त्यन्तरूपपदसत्त्वात्। न चैवं ककारेषु जश्त्वापत्तिरिति वाच्यम्, किति-मिति इत्यादिज्ञापकैरेकाक्षरपदे तदनित्यताया ज्ञापनात्। एवञ्च सर्वतत्त्व-तत्त्वातीतवस्तुप्रतिपादकत्वात् सर्वस्वरूपेयं विद्या। यतो जन्यजनकयोर्भेदा-भावात् वाच्यस्य वाचकेनापि भेदाभाव इति ब्रह्मणि जगतोऽभेदः। जगति च विद्याभेद इति सम्प्रदायार्थः।

परमशिवस्य निष्कलता तदितरसर्वपदार्थाभावः, तदितरस्य सर्वस्यापि दुःखजनकत्वात्। 'द्वितीयाद्वै भयं भवती', ति श्रुतेरिति प्रथमकूटार्थः। तेन सह गुरोरभेदभावनादार्ढ्येन तदभेदः सिद्ध्यतीति द्वितीयकूटार्थः। तत्करू-णातः स्वकृताव्यभिचरितभक्तिपूर्वकदृढतरसेवासम्पादितप्रसादजन्यगुरुकरु-णाकरम्बितकटाक्षनिरीक्षणबलात् स्वस्मिन्नपि साधके ब्रह्माभेदः सिध्यतीति तृतीयकूटार्थः। स्वस्य गुरुद्वारा शिवगर्भे प्रवेशसम्पादकत्वादेतज्ज्ञानस्य विषयः शिवगुर्वात्मैक्यं निगर्भार्थपदवाच्यम्।

"गणेशग्रहनक्षत्रयोगिनीराशिरूपिणीम्।
देवीं मन्त्रमयीं नौमि मातृकां पीठरूपिणीम्॥"

भगवत्या गणेशादिषट्कात्मत्वमुक्तम्। तत्र निरुपमतेजोमय्याः स्वस्या मरीचिरूपाणामावरणदेवतानामीशत्वात् श्रीराजराजेश्वरी त्रिपुराम्बैव गणे-

२०

शीत्युच्यते। ताश्च देवता एकादशोत्तरशतसंख्याकाः, तन्त्रभेदेनान्या अपि प्रतिपादिताः। इच्छाज्ञानक्रियेति शक्तित्रयसमष्टिरूपत्वात् गुणत्रयाढ्यत्वाद् अनिलेन्दुरविनेत्रत्वान्नवभिर्योगात् पराम्बैव ग्रहरूपोच्यते। इन्द्रियदशकेनान्तःकरणचतुष्केण शब्दस्पर्शादिवचनादानादिविषयदशकेन गुणत्रयसाम्यावस्थारूपया प्रकृत्या सुखदुःखमोहमूलैः सत्त्वरजस्तमोभिर्गुणैः पुरुषेण च सप्तविंशतिसंख्याकत्वान्नक्षत्ररूपत्वमप्यस्याः। इन्द्रियादिनिरुक्तसप्तविंशतितत्त्वरूपेण पराम्बाया एव प्राकट्यम् इति सप्तविंशतिसंख्यातौल्येन नक्षत्ररूपत्वम्। अमृतादितत्तद्देवतोपलक्षकैः षोडशस्वरैः, कालरात्र्याद्युपलक्षकैः कादिठान्तैर्द्वादशवर्णैः, डामर्य्याद्युपलक्षकैः डादिफान्तैर्दशवर्णैः, बन्धिन्याद्युपलक्षकैः बादिलान्तैः षड्भिः, वरदाद्युपलक्षकैः वादिशान्तैश्चतुर्भिः, हंसवतीक्षमवत्योरुपलक्षकाभ्यां द्वाभ्यां हक्षाभ्यां वर्णाभ्यां वेष्टिताभिरमृताद्यावृताभिर्डाकिनी-राकिनी-लाकिनी-काकिनी-साकिनी-हाकिनीभिः त्वगसृङ्मांसमेदोऽस्थिमज्जाधिपतिभिर्विशुद्ध्यनाहतमणिपूरस्वाधिष्ठानमूलाधाराज्ञाचक्राणां तत्तद्देवतावर्णशक्तिसमानसंख्यातत्तदीयदलनिविष्टतावत्तावत्संख्याकदेवीसंवृत्तानां कर्णिकासु निविष्टाभिर्घटितविग्रहा त्रिपुराम्बायोगिनीत्युच्यते।

पञ्चभिर्नाग-कूर्म-कृकर-देवदत्त-धनञ्जयैः, पञ्चभिः प्राणापानव्यानोदानसमानैर्जीवात्मपरमात्मभ्याञ्च द्वादशात्मकत्वाद्राशिरूपिणी पराम्बापीठानां गणेशादिसमानसंख्याकत्वात्तदात्मकत्वोक्त्यैव तदात्मकत्वोक्तिः।

यथा भगवती श्रीगणेशादिरूपिणी तथैव श्रीविद्यापि गणेशादिरूपिणी। अकारादिषोडशस्वरात्मकं शक्तिकूटं, कादितान्ताक्षरात्मकं कामराजकूटम्, थकारादिसान्ताक्षरात्मकं वाग्भवकूटम्। व्यष्टिसमष्टिभेदेन परादिवाक्चतुष्टयञ्चैतत्। तथाच शब्दरूपस्यगणस्येशत्वाद्गणेशरूपिणी श्रीविद्या।

बिन्दुनादविनिर्मुक्तमेकं कूटम्, बिन्दुरूपञ्चैकम्; नादरूपञ्चैकम्। तथैव प्रतिकूटं त्रयं त्रयमिति बिन्दुत्रयनादत्रयतदन्यत्रयैः कूटत्रये नवत्वयोगाद्ग्रहत्वं विद्यायाः।

सम्प्रदायार्थप्रकरणे पञ्चदश्यां सप्तत्रिंशद्वर्णा उक्ताः। तेषु दशाकाराणां स्वव्यञ्जनैरपार्थक्येन गणनात् दशसंख्याया बाधे सप्तविंशतिरवशिष्यन्ते। तेन नक्षत्रात्मकत्वं सिद्धं विद्यायाः। तदुक्तम्—

"हृल्लेखात्रयसंयुक्तैस्त्रिंशसंख्यैस्तथाऽक्षरैः।
अन्यैर्द्वादशभिर्वर्णैरेषा नक्षत्ररूपिणी॥ इति।

हकाररेफकामकला बिन्दुनादैर्हृल्लेखायाम् एकैकस्यां पञ्चाक्षराणि, तिसृषु पञ्चदशाक्षराणि—'क ए ई ल ह स क ह ल सकल' इति सम्मेलनेन सप्तविंशत्यक्षराणि सम्पद्यन्ते तिसृभिर्हृल्लेखाभिःतद्रहितैः त्रिभिः कूटैश्चेति षड्भिर्योगात् श्रीविद्या योगिनी सम्पद्यते। तिसृणां हृल्लेखानां त्रयाणां कूटानाञ्च योगाच्छ्रीविद्या योगिनीति हृदयम्। तिसृणां हृल्लेखानां पूर्ववर्णैर्ल्कारैरपार्थक्येन गणनात् द्वादश संख्याकावयवशालित्वाद्राशिरूपाऽप्येषा। पञ्चदश्यां लत्रयनिष्कासनेन द्वाशसङ्ख्या एवं गणेशादिषट्कत्वस्य विद्यायां देव्यभेदसाधकत्वे स्थितेपि विद्यायां देवीरूपान्तरत्वस्य वचनबलात् सिद्धत्वेन तदभेदाद् गणेशादिरूपता।

एवं चक्रराजेऽपि गणेशादित्वम्। चतुरस्राभिस्तिसृभिर्वर्तुलाभिस्तिसृभिः रेखाभिश्चतुर्विंशतिदलैः पञ्चचत्वारिंशत्कोणैर्घटनाच्चक्रे गणेशत्वम्। त्रैलोक्यमोहनाद्यैः सर्वानन्दमयान्तैर्नवभिश्चक्रैर्ग्रहत्वं चक्रराजे। वृत्तत्रय--धरणीत्रयमन्वस्राणां विभज्य १४ गणनेन विंशतिः, सप्तभिरितरैस्त्रैलोक्यमोहनसर्वसौभाग्यदायकातिरिक्तैश्चक्रराजे सप्तविंशतिसंख्यायोगान्नक्षत्ररूपत्वम्। बिन्दुत्रिकोणवसुकोणाः संहृतिचक्रम्, द्वे दशारे चतुर्दशारञ्च स्थितिचक्रम्, अवशिष्टं सृष्टिचक्रमित्येतत्त्रिप्रकारत्वं चक्रसङ्केते स्पष्टम्। तथाच—स्थितिसंहृतिचक्रे द्वे द्वे पद्मे वसुषोडशदले वृत्तमेकं, भूगृहञ्चैकमिति षड्भिर्योगाच्छ्रीचक्रं योगिनीरूपम्।

स्वाभिमुखाग्रत्रिकोणानि शक्तय उच्यन्ते। तानि पञ्च पराङ्मुखाग्रत्रिकोणान्यनला उच्यन्ते। तानि चत्वारि बिन्दुः पद्मद्वयगर्भितं वृत्तं भूगृहञ्चेति द्वादशसंख्यैर्घटनाच्चक्रस्य राशिरूपताऽपि। चक्रस्य विद्याक्षरजन्यत्वात्तदभेदस्य सिद्धत्वात्तेन हेतुनाऽपि चक्रराजस्य गणेशादि रूप-

त्वम्, देव्या रूपान्तरत्वाच्च तद्रूपता सिद्ध्यति। पीठरूपतापि गणेशादीनां पञ्चानां मेलनेन पञ्चपञ्चाशत् संख्यासम्पत्तेः। यदपि मातृकासंख्यानि पीठानि मातृकाश्चैकपञ्चाशत्संख्याकाः पीठानि कामरूपादिच्छायाच्छत्रान्तान्येक-पञ्चाशत्संख्याकानि, तथापि ओ (ओड्याण) जा (जालन्धर) पू (पूर्णगिरि) का (कामगिरि) नां पीठानां प्राधान्येन पुनर्गणानात् पञ्चाशत्संख्याकानि पीठानि सम्पद्यन्ते। गणेशादीनाञ्च सम्मेलनेन पञ्चपञ्चाशत्संख्या सम्पद्यते। तत्र गणेशः एकः,ग्रहा नव, नक्षत्राणि सप्तविंशतिः, योगिन्यः षट्, राशयो द्वादशेति। वरिवस्यारहस्ये तदुक्तं विस्तरेण—

"यावन्मातृकमुदितान्येकसमेतानि पञ्चाशत्। पीठानि पुनर्गणितान्यो, जा, पू, कानि चत्वारि॥ गणपग्रहभादीनां शशि-निधितारर्तुसंख्यानाम्। मेलनतः पीठानि ज्ञेयान्येतेषु पञ्चपञ्चाशत्।" इति।

चक्रराजस्य विद्याक्षरजन्यत्वं कथमित्युच्यते—कत्रितयात् ईकाराच्च महाबिन्दुमयं सदाशिवासनं जायते। तदुक्तम्—

"इच्छाज्ञानक्रियारूप,—मादनत्रयसंयुतम्।
सदाशिवासनं देवि महाबिन्दुमयं परम्॥"

तदर्थस्तु—इच्छादयस्तिस्रः शक्तयो रूप्यन्ते यस्मात् स ईकारः माद-नान्तककाराणां त्रयञ्चेत्येताभ्यां संयुतं जनितं महाबिन्दुमयं सदाशिवासनं ब्रह्माविष्णुरुद्रेश्वराः पादाः, फलकं सदाशिवः, तादृशसर्वानन्दमयं चक्रम्। अथवा, इच्छाज्ञानाक्रियारूपाश्च ते मादनाश्च त्रयश्चेति द्वन्द्वः। अत्र त्रयब्देन बिन्दुत्रयात्मकत्वादीकारो ग्राह्यः। सर्वथाऽपि ककारत्रयात् ईकाराच्च बिन्दूत्पत्तिः सर्वसिद्धिप्रदसर्वरोगहराख्यचक्रद्वयमपि मिलित्वा नवयोन्य-त्मकं भवति। तच्च तिसृभिर्लज्जाभिर्जातम्। अत्र यद्यपि हकाररेफईकार-बिन्दुनादैश्च ह्रल्लेखात्रयस्य सम्मेलने पञ्चदशाक्षराणि भवन्ति। तथापि बिन्द्वादीनां ईकारैः सह मेलने प्रतिह्रल्लेखं हकारो रेफ ईकारश्चेति त्रय-मेवेति नवाक्षरसमूहेनैव नवयोन्यात्मकस्य चक्रद्वयस्य जनिः सर्वरक्षाकर-

सर्वार्थसाधक—सर्वसौभाग्यायकाख्यं स्थितचक्रतित्रयं तिसृभिः शक्तिभिः त्रिभिरनलैर्हकारद्वयेनैकादशस्वरेण च समुत्पन्नम्। तदुक्तम्—

"मण्डलत्रययुक्तन्तु चक्रं शश्यनलात्मकम्।
व्योमबीजत्रयेणैव........................॥

अत्र मण्डलत्रयेति दशारद्वयं चतुर्दशारञ्चेत्यभिप्रेतम्। व्योमबीजत्रयेण इत्यत्र व्योमबीजे त्रयञ्चेति विग्रहः। त्रयपदेन कोणत्रयात्मकत्वात् एकारः, बीजपदेन हकारौ ग्राह्यौ। अथवा, व्योमनी च बीजञ्चेति विगृह्य व्योमनीति हकारद्वयं, बीजपदेन एकारः, तस्य ब्रह्माण्डकटाहं प्रति बीजभूतत्वात्। हादिपक्षे तु व्योमबीजत्रयेणेति हकारत्रयमेव ग्राह्यम् इति न व्याख्याक्लेशः। सर्वसंक्षोभणसर्वाशापरिपूरके सकाराभ्यां जनिते। उक्तञ्च सरोरुहद्वयञ्च लार्क्कैः। शार्क्कैः सकाराभ्यामित्यर्थः। अक्षीणि शतिवत् बहुवचनम् लकारैश्चतुरस्राणि जनितानि इति विद्याक्षरैश्चक्रजनिः। देवताविद्याचक्रत्रितयेन गुरोरभेदः। तेन गणेशादिषड्रूपः श्रीगुरुः, तत्प्रसादेन स्वयं साधकोऽपि षड्रूपः।

'देव्या देहो यथा प्रोक्तो गुरुदेहस्तथैव च।
तत्प्रसादाच्च शिष्योऽपि तद्रूपः सम्प्रकाशते॥'

इत्युक्तत्वात्। अत्र यद्यपि गणपदस्य समुदायार्थवस्य समुदायिसापेक्षत्वेन समुदायिना देवणाक्षररेखाणां भेदे तद्भेदस्यावश्यकत्वं नक्षत्रत्वादेरपि संख्यामात्रस्यानुगमकत्वेऽपि संख्यावतां विरुद्धधर्माधिकरणत्वेन भेदस्य संख्यावतां सम्मतत्वेन भिन्नाभिन्नत्वात्तेन च नैकस्यापि धर्मस्याभेदव्यापकतेति कथमभेदः स्यादितीयं शङ्का समुदेति, तथापि वचनबलादेव समुदायिनां सङ्ख्यावताञ्चाभेदस्य सिद्धत्वात् समाधानम्। उपक्रमादिनिर्णीततात्पर्य्यकस्य शब्दस्य प्रत्यक्षादिनिखिलप्रमाणेभ्योऽपि बलवत्तायाश्चन्द्रप्रादेशिकत्वभ्रमादावन्यत्र चौपनिषदैर्बहुतरं साधित्वात्। इत्थं त्रिपुराम्बा विद्या चक्रं गुरुः स्वयञ्चेति पञ्चानामपि भेदभावो मन्त्रस्य कौलिकोऽर्थः।

सर्वरहस्यार्थ उच्यते—ककारादिभिर्द्वादशभिरानुलोम्येन मकारादिभिः प्रातिलोम्येन द्वादशभिश्च युक्ताः सूर्यस्य तापिन्यादयो द्वादश कलाः, षोड-

शभिः स्वरैर्युक्ताः सोमस्यामृतादयः षोडशकलाः, यकारादिभिर्दशवर्णैर्युक्ता वन्हेर्धूम्रार्चिरादिकलाः। एवं, रविशशिवह्निकलाभिराकीर्णैः पञ्चाशद्भिर्वर्णैरभिन्नाकुलकुण्डलिनी विसतन्तुतनीयसी विद्युत्पुञ्जप्रख्या मूलाधारस्थपद्म-कर्णिकास्थशृंगाटरूपा त्रिकोणादुपरि बिन्दुरूपं ज्योतिर्लिङ्गमावेष्ट्य सार्धत्रिवलयाकारेणाधोमुखी समुपविष्टा योगमर्य्यादया योगिभिरूर्ध्वमुख-तयोत्थाप्यते। सा चोत्थिता मूलाधारानाहताज्ञाचक्रेषु वह्निसूर्यसोममण्ड-लानि भित्वा व्योम्नि ललाटोर्ध्वप्रदेशे विद्यमानस्य चिच्छशिमण्डलस्याधो-मुखसहस्रारकर्णिकारूपस्य मध्ये स्थितयाऽकुलकुण्डलिन्या सङ्गम्य ततोऽमृत-पूरं स्रावयित्वा डाकिन्यादिमण्डलान्याप्लावन्यती स्वयमपि तत्पानमत्ता भूत्वा पुनस्तेनैव सुषुम्नामार्गेण परावृत्य स्वस्थाने सुखं स्वपिति। सर्व-मेतद्योगगम्यम्। अन्येसान्तु परोक्षज्ञानगोचर एव ईदृश्याः कुण्डलिन्याः मातुर्विद्यायाः स्वस्य चाभेद इति रहस्यरूपोऽर्थः।

महातत्त्वार्थः प्रोच्यते—जातिगुणक्रियासम्बधादिशून्ये वाचामगोचरे सर्वेन्द्रियागम्ये मनसोऽप्यविषये वेदान्तमहातात्पर्यविषये शिवादिक्षित्यन्त-षट्त्रिंशतत्त्वातीते महतो महीयसि तथैवाणोरणीयसि निरुक्तलक्षणव्यो-म्नोऽप्युपरि स्थितिमति उपासनार्थकल्पितस्थानविशेणोपलक्षिते विश्वाधि-ष्ठाने स्वप्रकाशे चित्सुखस्वरूपे परे ब्रह्मणि स्वात्मा नियोज्यः, प्रत्यक् चैतन्याभिन्नपरब्रह्मावबोधेन भेदकाज्ञाननिवर्तनद्वारा तदात्मनावस्थिति-र्विधेया, 'ब्रह्म वेद ब्रह्मैव भवति' इति श्रुतेः। सकलतत्त्वमूलभूतत्वादयं महातत्त्वार्थ उच्यते।

नामार्थशब्दरूपार्थौ चोच्येते—तत्तद्वर्णार्थत्वात्तद्वर्णस्वरूपा च श्रीविद्ये-त्येव नामार्थशब्दरूपार्थौ। विद्यायामष्टपञ्चाशद्वर्णाः सप्तत्रिंशद्वर्णाःपञ्चाशद्वर्णा विभिन्नरीत्या गृह्यन्ते। सर्वेषां ब्रह्मवाचकत्वेन सामानाधिकरण्येनान्वयः, पक्षत्रयेऽपि ककारादीनामन्यतमस्य ब्रह्मवाचकत्वाद् अन्येषां वर्णानां वैयर्थ्य-परिहारस्तु विश्वप्रकाशकोशादिरीत्या तत्तदक्षराणामनेकार्थवाचकत्वेन योग्यतानुसारेणार्थकरणात्कार्यः। भूयोऽपि पथ्यं वक्तव्यम् इति रीत्या

केषुचित्स्थलेषु पौनरुक्त्यं न दोषः। एवञ्च सर्वेषामक्षराणां तत्तद्वाचकत्वेन रूढ्यैव प्रत्यक्षरं सोर्लोपस्यावश्यकत्वेन प्रातिपदिकमात्रावशेषाद्वोपासकजनेषु प्रसिद्धत्वाद्वा सम्भाव्यत्वाद्वा परिभाषिकार्थरूपत्वाद्वा परिपक्वार्थरूपत्वाद्वा नामार्थ इति संज्ञा।

ननु ककारादिस्वरूपत्वं नामतः शब्दाभिन्नत्वम्। तथा च न स ककारस्यार्थः, शब्दस्वरूपे शक्त्यभावात्। नहि घटमानय इत्यादौ घटशब्दस्यानयनक्रियान्वयः। अत एव न शब्दार्थयोरभेदपक्षोऽपि युज्यते वह्न्यादिशब्दोच्चारणे मुखदाहाद्यापत्तेश्चेति चेन्न, शब्दस्य स्वरूपेऽपि शक्तेस्तन्त्रवार्त्तिकादावुक्तत्वात्। भर्तृहरिणाऽप्युक्तम्—

'ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते॥' ( व्रा० का० ) तथा ककारादिवर्णरूपेत्यादिमन्त्रार्थः। अत्र शब्दस्वरूपस्यैवार्थत्वेन वर्णनाच्छब्दरूपार्थोऽयमिति व्यपदिश्यते' इति।

नामैकदेशार्थो यथा 'ककाररूपा कल्याणी' इत्यादिना त्रिशत्यां पञ्चदशाक्षर्य्या एकैकनामाक्षरमादितः कृत्वा तादृशनामानि प्रत्यक्षरं विंशतिरुक्तानि। तान्येव त्रीणि शतानि भवन्ति। तानि च मन्त्राक्षराणामर्थप्रकाशनार्थं प्रवृत्तानि। तथा च ककारस्य 'ककाररूपा कल्याणी कल्याणगुणशीलिनीत्यादयो विंशतिरर्थाः। तेषु प्रसिद्धकोषव्याकरणादिरीत्या शक्तेरभावादेतद्बलादेव कल्पनस्यार्थापत्तिशरणत्वात् नामैकदेशे नामग्रहणमिति भीमो भीमसेनः, सत्या सत्यभामा इत्यादौ प्रसिद्धम्। तत्र च ककारादिनाम्नामानन्त्यात्ककारस्याप्यनन्तार्थत्वे प्राप्तेऽयं नियमः—एत एवार्था नान्य इति। तेषु च प्रत्यक्षरं प्रथमनाम्नां नामार्थशब्दार्थरूपार्थाभ्यां पौनरुक्त्यादिहैकोनविंशतिरेवार्था विवक्षिताः। तथा च नामैकदेशार्थोऽप्येकोनविंशतिविधः सम्पन्नः।

शाक्तार्थो द्विविधः—अवयवार्थः शक्तिसमूहार्थश्चेति। तत्रावयवार्थो नाम देव्या अवयवानां वर्णनम्। विद्यायां वाक्कूटेन किरीटमारभ्य कण्ठाधःपर्यन्तविग्रहः प्रतिपाद्यः, कामराजकूटेन कण्ठाधः कटिपर्यन्तविग्रहः प्रति-

पाद्यः, शक्तिकूटेन कट्यधः पादाग्रान्तो देहः प्रतिपाद्यः। तत एव वाच्य-वाचकयोरभेदविवक्षयोक्तं सहस्रनामसु 'श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा। कण्ठाधः कटिपर्य्यन्तमध्यकूटस्वरूपिणी। शक्तिकूटैकतापन्नकट्यधोभाग-धारिणी। मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा' इति।

शक्तिसमूहार्थः—वेधोभारत्यौ, माधवलक्ष्म्यौ, रुद्रपार्वत्यो रेफान्तवर्ण-षट्कस्यार्थाः। हृल्लेखायां हकाररेफयोर्विभज्य गणनात् प्रथमकूटे कामकलायाः प्राक्षड्वर्णाः भवन्तिः, ब्रह्माद्याः सकला अपि कामकला एव, न ततः पृथक्। तत एव ईकारेण सामानाधिकरण्यं, प्रत्यक्षरं विद्यमानानां सुपां लोपः, वाक्ये संहिताया अविवक्षणात् ईकारेण सह न सन्धिः। प्रथमकूटस्य यावा-नार्थः तावानेव द्वितीय-तृतीयकूटयोरप्यर्थः। परं द्वितीयकूटमध्यस्थो हकारः तृतीयकूटस्य प्रथमभागे सकारात्पूर्वं योजनीयः। तेन तयोरपि कूटयोः प्राति-स्विकं रेफान्ता वर्णाः षडेव भवन्ति। ततश्चोक्तरीत्यैवार्थवर्णनम्। अत्र प्रत्यक्षरमेकैकत्र शक्तिः तेन शक्तानामक्षराणामर्थः शाक्तार्थः।

कादिविद्यायां ककारास्त्रयः, हकारौ द्वौ, तेषां शिव एवार्थः, लकारा-स्त्रयः, सकारौ द्वौ तेषां शक्तिरर्थः। अतएव कामबीजे ककारलकारयो-र्योगः, पराप्रासादे हकारसकारयोर्योगः। शुद्धयोरचोः द्वितीय-तृतीययोरपि शक्तिरर्थः। हृल्लेखाया उभयसामरस्यात्मकं परब्रह्मैवार्थः। तत्रत्यव्यो-माग्नितुरीयस्वरबिन्दुभिः क्रमेण प्रकाशविमर्शसामरस्यतादात्म्यापन्नब्रह्मै-वार्थो बोध्यः। त्रिशत्यां तथैवोक्तम्—

'कत्रयं हृद्वयञ्चैव शैवो भागः प्रकीर्तितः।
शक्त्यक्षराणि शेषाणि ह्रीङ्कार उभयात्मकः॥ इति।

समस्तार्थः—कन्यते प्रकाश्यतेऽनेनेति कं प्रकाशकत्वं ककारस्यार्थः। औणादिकडप्रत्ययेन निष्पन्नम्। ईयते अधीयतेऽनेनेति ए बुद्धिः। इङ् अध्ययने इति धातुरधिपूर्वोऽपि। प्रकृत आर्षत्वाद् तद्विमोकः, क्विपि कृते कित्वेऽपि गुणः, अध्ययनकरणं बुद्धिः। कर्मधारयेण प्रकाशमाना बुद्धिरिति तयोरर्थः। ईयते व्याप्नोतीति ई। सर्वत्रासन्धिरार्षः। तस्य लहरी आधि-

क्यम् । हकारोत्तरवर्तिनोऽकारस्य लोपे लह्री । माङ्माने इति धातोः क्विपि णिचि टिलोपे म् इति रूतम् । तथा च तन्निर्माणम् मकारार्थः । प्रकाशमानसूक्ष्ममतिव्यापनाधिक्यनिर्माणं प्रथमकूटार्थः । हन्यतेऽनेनेति हं शौर्यम् । सीयते सूयते इति वा सं द्रव्यम्, स्यतेः सुनोतेर्वा । काम्यते इति कम् स्रक्चन्दनवनितादिकम् । ह्वानं हः । हसकानां हः ओहाङ्गतौ । तस्य लह्र्याधिक्यम् । ईयते इति ई कीर्त्तिः । लह्री इत्यनेन प्रश्लिष्टः । तन्निर्मातीति म् । तथा च शौर्यधनस्रक्चन्दनवनितादिप्राप्त्यतिशयस्य कीर्तेश्च निर्माणमिति द्वितीयकूटार्थः । कूटद्वयस्य द्वन्द्वः । एते निर्माणे सम्यक् कलयतीति सकला । समिति मकारलोपः । हरति निखिलं जगदिति हृ सर्वजगत्संहर्त्री । ई दीप्तौ इति दीप्त्यर्थक ईकारश्च तत्र प्रश्लिष्टः । सृष्टिस्थितिदीप्तिकर्तृत्वं तदर्थः । हृकारेकारयोः कर्मधारये यणि ह्रीः उपलक्षणविधया पञ्चकृत्यकर्त्रीत्यर्थः । अथवा हरति सर्वं विषयीकरोतीति हृ । क्विप् आगमस्थानित्वात् न तुक् । तच्च दहराकाशम् । तत्र ईयते प्रकाशते इति ह्री निर्माणार्थकः मकारः । तेन ह्रीकारपदान्तस्य कर्मधारयः । मकारास्यानुस्वारत्वम् । चरमकूटे त्वनुस्वार एव विशेष्यः । ततश्च प्रकाशमानसूक्ष्मबुद्धिव्यापनशोर्यधनस्त्रीयशसामाधिक्यकर्तृ, निखिलजगत्सृष्ट्यादिकर्तृ, दहराकाशवर्ति, नादरूपं, चिद्रूपं, ब्रह्मेति समस्तमन्त्रार्थः सिद्धः ।

स्यतेरन्तकर्मवाचकत्वेऽप्यत्रोपभोगार्थकत्वम् । अध्ययनार्थकस्येङोऽत्राधे र्विमोकः । हरीत्यत्राकारलोपः । निर्माणार्थकस्य माङ्माने इत्यस्यानुस्वारत्वादिकम् । धातोर्बह्वर्थत्वात् बाहुलकत्वात् पृषोदरादित्वात् आकृतिगणत्वात् उणादिकल्पनात् छान्दसत्वात् सर्वमुपपादनीयम् । तदुक्तं वरिवस्यारहस्ये 'धातोर्बह्वर्थत्वाद्बहुबलग्रहणात् पृषोदरादित्वात् । आकृतिगणपाठेन स्वेच्छानुगुणादिकल्पनतः ॥ छन्दसि सर्वविधीनां वैकल्पिकतावशादमुष्य मनोः । सिद्धैःकथितेऽर्थेऽस्ति वैयाकरणानुशासनानुमतिः' ॥ इति अयमेवार्थः किञ्चिद्विस्तरेणान्यैराचार्यैरुक्तः । तथाहि—

कन्यन्ते प्रकाश्यन्ते शब्दार्थजालानि अनेनेति क । कनयतीति वा क । कद्दीप्तौ इति स्मरणात् आर्षत्वात् प्रगृह्यत्वेन प्रकृतिभावः । ईयते स्मर्यते

अधीयते वा सर्वा वेदशास्त्रादिकला अनेनेति ए। इक् स्मरणे इङ् अध्ययने इत्यस्मादौणादिके विचि वेरपृक्तस्येति वलोपे गुणे निपातत्वात् प्रगृह्यत्वेन प्रकृतिभावः। क च ए च कए। शब्दार्थजालावभासिनी वेदादिशास्त्राध्ययनस्मरणप्रयोजिका बुद्धिः। ईयते व्याप्नोतीति ई। ईङ् गताविति क्विपि नियतत्वात् प्रकृतिभावः। व्यापिनीत्यर्थः। लहरीत्यस्यपरोक्षतया लं ह्लीत्युक्तम्। 'परोक्षप्रिया हि देवाः' इति श्रुतेः। सर्वप्रकाशकबुद्धिव्यापिनी लहरी ल ह्लीत्याधिक्यमर्थः। मीयते इति माङ् माने शब्दे च इत्यस्मात् क्विपि परोक्षश्रुत्या लुप्ताकारत्वेन वा अनुस्वारत्वम्। तस्य निर्माणमर्थः। तथा च क ए ई ल ह्रीं शब्दार्थात्रद्योतकवेदादिशास्त्राध्ययनस्मरणप्रयोजकबुद्धिव्यापनाधिक्ययुक्ता स्वप्रकाशा संवित्। अनेन धर्मात्मकपुरुषार्थसाधनब्रह्मवर्चसा असमृद्धिनिवृत्तिसम्यग्बुद्धिर्निर्मितिरुक्ता। एतेनैव वाक्प्रवृत्तिजालनिमित्तत्वात् वाग्भवकूटत्वं ब्राह्मणवर्णोपास्यगायत्रीसारत्वञ्चोक्तम्। इष्टदेवताप्रकाशनात्मकत्वेन वाग्जालप्रवर्तकत्वादृग्वेदात्मकत्वम्।

हन्यते तापत्रयमनेनेति हः। तथा च शत्रुरोगादिलौकिकस्य दुष्कृतजन्यस्यामुष्मिकस्य च तापस्य निवृत्तिरुक्ता। सीयन्ते उपभुज्यन्ते सर्वधनकनकवाहनभूम्यादिसम्पत्प्रचया अनेनेति सः। स्यतेः सुनोतेर्वा अनुप्रत्यये सकलराजपरिच्छदजालमुच्यते। काम्यन्ते स्रक्चन्दनवनितादिविषयभोगा अनेनेति क ऐहिकामुष्मिकसकलविषयभोग उक्तः। हीयते प्राप्यते इति हः ओहाङ्गताविेत्यस्य रूपम्। हसानां हः। हसकहः तापनिवृत्त्यर्थकामभोगानां प्राप्तिः। तस्या लहरी आधिक्यम्। ईयते प्रकाश्यते कीर्तिजालं दिगन्तेषु अनेनेति ईः। गुणसन्ततिः। ई दीप्तावित्यस्यरूपम्। हसकहलह्लीश्च इश्च हसकलह्यः। तासां निर्मात्री स्वप्रकाशा संवित्। धातूनामनेकार्थत्वात्। निर्माणार्थकान्मा धातोरनुस्वारस्य निष्पत्तिः। अनेनार्थकामपुरुपार्थनिर्मितिरुच्यते। तस्मादेवास्य कामराजकूटत्वं क्षत्रियवर्णोपास्यमानत्रिष्टुप्छन्दःसारत्वम्। स्वकीयाभीष्टसाधककर्मजातविधायकत्वाद्यजुर्वेदात्मकत्वम्। सकलह्रीं सकलाभिरवयवैः शिवादितत्त्वैः चतुःषष्टिकला-

भिर्वा सहिता सकला। सम्यक्कलयतीति वा सकला। हरतीति ह्रीः संहृतिशक्तिः। हृञ् हरणे धातोः इ प्रत्यये बाहुल्याद् गुणाभावेन यणादेशः। ईयते प्रकाश्यते सर्वं जगत् अनयेति ई सृष्टिशक्तिः। इदन्ति सर्वेषां नियन्तृत्वे वर्तते इति इः स्थितिशक्तिः। इदि परमैश्वर्ये इत्यस्मात्क्विपि व्यञ्जनलोपे रूपसिद्धिः। ह्रीश्च ईश्च इश्च ह्रीः सवर्णदीर्घः। संहृतिसृष्टिस्थितिशक्तिः। अथवा हरति विहरति इति ह्रीः। धातूनामनेकार्थत्वात् हरतेर्विहरणार्थान् इन् प्रत्यये ह्रीः। यद्वा हृ इति क्विबन्तः लुप्तसकारशब्दः प्रपञ्चसंहृतिवाचकः। ई प्रकाशः आत्मैक्यगमनम्। ह्री सकलप्रपञ्चदेहेन्द्रियादिकं द्रवीकृत्य प्रकाशरूपैक्यगमकमित्यर्थः।

अथवा ई इत्यनेन हृत्पुण्डरीकदहराकाशस्थदीपशिखामध्ये स्थितो बोधात्मकप्रकाशस्वरूपपरमात्मैव विवक्षितः। 'तस्याः शिखायाः मध्ये परमात्मा व्यवस्थितः'। सकला च सा ह्री च सकल ह्री। इष्यते अत्यन्ताभीष्टत्वेन विरिञ्च्यादिचेतनवर्गैरिति ई। निरतिशयानन्दरूपाचितिः। व्यञ्जनलोपादिभिः सिद्धिः। तस्य प्रमितिरनुस्वाररूपेण लुप्ताकारेण मकारेण माधातुनिष्पन्नेन बोध्यते। तथा च स्वप्रकाशनिरतिशयानन्द स्वरूपब्रह्मात्मसाक्षात्कारजननीत्यर्थः। लक्षणया स्वप्रकाशप्रकाशपरमानन्दरूपिणीत्यपि। सकल ह्री शिवादिसर्वतत्त्वात्मिकाभिः कलाभिः चतुःषष्टिकलाभिश्च सहिता सृष्टिस्थितिसंहृतिकारिणी सर्वनियामिका सर्वेश्वरी निरतिशयानन्दरूपिणी राजराजेश्वरी श्रीमत्सिंहासनेश्वरी त्रिपुराम्बा विवक्षिता। अथवा ह्री च तत् ईंच ह्रीं। सकलञ्च तत्ह्रीञ्च सकल ह्रीं। सकलहृदाकाशवर्तिदीपशिखान्तर्गतनिरतिशयानन्दानुभवप्रकाशिका नादात्मिकाचिच्छक्तिः। अथवा म् इति नादानुकारि अव्ययम्। अनेन नादात्मकशुद्धचैतन्यरूपता उच्यते। अनेन मोक्षसाधननादलययोगानन्दानुभवः उक्तः। तस्मादेव शक्तिकूटत्वम्। चित्तनिरोधप्रधानत्वं वैश्योपास्यजगतीच्छन्दः सारत्वञ्च। सामवेदस्य। गानप्रधानत्वेन नादविलीनचित्तत्वाद् योगस्य सामवेदात्मकत्वम्।

मन्त्रार्थः—क ए ई ल ह्रीं ह स क ह ल ह्रीश्च सम्यक्कलयतीति कएईलह्रीं हसकहलह्रीं सकलह्रीं।

सर्वस्य मन्त्रस्यायमर्थः—शब्दार्थप्रकाशकवेदादिशास्त्राध्ययनस्मरण-प्रयोजकबुद्धिव्यापनलहरीयुक्तया स्वप्रकासंविदा अनिष्टनिवारणभोगभोग्या-दिप्राप्त्याधिक्यकीर्तिजालप्रयोगकगुणसन्ततिरचयित्री सर्वतत्त्वसर्वकला-धिष्ठात्री विश्वोत्पत्तिस्थितिसंहृतिजनकसर्वैश्वर्योपेतनिरतिशयानन्दानुभव-प्रकाशिका निरतिशयानन्दात्मकदहराकाशस्थपरमात्मस्वरूपिणी स्वप्रकाशा चिच्छक्तिः।

श्रयति-शक्तिरूपेण शिवमिति श्रीः। श्रीयते सर्वैर्गुणैरिति वा। श्रीयते सेव्यते परशिवेनापि या सा श्रीः। तां माति बोधयतीति। ह्रीं इति माया-बीजं हृल्लेखाया बोधकम्। क्लीं इति कामबीजं सर्वार्थप्रापकम्। ऐं इति वाग्भवबीजं सर्वार्थविद्योतकम्। सौरीति ब्रह्मविद्या स्वरूपिण्याः परायाः बोधकम्। प्रणवः वाच्यार्थलक्ष्यार्थभेदेन सगुणनिर्गुणवेदान्तवेद्यपरतत्त्व-बोधकम्। पुनश्च ह्रीं इति सर्वशक्तिसर्वाधिष्ठानब्रह्मबोधकम्। श्रीमिति सर्वैश्वर्यसर्वमाधुर्यतदधिष्ठानबोधकम्। प्रतिलोमक्रमेणेमान्येव बीजानि पञ्च-दश्याः परस्तात् सान्तिबीजैः सहितं कूटत्रयं षोडशी सम्पद्यते। सगुणार्थश्च कः पजापतिः, एकारो विष्णुः। तदुत्तरवर्तिनमकारं प्रश्लिष्य ईशस्तदर्थो ग्राह्यः। ईड्यते इति इड्। एतस्य ऋग्वेदात्मकत्वात् अज्द्वयमध्यगतस्य डकारस्य स्थाने ळकार आदेशः। 'अग्निमीळे पुरोहितमित्यादि'वत्। द्वयोश्चास्यस्वरयोर्मध्यमेत्य सम्पद्यते स डकारो ळकार इति प्रातिशाख्यम्। ततएव द्वितीयतृतीयकूटयोर्यजुःसामात्मकत्वञ्च। यद्यपि कामो योनिः कमला वज्रपाणिरित्यत्र वज्रपाणिशब्देन लकार एवोद्धृतः तथापि डलयोरभेदा-भिप्रायेणादोषः। क्वचिच्चत्रिखण्डीगतास्त्रयोऽपि मोहार्णपदेन-लकारा एवोद्-धृताः। ह्रीं इति विशेष्यम्। नपुंसकं नाम ब्रह्मलक्षकम्। तेन विधिहरि-गिरिशैरीड्यं ब्रह्मेति प्रथमकूटार्थः। हसः हास्यम् अर्थं आदित्वादचि हसो हास्ययुक्तः को मुखं यस्य, अथवा हासस्यानन्दजन्यत्वात् आनन्दे हसपदस्य लक्षणा। कश्च हश्च कहौ चन्द्रौ सूर्यौ लौ नेत्रे यस्य तत् कहलम्। 'मुखे सूर्येऽपि कः स्मृतः' 'हः कोपे वरुणे चन्द्रे' 'इन्द्रे लोचने लः स्यात्' इत्ये-

काक्षरनिघण्टुः । हसकहलपदयोः कर्मधारयः । प्रकाशकत्वाच्चिद्रूपता । ततो हसद्वदन रवीन्दुनेत्रम् आनन्दचिद्रूपं वा विधिहरिगिरिशेड्यत्वे तेनामितानन्दं चिद्ब्रह्मेतिद्वितीयकूटार्थः । अतः प्रसन्नवदनं रवीन्दुनेत्रं आनन्दचिद्रूपं ब्रह्मातो विरिञ्च्यादिवन्द्यम् सकलकलाभिः सहितं सकलं ह्रीं ब्रह्मेति तृतीयकूटार्थः । गुणगणकथनाद्विद्यायाः सगुणार्थः ।

महावाक्यार्थः—विधिहरिशिवबोधकाः कए अ (प्रश्लिष्टाकारः) एते वर्णाः सृष्टिस्थितिभङ्गजनकदेवतावाचकत्वात् तल्लक्षकाः। नामैकदेशन्यायेन ईश्वरवाचीकारः सदाशिववाचको डकारः (लकारः) ताभ्यां तिरोधानानुग्रहौ लक्षितौ । एतेन 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिषूक्तं ब्रह्मणस्तटस्थलक्षणमिहोक्तम् । तेन सृष्टिस्थितिलयतिरोधानानुग्रहपञ्चकृत्यकारणं ब्रह्मेति प्रथमकूटार्थः । हस आनन्दः कं सत्यं हं अनन्तं लं ज्ञानं 'सखा कश्च वुधैःप्रोक्तः' इति कोशात् । सखिवाचकस्य ककारस्य सखित्वमाप्तत्वं यथार्थवक्तृत्वमिति रीत्या सत्यमर्थः । हकारस्य व्योमबीजत्वात्तस्यानन्तत्वादानन्त्यमर्थः । लोचनवाचित्वाल्लकारस्य ज्ञानमर्थः । एतेन स्वरूपलक्षणं ब्रह्मद्वितीयकूटार्थः । एवं ब्रह्म तटस्थस्वरूपलक्षणयुगेन निर्णीय तदभेदो जीवगणे तृतीयकूटेनोच्यते । सकलपदं जीवपरम् । शक्तिबीजं ब्रह्मपरम् । सामानाधिकरण्यात् लक्षिताशुद्धयोरभेदो बोध्यते । यथा 'तत्त्वमसीति' महावाक्ये तत्त्वंपदार्थयोरेकविभक्तिकत्वरूपसामानाधिकरण्याद् अभेदो बोध्यते स च वाच्यार्थयोरसम्भवात् भागत्यागलक्षणया लक्ष्यपदार्थयोरभेदो बोध्यते । तथैवात्र तत्पदवाच्यः सृष्ट्यादिकृत्यपञ्चकजनकः स एव यतो वा इमानीति श्रुत्युक्तः । लक्ष्यार्थस्तु सर्वकृत्यातीतं निर्विशेषं ब्रह्म । तदपि 'सत्यं ज्ञानमनन्तं' ब्रह्मेत्यत्रोक्तम् । एवं त्वंपदवाच्यार्थो जाग्रदाद्यवस्थापञ्चकविशिष्टः । स च तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संल्यायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति तद्यथा महामत्स्य इत्यादिभिरुक्तः । लक्ष्यार्थस्तु अवस्थातीतं ब्रह्म तदपि योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः, न दृष्टेर्द्रष्टारं पश्येः

इत्याद्युक्तम् । एवमवान्तरवाक्यैर्वाच्यार्थलक्ष्यार्थयोर्निर्णये सति महावाक्ये लक्ष्यार्थयोरभेदबोधः । प्रकृते तृतीयकूटस्थसकलपदेन कलाभिरवस्थाभिः सहितः इत्यर्थकेन वाच्यार्थस्योक्तावपि लक्ष्यार्थानुक्तेर्न्यूनता भाति तथापि कूटद्वय-वृत्त्या त्वंपदस्य वाच्यार्थलक्ष्यार्थपरत्वेनादोषात् । तृतीयकूटेन सर्वं खल्विदं ब्रह्मेति श्रुत्यर्थो वा बोध्यते । सर्वं जगत् देवीरूपमित्यर्थः । एवं वरिवस्यारहस्ययोगिनीहृदयस्वच्छन्दसंग्रहकामकलाविलासादिरीत्या पञ्चदश्याः षोडश्याश्च संक्षेपेणार्था उक्ता इति तेन ।

श्रीराजराजेश्वरी सुप्रीताऽस्तु श्रीकरपात्रस्वामिविरचिते ।
श्रीविद्यारत्नाकरे श्रीविद्यामन्त्रभाष्यं सम्पूर्णम् ।



## अथ वाञ्छाकल्पलता

श्रीगुरुभ्यो नमः। श्रीगणेशाय नमः। श्रीक्षेत्रपालाय नमः। श्रीसरस्वत्यै नमः। श्रीमत्त्रिपुरसुन्दर्यै नमः। मूलमुच्चार्य। तालत्रयं कृत्वा। मूलेन प्राणायामत्रयं कृत्वा।

ॐ अस्य श्रीवाञ्छाकल्पलताविद्यागणेशस्य मनोर्नानासूक्तसमूहस्य, आनन्दभैरवगणकाङ्गिरसकश्यपवशिष्ठविश्वामित्रसंवनना ऋषयः, देवीगायत्रीनिचृद्गायत्रीपङ्क्त्यनुष्टुप्निचृत्त्रिष्टुब्जगत्यश्छन्दांसि, श्रीमन्महात्रिपुरसुन्दरीमहागणपतिसम्वादाग्न्यमृतरुद्रा देवताः, श्रीं बीजम्, ह्रीं शक्तिः, क्लीं कीलकम्, मम श्रीमहागणपतिमहात्रिपुरसुन्दरीसम्वादाग्न्यमृतरुद्रप्रसादवाञ्छितार्थफलप्रसिद्धये वाञ्छाकल्पतोपस्थाने विनियोगः। इति सङ्कल्प्य।

आनन्दभैरवगणकाङ्गिरसकश्यपवशिष्ठविश्वामित्रसंवननऋषिभ्यो नमः शिरसि, देवीगायत्रीनिचृद्गायत्रीपंक्त्यनुष्टुप्निचृत्त्रिष्टुब्जगतीछन्देभ्यो नमः मुखे, महाश्रीमन्महात्रिपुरसुन्दरी गणपतिसंवादाग्न्यमृतरुद्रदेवताभ्यो नमः हृदये, श्रीं बीजाय नमो नाभौ, ह्रीं शक्तये नमो गुह्ये, क्लीं कीलकायनमः आधारे, इति न्यस्य मूलेन व्यापकं चरेत्।

ॐ श्रीं ह्रीं क्लीं ग्लौं गं क ए ई ल ह्रीं गणपतये हसकहलह्रीं वरवरद सकलह्रीं सर्वजनं मे वशमानय स्वाहा। इति त्रिचत्वारिंशदर्णोमनुः।

ऐं क्लीं सौः श्रीमत्त्रिपुरसुन्दरी ११ ह्रीं सर्वज्ञायै ह्रां गां ब्रह्मात्मने अङ्गुष्ठाभ्यां नमः। ऐं० ११ ह्रीं नित्यतृप्तायै ह्रीं गीं विष्ण्वात्मने तर्जनीभ्यां स्वाहा। ऐं० ११ ह्रीं अनादिबोधितायै ह्रूं गूं रुद्रात्मने मध्यमाभ्यां वषट्। ऐं० ११ ह्रीं स्वतन्त्रायै ह्रैं गैं ईश्वरात्मने अनामिकाभ्यां हुम्। ऐं० ११ ह्रीं नित्यमलुप्तायै ह्रौं गौं सदाशिवात्मने कनिष्ठिकाभ्यां वौषट्। ऐं० ११ ह्रीं अनन्तायै ह्रः गः सर्वात्मने करतलकरपृष्ठाभ्यां फट्। एवं हृदयादिन्यासं विधाय पुनर्मूलेन त्रिर्व्याप्य ध्यायेत्। यथा—

हेमाद्रौ हेमपीठस्थितिममरगणैरीड्यमानां विराजत्—
पुष्पेष्विक्ष्वासिपाशाङ्कुशकरकमलां रक्तवेषातिरक्ताम् ।
दिक्षूद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्यैकविद्याम्,
स्वस्थां क्लृप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे ॥१॥
बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल—
श्रीह्यग्रस्वविषाणरत्नकलशप्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरया, श्लिष्टो ज्वलद्भूषया,
विश्वोत्पत्तिविपत्तिसंस्थितिकरो विघ्नेश इष्टार्थदः ॥२॥
धवलनलिनराजच्चन्द्रमध्ये निषण्णम्, करधृतवरपाशं साभयं साङ्कुशञ्च ।
अमृतवपुषमिन्दुक्षीरवर्णं त्रिनेत्रम्, प्रणमत सुरवन्द्यं मङ्क्षु सम्वादयन्तम् ॥३॥
स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा गलदमृतरसार्द्रं चन्द्रवह्न्यर्कनेत्रम् ।
स्वकरकलितमुद्रावेदपाशाक्षमालम्, स्फटिकरजतमुक्तागौरमीशं नमामि ॥४॥

(मुद्रा ज्ञानमुद्रेत्यर्थः) ।

इति ध्यात्वा, मुद्रा प्रदर्श्य—

श्रीमन्महात्रिपुरसुन्दरी महागणपतिसम्वादाग्न्यमृतरुद्रेभ्यः लं पृथिव्यात्मकं गन्धं समर्पयामि नमः इति अङ्गुष्ठकनिष्ठिकाभ्याम् । श्रीमन्महात्रिपुरसुन्दरीमहागणपतिसंवादाग्न्यमृतरुद्रेभ्यः हं आकाशात्मकं पुष्पं समर्पयामि नमः इति तर्जन्यङ्गुष्ठाभ्याम् । श्रीमन्महात्रिपुरसुन्दरीमहागणपतिसंवादाग्न्यमृतरुद्रेभ्यः यं वाय्वात्मकं धूपं समर्पयामि नमः इति अङ्गुष्ठतर्जनीभ्याम् । श्रीमन्महात्रिपुरसुन्दरी महागणपतिसंदाग्न्यमृतरुद्रेभ्यः रं वह्न्यात्मकं दीपं समर्पयामि नमः इति अङ्गुष्ठमध्यमाभ्यां । श्रीमन्महात्रिपुरसुन्दरीमहागणपतिसंवादग्न्यमृतरुद्रेभ्यः वं अमृतात्मकं नैवेद्यं समर्पयामि नमः अङ्गुष्ठानामिकाभ्याम् । श्रीमन्महात्रिपुरसुन्दरीमहागणपतिसंवादाग्न्यमृतरुद्रेभ्यः सं सर्वात्मकं सर्वोपचारं समर्पयामि नमः इति संहताभिः सर्वाङ्गुलीभिः दद्यात् । एवं मानसोपचारैः सम्पूज्य, गुरुदेवतात्मनामैक्यं भावयित्वा । रात्रौ अन्त्ययामे सूर्योदयात्पूर्वं शनैः शनैः जपेत् ।

(१) ॐ ऐं ह्रीं श्रीं "ई"

(२) ॐ ऐं ह्रीं श्रीं परोरजसे सावदोम्,

(३) ॐ ऐं ह्रीं श्रीं हसकल हसकहल सकलह्रीं, प्रत्येकं दशवारं जपित्वा,

ॐ ऐं श्रीं ह्रीं लं क्लीं ग्लौं गं गुगुरीं कएईलह्रीं हसकहलह्रीं सकलह्रीं ऐं क्लीं सौः २९। यदद्यकच्चवृत्रहन्नुदगा अभिसूर्यं सर्वं तदिन्द्र ते वशे २३। गं क्षिप्रप्रसादनाय गणपतये वर वरद आं ह्रीं क्रों सर्वजनं मे वशमानय स्वाहा सौः क्लीं ऐं। ३६ ॥१॥

ॐ ऐं....सौः २९। तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् २३। गं....ऐं ३६ ॥२॥

ॐ ऐं....सौः २९। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव वन्धनान्मृत्योर्मुक्षीय मामृतात् ३२। गं....ऐं ३६ ॥३॥

ॐ ऐं....सौः २९। जातवेदसे सुनवाम सोममरातीयतो निदहादि वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ४३। गं....ऐं ३६ ॥४॥

ॐ ऐं....सौः २९। समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम्। समानं मन्त्रमभिमन्त्रये वः समानेन वो हविषा जुहोमि ४४। गं....ऐं ३६ ॥५॥

ॐ ऐं....सौः २९। सं समिद्युवसे वृषन्नग्ने विश्वान्यर्य आ इळस्पदे समिध्यसे स नो वसून्याभर ३०। गं....ऐं ३६ ॥३६॥

ॐऐं....सौः २९। समानो....जुहोषि ४४॥ गं....ऐं ३६ ॥७॥

ॐऐं....सौः २९। जात....त्यग्निः ४३॥ गं....ऐं ३६ ॥८॥

ॐऐं....सौः २९। त्र्यम्ब....मृतात् ३२॥ गं....ऐं ३६ ॥९॥

ॐऐं....सौः २२। तत्स....यात् २३॥ गं....ऐं ३६ ॥१०॥

ॐएं....सौः २९। यदद्य....वशे २३॥ गं....ऐं ३६ ॥११॥

ॐऐं....सौः २९। गणानां त्वा गणपतिं हवामहे कविं कविनामुपश्रवस्तमम्। ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीदसादनम् ४८॥ गं....ऐं ३६ ॥१२॥

ॐ भूः भद्रं नो अपिवातयः मनः। ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यत्वनुकूलं मे वशमानय वशमानय स्वाहा ॥१३॥

दमयन्तीनलाभ्याञ्च नमस्कारं करोम्यहम्।
अविवादो भवेदत्र कलिदोषप्रशान्तिदः॥
ऐकमत्यं भवेदेषां ब्राह्मणानाम् पृथग्धियाम्।
निर्वैरिता च जायेत संवादाग्ने! प्रसीद मे॥

इति प्रथमः पर्यायः

ॐऐं""सौः २९। यदद्य""वशे २३॥ गं""ऐं ३६ ॥१॥
ॐऐं""सौः २९। तत्स""यात् २३॥ गं""ऐं ३६ ॥२॥
ॐऐं""सौः २९। त्र्यम्ब""मृतात् ३२॥ गं""ऐं ३६ ॥३॥
ॐऐं""सौः २९। जात""त्यग्नि ४३॥ गं""ऐं ३६ ॥४॥
ॐऐं""सौः २९। समा""होमि ४४॥ गं""ऐं ३६ ॥५॥

ॐऐं""सौः २९। संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्। देवा भागं यथा पूर्वे सञ्जानाना उपासते ३२॥ गं""ऐं ३६ ॥६॥

ॐऐं""सौः २९। समा""होमि"" ४४॥ गं""ऐं ३६ ॥७॥
ॐऐं""सौः २९। जात""त्यग्नि"" ४३॥ गं""ऐं ३६ ॥८॥
ॐऐं....सौः २९। त्र्यम्ब....मृत्तात् ३२॥ गं....ऐं ३६ ॥९॥
ॐऐं....सौः २९। तत्स....यात् २३॥ गं....ऐं ३६ ॥१०॥
ॐऐं....सौः २९। यद्यश वशे २३॥ गं....ऐं ३६ ॥११॥

ॐऐं....सीः २९। अग्गेमन्युं प्रतिनुदन् परेषामदब्धो गोपाः परिपाहि नस्त्वम्। प्रत्यञ्चो यन्तु निगुतः पुनस्ते मैषां चित्तं प्रवुधां विनेशत् ४३॥ गं....ऐं ३६ ॥१२॥

ॐ भुवः मरुतामोजसे स्वाहा॥ १३॥ ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यत्वनुकूलं मे वशमानय वशमानय स्वाहा॥

दमयन्तीनलाभ्यां च नमस्कारं करोम्यहम् ।
अविवादो भवेदत्र कलिदोषप्रशान्तिदः ॥
ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धियाम् ।
निर्वैरिता च जायेत संवादाग्ने ! प्रसीद मे ॥

इति द्वितीयः पर्यायः

ॐऐं....सौः २९ । यदद्य....वशे २३ ॥ गं....ऐं ३६ ॥१॥
ॐऐं....सौः २९ । तत्स....यात् २३ ॥ गं....ऐं ३६ ॥२॥
ॐऐं....सौः २९ । त्र्यम्ब....मृतात् ३२ ॥ गं....ऐं ३६ ॥३॥
ॐऐं....सौः २९ । जातः....त्यग्निः ४३ ॥ गं....ऐं ३६ ॥४॥
ॐऐं....सौः २९ । समा....होमि ४४ ॥ गं....ऐं ३६ ॥५॥
ॐऐं....सौः २९ । समा....होमि ४४ ॥ गं....ऐं ३६ ॥६॥
ॐऐं....सौः २९ । समा....होमि ४४ ॥ गं....ऐं ३६ ॥७॥
ॐऐं....सौः २९ । जातः....त्यग्नि ४३ ॥ गं....ऐं ३६ ॥८॥
ॐऐं....सौः २९ । त्र्यम्ब....मृतात् ३२ ॥ गं....ऐं ३६ ॥९॥
ॐऐं....सौः २९ । तत्स....यात् २३ ॥ गं....ऐं ३६ ॥१०॥
ॐऐं....सौः २९ । यदद्य....वशे २३ ॥ गं....ऐं ३६ ॥११॥

ॐऐं....सौः २९ । यो मामग्ने भागिनं सन्तमथाभागं चिकीर्षति । अभागमग्ने तं कुरु मामग्ने भागिनं कुरु स्वाहा ३६ ॥ गं....ऐं ३६ ॥१२॥

ॐ स्वः इन्द्रो विश्वस्य राजति ॥१३॥ ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यत्वनुकूलं मे वशमानय वशमानय स्वाहा ।

दमयन्तीनलाभ्याञ्च नमस्कारं करोम्यहम् ।
अविवादो भवेदत्र कलिदोषप्रशान्तिदः ॥
ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धियाम् ।
निर्वैरिता च जायेत संवादाग्ने प्रसीद मे ॥

इति तृतीयः पर्यायः

ॐऐं....सौः २९। यदद्य....वशे २३॥ गं....ऐं ३६ ॥१॥
ॐऐं....सौः २९। तत्स....यात् २३॥ गं....ऐं ३६ ॥२॥
ॐऐं....सौः २९। त्र्यम्ब....मृतात् ३२॥ गं....ऐं ३६ ॥३॥
ॐऐं....सौः २९। जात....त्यग्नि ४३॥ गं....ऐं ३६ ॥४॥
ॐऐं....सौः २९। समा....होमि ४४॥ गं....ऐं ३६ ॥५॥
ॐऐं....सौः २९। समानी व आकूति समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति ३१॥ गं....ऐं ३६ ॥६॥
ॐऐं....सौः २९। समा....होमि ४४॥ गं....ऐं ३६ ॥७॥
ॐऐं....सौः २९। जात....त्यग्निः ४३॥ गं....ऐं ३६ ॥८॥
ॐऐं....सौः २९। त्र्यम्ब....मृतात् ३२॥ गं....ऐं ३६ ॥९॥
ॐऐं....सौः २९। तत्स....यात् २३॥ गं....ऐं ३६ ॥१०॥
ॐऐं....सौः २९। यदद्य....वशे २३॥ गं....ऐं ३६ ॥११॥

ॐऐं....सौः २९। अजैष्माद्यासनाम चा भूमा नागसो वयम् जाग्रत्स्वप्नः सङ्कल्पः पापो यं द्विष्मस्तं स ऋच्छतु यो नो द्वेष्टि तमृच्छतु ४०॥ गं....ऐं ३६ ॥१२॥

ॐ भूर्भुवः स्वः शन्नो अस्तु द्विपदे शं चतुष्पदे ॥१३॥ ॐ ह्रीं वं ठं अमृतरुद्राय आं ह्रीं क्रों प्रतिकूलं मे नश्यत्वनुकूलं मे वशमानय वशमानय स्वाहा।

दमयन्तीनलाभ्याञ्च नमस्कारं करोम्यहम्।
अविवादो भवेदत्र कलिदोषप्रशान्तिदः॥
ऐकमत्यं भवेदेषां ब्राह्मणानां पृथग्धियाम्।
निर्वैरिता च जायेत संवादग्ने प्रसीद मे॥

इति चतुर्थः पर्यायः

इति जपित्वा,

गुह्यातिगुह्यगोप्त्रीत्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु देवेशि, त्वत्प्रसादान्महेश्वरि॥

इति जपं निवेदयेत्॥

एवं प्रत्यहं निशान्ते चतुर्वारं पठेत् ॥ सर्वैश्वर्यं भवति ॥ सर्ववेदान्त-फलमश्नुते । इति शम् ॥

॥ इतिवाञ्छाकल्पलताप्रयोगः समाप्तः ॥

अथ श्रीवाञ्छाकल्पलता—विधानम्

प्रजपेदिष्टसिद्ध्यर्थं विद्याग्रहणसंयुतः ।
तद्भवेद् वेदिकामन्त्रः भेदेनेत्यर्थविद्यया ॥
अष्टवारं जपेन्नित्यं सर्वाभीष्टमवाप्नुयात् ।
जपेत् षोडशसाहस्रं तर्पणाहुतियोगतः ॥२॥
श्रीविद्यायास्तु साधर्म्यं साधयेत्साधितो मनुः ।
पुरश्चर्याविधानेन साधकः सर्वदा जपेत् ॥३॥
तत्सर्वं लभते नित्यं वाञ्छाकल्पलतामनोः ।
इत्येतत्कथितं गुह्यं भुक्तिमुक्तिप्रदायकम् ॥४॥
जपेत्षोडशसाहस्रं षट्साहस्रमथापि वा ।
पायसेन हुनेद्देवि नारिकेलफलैस्तिलैः ॥५॥
असाध्यं साधयेल्लोके अवश्यं वशमाप्नुयात् ।
किमत्र बहुनोक्तेन सर्वान् कामानवाप्नुयात् ॥६॥

(इतिकुमारसंहितायाम्)

(तन्त्रान्तरे)

वाञ्छाकल्पलतायास्तु न होमो न च तर्पणम् ।
स्मरणादेव सिद्धिःस्यात् यदिच्छति हि तद्भवेत् ॥१॥
एकावृत्त्या वशे लक्ष्मीः पञ्चावृत्त्या वशं जगत् ।
दशावृत्त्या तथा विष्णुरुद्रशक्तिर्भवेदिह ॥२॥
सार्वभौमः शतावृत्त्या भवत्येव न संशयः ।

(प्रयोगपारिजातात्)

आवर्तनत्रयाल्लक्ष्मीः पञ्चावृत्त्या वशं जगत् ।
दशावृत्त्या शिवादीनाम् देवानां शक्तिभाग्भवेत् ॥१॥
लक्षावृत्त्या सार्वभौमः दरिद्रोऽपि न संशयः ।
नार्थवादोऽथर्वणस्य वसिष्ठवचनं यथा ॥२॥
एतज्जपस्य कालस्तु रात्रौ यामत्रयावधि ।
रात्रेश्चतुर्थप्रहरात् तथा सूर्योदयावधि ॥३॥

दैवात् प्रमादाद्वा एकस्मिन् दिने जपलोपे सति अनशनेन वाञ्छाकल्पलतामन्त्रस्य अष्टोत्तरशतावृत्तिपाठाः कर्तव्याः ।

इति शम्

# पूर्णाभिषेकविधानम्

## अथ श्रीविद्यार्णवादिरीत्या पूर्णाभिषेकः

विरच्य विपुलं चक्रं मण्डपेऽतिमनोरमे ।
खारीतोयभृतं कुम्भं स्थापयेच्चक्रमध्यतः ॥
अन्येषु कलशानन्यान् रत्नवस्त्रसमन्वितान् ।
दलेषु विधिवत्स्थाप्य तत्राऽऽवाह्येष्टदेवताम् ॥
अभ्यर्च्य मध्ये चान्येषु साङ्गावरणदेवताः ।
शिष्यस्य जन्मनक्षत्रे प्राग्वत्तैरभिषेचयेत् ॥

विहितकालेषु प्रातःस्नातः कृतनित्यक्रियः समलङ्कृतः पञ्चवाद्यघोष-पुरःसरं ब्राह्मणैः कृतस्वस्त्ययनो गुरुगृहं गत्वा प्रणम्य मधुपर्कादिनाऽभ्यर्च्य धौतोत्तरीयप्रच्छस्वर्णाङ्गुलियादिभूषणयज्ञोपवीतहरादिशय्यादिसम्पन्नां वर-णसामग्रीं निधाय पुरतो देशकालाद्युच्चार्य्यामुकोऽहं गुरुत्वेन त्वां वृणे इति गुरुं वृणुयात् । गुरुश्च वृतोऽस्मीति प्रतिवचनं दद्यात् । ततश्च स्वेष्टोपासकान् ऋत्विजो वृणुयात् तैः सार्द्धं भूतोत्सादनादिपूर्वकं चन्दनसर्षपदूर्वाभस्माक्ष-तलाजान् अस्त्रमन्त्रेण सप्तधाभिमन्त्रितान् मण्डपान्तर्विकीर्य्य अस्त्रमन्त्रेण कुशमुष्टिना सम्मार्ज्य पुण्याहवाचनं ब्राह्मणैः कारयित्वा सर्वतोभद्रमण्डला-दिकं कारयेत् ।

सप्तविंशतिभिः कुशैरेकीकृताग्रविरचितब्रह्मग्रन्थिकं कूर्चं निधाय श्रीचक्रं विपुलसिन्दूरादिभिर्निर्माय तत्र मध्ये वक्ष्यमाणविधिना शालिपुञ्जोपरि वह्निमण्डलं वह्निकलाश्च सम्पूज्य स्वर्णादिनिर्मितं त्रिगुणीकृतसूत्रवेष्टित-सर्वाङ्गं चन्दनागुरुकर्पूरधूपधूपितं मुख्यं कुम्भं प्रणवमुच्चरन् संस्थाप्य तत्रैवाष्टदलेषु रत्नवस्त्रसमन्वितानन्यान्कलशान् पूर्वादिदिक्षु चतुरः कलशान्-स्थापयेत् साङ्गावरणदेवतासङ्ख्याकान्वा कलशान्स्थापयेत् । सर्वतोभद्र-मण्डलोपरि वा षडस्रचतुरस्रेषु तदितरान् स्थापयेत् ।

तत्राऽष्टगन्धचूर्णं नवरत्ननिरूप्तमृत्तिकागङ्गादिसप्ततीर्थजलमेकपञ्चाशदक्षरौषधक्वाथञ्च निःक्षिपेत् अश्वत्थन्यग्रोधप्लक्षाशोकोदुम्बराम्रपल्लवान् कल्पलताबुद्धया निधाय नारिकेलफलानि चोपरि विन्यसेत् ।

तत्राष्टगन्धवस्तूनि यथा :—

'चन्दनागुरुकर्पूरकाश्मीरै रोचनान्वितैः । ससिह्लकं जटामांसी सटीभिः शक्तिसम्भवम् । गन्धाष्टकं शुभं वश्यं शक्तिमन्त्रेषु योजयेत् ।

काश्मीरं—कुङ्कुमम् । सिह्लकं-शिलारसः । सटी-कचोरः ।

"ह्लीबेरं चन्दनं कुष्ठमगरुं कुङ्कुमं मुरम् ।
सेव्यकं च जटामांसी वैष्णवं तदुदीरित्तम् ।"

ह्लीबेरं—वालकम् । सेव्यकमुशीरम् । मुरं-मोहरीति प्रसिद्धम् ।

मुरागन्धवती दैत्या गन्धाढ्या गन्धमादिनी ।
सुरभिर्भूतगन्धा च कुठी गन्धकुठी स्मृता ।
मुरा-एकाङ्गी छर्व्यु इति लोके प्रसिद्धा ।

'जलकाश्मीरकुष्ठैस्तु रक्तचन्दनचन्दनैः ।
तमालागरुकर्पूरैः शाम्भवं चाष्टगन्धकम् ॥'

जल-वालकम् ।

गन्धाष्टकस्य संयोगात्सामर्थ्याद्देशिकस्य च ।
सशक्तिकं जलं कुम्भे भवेदेव न संशयः ॥

(श्रीविद्यार्णवतन्त्र २९६)

मन्त्रवर्णौषधिनिर्मितमन्त्रवर्णसमह्वयाकानां गुटिकानां धारणं तद्भक्षणं विलेपनम् । ताभिः पूजा । तत्क्वाथजलैः स्नानं तद्भस्मधारणं कुर्यात्तेन मन्त्रसिद्धिः । प्रपञ्चसारे ३५।५२ श्लोकः ।

एकपञ्चाशताक्षरौषधयश्च—

चन्दनं रक्तचन्दनं अगरु-कर्पूर, उशीर-कुष्ठ-वाल कुङ्कुम-केशर-कंकोल जातीफल-जटामांसी-मुरा-चोरग्रन्थि गोरोचना-पत्रा-पिप्पल-बिल्व-पृश्निपर्णी-चित्रक-लवङ्ग-कत्तृण-कट्फल वन्द्रि-उदुम्बर-पाषाणभेद-पद्म शंखपुष्पी-

प्रवेशनिर्गमाकुलैः स्वकृत्यरत्नमानसै-
र्बहिःस्थितामरावलीविधीयमानभक्तिभिः ।
विचित्रवस्त्रभूषणैरुपेतमङ्गनाजनैः
सदा करोतु मङ्गलं ममेह रत्नमण्डपः ॥१४॥

सुवर्णरत्नभूषितैर्विचित्रवस्त्रधारिभिः
गृहीतहेमयष्टिभिर्निरुद्धसर्वदैवतैः ।
असंख्यसुन्दरीजनैः पुरःस्थितैरधिष्ठितो
मदीयमेतु मानसं त्वदीयतुङ्गतोरणः ॥१५॥

इन्द्रादींश्च दिगन्तरान्सहपरीवारानथो सायुधान्
योषिद्रूपधरान्स्वदिक्षु निहितान्सञ्चिन्त्य हृत्पङ्कजे ।
शङ्खे श्रीवसुधारया वसुमतीयुक्तश्च पद्मं स्मरन्
कामं नौमि रतिप्रियं सहचरं प्रीत्या वसन्तं भजे ॥१६॥

गायन्तीः कलवीणयाऽतिमधुरं हुङ्कारमातन्वती—
द्वाराभ्यासकृतस्थितीरिह सरस्वत्यादिकाः पूजयन् ।
द्वारे नौमि मदोन्मदं सुरगणाधीशं मदेनोन्मदां
मातङ्गीमसिताम्बरां परिलसन्मुक्ताविभूषां भजे ॥१७॥

कस्तूरिकाश्यामलकोमलाङ्गीं कादम्बरीपानमदालसाङ्गीम् ।
वामस्तनालिङ्गितरत्नवीणां मातङ्गकन्यां मनसा स्मरामि ॥१८॥

विकीर्णचिकुरोत्करे विगलिताम्बराडम्बरे
मदाकुलितलोचने विमलभूषणोद्भासिनी ।
तिरस्करिणि ! तावकं चरणपङ्कजं चिन्तयन्
करोमि पशुमण्डलीमलिकमोहमुग्धाशयाम् ॥१९॥

प्रमत्तवारुणीरसैर्विघूर्णमानलोचनाः
प्रचण्डदैत्यसूदनाः प्रविष्टभक्तमानसाः ।
उपोढकज्जलच्छविच्छटाविराजिविग्रहाः
कपालशूलधारिणीः स्तुवे त्वदीयदूतिकाः ॥२०॥

स्फूर्जन्नव्ययवाङ्कुरोपलसिताभोगैः पुरः स्थापितैः
दीपोद्भासिशरावशोभितमुखैः कुम्भैर्नवैः शोभिता ।
स्वर्णाबद्धविचित्ररत्नपटलीचञ्चत्कपाटश्रिया
युक्तं द्वारचतुष्टयेन गिरिजे वन्दे मणीमन्दिरम् ॥२१॥

आस्तीर्णारुणकम्बलासनयुतं पुष्पोपहारान्वितं
दीप्तानेकमणिप्रदीपसुभगं राजद्वितानोत्तमम् ।
धूपोद्गारिसुगन्धिसम्भ्रममिलद्भृङ्गावलीगुञ्जितं
कल्याणं वितनोतु मेऽनवरतं श्रीमण्डपाभ्यन्तरम् ॥२२॥

कनकरचिते पञ्चप्रेतासनेन विराजिते
मणिगणचिते रक्तश्वेताम्बरास्तरणोत्तमे ।
कुसुमसुरभौ तल्पे दिव्योपधानसुखावहे
हृदयकमले प्रादुर्भूतां भजे परदेवताम् ॥२३॥

सर्वाङ्गस्थितिरम्यरूपरुचिरां प्रातः समभ्युत्थितां
जृम्भामञ्जुमुखाम्बुजां मधुमदव्याघूर्णदक्षत्रयाम् ।
सेवायातसमस्तसन्निधिसखीस्सम्मानयन्तीं दृशा
सम्पश्यन् परदेवतां परमहो मन्ये कृतार्थं जनुः ॥२४॥

उच्चैस्तोरणवर्तिवाद्यनिवहध्वाने समुज्जृम्भिते
भक्तैर्भूमिविलग्नमौलिभिरलं दण्डप्रणामे कृते ।
नानारत्नसमूहनद्धकथनस्थालीसमुद्भासितां
प्रातस्ते परिकल्पयामि गिरिजे नीराजनामुज्ज्वलाम् ॥२५॥

पाद्यं ते परिकल्पयामि पदयोरर्घ्यं तथा हस्तयोः
सौधीभिर्मधुपर्कमम्ब मधुरं धाराभिरास्वादय ।
तोयेनाचमनं विधेहि शुचिना गाङ्गेन मत्कल्पितं
साष्टाङ्गप्रणिपातमीशदयिते दृष्ट्या कृतार्थीकुरु ॥२६॥

मातः पश्य मुखाम्बुजं सुविमले दत्ते मया दर्पणे
देवि स्वीकुरु दन्तधावनमिदं गङ्गाजलेनान्वितम् ।
सुप्रक्षालितमाननं विरचयन्स्निग्धाम्बरप्रोञ्छनं
द्रागङ्गीकुरु तत्त्वमम्ब मधुरं ताम्बूलमास्वादय ॥२७॥

निधेहि मणिपादुकोपरि पदाम्बुजं मज्जना-
लयं व्रज शनैः सखीकृतकराम्बुजालम्बनम् ।
महेशि करुणानिधे तव दृगन्तपातोत्सुकान्
विलोकय मनागमूनुभयसंस्थितान्देवतान् ॥२८॥

हेमरत्नवरणेन वेष्टितं विस्तृतारुणवितानशोभितम् ।
सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनो मम ॥२९॥

कनककलशजालस्फाटिकस्नानपीठाद्युपकरणविशालं गन्धमत्तालिमालम् ।
स्फुरदरुणवितानं मञ्जुगन्धर्वगानं परमशिवमहेले मज्जनागारमेहि ॥३०॥

पीनोत्तुङ्गपयोधराः परिलसत्सम्पूर्णचन्द्रानना-
रत्नस्वर्णविनिर्मिताः परिलसत्सूक्ष्माम्बरप्रावृताः ।
हेमस्नानघटीस्तथा मृदुपटीरुद्वर्तनं कौसुमं
तैलं कङ्कतिकां करेषु दधतीर्वन्देऽम्ब ते दासिकाः ॥३१॥

तत्र स्फाटिकपीठमेत्य शनकैरुत्तारितालङ्कृति—
र्नीचैरुज्झितकञ्चुकोपरिहिता रक्तोत्तरीयाम्बरा ।
वेणीबन्धमपास्य कङ्कतिकया केशप्रसादं मना-
क्कुर्वाणा परदेवता भगवती चित्ते मम द्योतताम् ॥३२॥

अभ्यङ्गं गिरिजे गृहाण मृदुना तैलेन सम्पादितं
काश्मीरैरगुरुद्रवैर्मलयजैरुद्वर्तनं कारय ।
गीते किन्नरकामिनीभिरभितो वाद्ये मुदा वादिते
नृत्यन्तीमिह पश्य देवि पुरतो दिव्याङ्गनामण्डलीम् ॥३३॥

कृतपरिकरबन्धास्तुङ्गपीनस्तनाढ्या
मणिनिवहनिबद्धा हेमकुम्भीर्दधानाः ।
सुरभिसलिलनिर्यद्गन्धलुब्धालिमालाः
सविनयमुपतस्थुस्सर्वतः स्नानदास्यः ॥३४॥

उद्गन्धैरगुरुद्रवैस्सुरभिणा कस्तूरिकावारिणा
स्फूर्जत्सौरभयक्षकर्दमजलैः काश्मीरनीरैरपि ।
पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरपाथोभरैः
स्नानं ते परिकल्पयामि गिरिजे भक्त्या तदङ्गीकुरु ॥३५॥

प्रत्यङ्गं परिमार्जयामि सुचिना वस्त्रेण संप्रोञ्छनं
कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ।
आलीवृन्दविनिर्मितां यवनिकामास्थाय रत्नप्रभं
भक्तत्राणपरे महेशगृहिणि स्नानाम्बरं मुच्यताम् ॥३६॥
पीतं ते परिकल्पयामि निबिडं चण्डातकं चण्डिके
सूक्ष्मं स्निग्धमुरीकुरुष्व वसनं सिन्दूरपूरप्रभम् ।
मुक्तारत्नविचित्रहेमरचनाचारुप्रभाभास्वरं
नीलं कञ्चुकमर्पयामि गिरिशप्राणप्रिये सुन्दरि ॥३७॥
विलुलितचिकुरेणच्छादितांसप्रदेशे मणिनिकरविराजत्पादुकान्यस्तपादे ।
सुललितमवलम्ब्य द्राक्सखीमंसदेशे गिरिशगृहिणि भूषामण्डपाय प्रयाहि ॥३८॥
लसत्कनककुट्टिमस्फुरदमन्दमुक्तावली समुल्लसितकान्तिभिः कलितशक्रचापव्रजे
महाभरणमण्डपे निहितहेमसिंहासनं सखीजनसमावृतं समधितिष्ठ
कात्यायनि ॥३९॥
स्निग्धं कङ्कतिकामुखेन शनकैस्संशोध्य केशोत्करं
सीमन्तं विरचय्य चारु विमलं सिन्दूररेखान्वितम् ।
मुक्ताभिर्ग्रंथितालकां मणिचितैस्सौवर्णसूत्रैः स्फुटं
प्रान्ते मौक्तिकगुच्छकोपलतिकां ग्रथ्नामि वेणीमिमाम् ॥४०॥
विलम्बिवेणीभुजगोत्तमाङ्गस्फुरन्मणिभ्रान्तमुपानयन्तम् ।
स्वरोचिषोल्लासितकेशपाशं महेशि चूडामणिमर्पयामि ॥४१॥
त्वामाश्रयद्भिः कवरीतमिस्रैर्बन्दीकृतं द्रागिव भानुबिम्बम्
मृडानि ! चूडामणिमादधानं वन्दामहे तावकमुत्तमाङ्गम् ॥४२॥
स्वमध्यनद्धहाटकस्फुरन्मणिप्रभाकुलं विलम्बिमौक्तिकच्छटाविराजितं समन्ततः
निबद्धलक्षचक्षुषा भवेन भूरि भावितं समर्पयामि भास्वरं भवानि
फालभूषणम् ॥४३॥
मीनाम्भोरुहखञ्जरीटसुषमा विस्तारविस्मारके
कुर्वाणे किल कामवैरिमनसः कन्दर्पबाणप्रभाम् ।
माध्वीपानमदारुणेऽतिचपले दीर्घे दृगम्भोरुहे
देवि ! स्वर्णशलाकयोर्जितमिदं दिव्याञ्जनं दीयताम् ॥४४॥

मध्यस्थारुणरत्नकान्तिरुचिरां मुक्ताभुगोद्भासितां
दैवाद्भार्गवजीवमध्यगरवेर्लक्ष्मीमधः कुर्वतीम् ।
उत्सिक्ताधरबिम्बकान्तिविसरैर्भौमीभवन्मौक्तिकां
मद्दत्तामुररीकुरुष्व गिरिजे नासाविभूषामिमाम् ॥४५॥
उडुकृतपरिवेपस्पर्द्धया शीतभानोरिव विरचितदेहद्वन्द्वमादित्यबिम्बम् ।
अरुणमणिसमुद्यत्प्रान्तविभ्राजिमुक्तं श्रवसि परिनिधेहि स्वर्णताटङ्कयुग्मम् ॥४६॥
मरकतवरपद्मरागहीरोत्थितगुलिकात्रितयावनद्धमध्यम् ।
विततविमलमौक्तिकञ्च कण्ठाभरणमिदं गिरिजे समर्पयामि ॥४७॥
नानादेशसमुत्थितैर्मणिगणप्रोद्यत्प्रभामण्डल-
व्याप्तैराभरणैर्विराजितगलां मुक्ताच्छटालङ्कृताम् ।
मध्यस्थारुणरत्नकान्तिरुचिरां प्रान्तस्थमुक्ताफल-
व्रातामम्ब चतुष्किकां परशिवे वक्षःस्थले स्थापय ॥४८॥
अन्योन्यं प्लावयन्ती सततपरिचलत्कान्तिकल्लोलजालैः
कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी ।
मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानै-
र्नित्यं हारत्रयी ते परशिवरसिके चेतसि द्योततां नः ॥४९॥
करसरसिजनाले विस्फुरत्कान्तिजाले विलसदमलशोभे चञ्चदीशाक्षिलोभे ।
विविधमणिमयूखोद्भासितं देवि दुर्गे कनककटकयुग्मं बाहुयुग्मे निधेहि ॥५०॥
व्यालम्बमानसितपट्टकगुच्छशोभि स्फूर्जन्मणीघटितहारविरोचमानम् ।
मातर्महेशमहिले तव बाहुमूले केयूरकद्वयमिदं विनिवेशयामि ॥५१॥
विततनिजमयूखैर्निर्मितामिन्द्रनीलैः विजितकमलनालालीनमत्तालिमालाम् ।
मणिगणखचिताभ्यां कङ्कणाभ्यामुपेतां कलय वलयराजीं हस्तमूले महेशि ॥५२॥
नीलपट्टमृदुगुच्छशोभितां बद्धनैकमणिजालमञ्जुलाम् ।
अर्पयामि वलयात्पुरःसरे विस्फुरत्कनकतैतृपालिकाम् ॥५३॥
आलवालमिव पुष्पधन्वना बालविद्रुमलतासु निर्मितम् ।
अङ्गुलीषु विनिधीयतां शनैरङ्गुलीयकमिदं मदर्पितम् ॥५४॥

विजितहरमनोभूमत्तमातङ्गकुम्भ-स्थलविलुलितकूजत्किङ्किणीजालतुल्याम् ।
अविरतकलनादैरीशचेतो हरन्तीं विविधमणिनिबद्धां मेखलामर्पयामि ॥५५॥

व्यालम्बमानवरमौक्तिकगुच्छशोभि विभ्राजिहाटकपुटद्वयरोचमानम् ।
हेम्ना विनिर्मितमनेकमणिप्रबन्धं नीवीनिबन्धनगुणं विनिवेदयामि ॥५६॥

विनिहतनवलाक्षापङ्कबालातपौघे मरकतमणिराजीमञ्जुमञ्जीरघोषे ।
अरुणमणिसमुद्यत्कान्तिधाराविचित्रस्तवचरणसरोजे हंसकः प्रीतिमेतु ॥५७॥

निबद्धशितिपट्टकप्रवरगुच्छसंशोभितां
कलक्वणितमञ्जुलां गिरिशचित्तसम्मोहिनीम् ।
अमन्दमणिमण्डलीविमलकान्तिकिर्म्मीरितां
निधेहि पदपङ्कजे कनकघुङ्घुरुमम्बिके ! ॥५८॥

विस्फुरत्सहजरागरञ्जिते शिञ्जितेन कलितां सखीजनैः ।
पद्मरागमणिनूपुरद्वयीमर्पयामि तव पादपङ्कजे ॥५९॥

पादाम्बुजमुपासितं परिगतेन शीतांशुना
कृतां तनुपरस्परामिव दिनान्तरागारुणाम् ।
महेशि नवयावकद्रवभरेण शोणीकृतां
नमामि नखमण्डलीं चरणपङ्कजस्थां तव ॥६०॥

आरक्तश्वेतपीतस्फुरदुरुकुसुमैश्चित्रितां पट्टसूत्रै—
देवस्त्रीभिः प्रयत्नादगुरुसमुदितैर्धूपितां दिव्यधूपैः ।
उद्यद्गन्धान्धपुष्पन्धयनिवहसमारब्धझङ्कारगीतां
चञ्चत्कल्हारमालां परशिवरसिके कण्ठपीठेऽर्पयामि ॥६१॥

गृहाण परमामृतं कनकपात्रसंस्थापितं
समर्पयमुखाम्बुजे विमलवीटिकामम्बिके ।
विलोकय मुखाम्बुजं मुकुरमण्डले निर्मले
निधेहि मणिपादुकोपरि पदाम्बुजं सुन्दरि ॥६२॥

आलम्ब्य स्वसखीं करेण शनकैस्सिंहासनादुत्थिता
कूजन्मन्दमरालमञ्जुलगतिप्रोल्लासिभूषाम्बरा ।
आनन्दप्रतिपादकैरुपनिषद्वाक्यैःस्तुता वेधसा
मच्चिते स्थिरतामुपैतु गिरिजा यान्ती सभामण्डपम् ॥६३॥

चलन्त्यामम्बायां प्रचलति समस्ते परिजने
सवेगं संयाते कनकलतिकालङ्कृतिभरे।
समन्तादुत्तालस्फुरितपदसम्पातजनितै—
र्झणत्कारैस्तारैर्झणझणितमासीन्मणिगृहम् ॥६४॥

चञ्चद्वेत्रकराभिरङ्गविलसद्भूषाम्बराभिः पुरो-
यान्तीभिः परिचारिकाभिरमरव्राते समुत्सारिते।
रुद्धे निर्जरसुन्दरीभिरभितः कक्षान्तरे निर्गतं
वन्दे नन्दितशम्भुनिर्मलचिदानन्दैकरूपं महः ॥६५॥

वेधाः पादतले पतत्ययमसौ विष्णुर्नमत्यग्रतः
शम्भुर्देहि दृगञ्चलं सुरपतिं दूरस्थमालोकय।
इत्येवं परिचारिकाभिरुदिते सम्माननां कुर्वती
दृग्द्वन्द्वेन यथोचितं भगवती भूयाद्विभूत्यै मम ॥६६॥

मन्दं चारणसुन्दरीभिरभितो यान्तीभिरुत्कण्ठया
नामोच्चारणपूर्वकं प्रतिदिशं प्रत्येकमावेदितान्।
वेगादक्षिपथं गतान् सुरगणानालोकयन्ती शनै-
र्दित्सन्तो चरणाम्बुजं पथि जगत्पायान्महेशप्रिया ॥६७॥

अग्रे केचन पार्श्वयोः कतिपये पृष्ठे परे प्रस्थिता-
आकाशे समवस्थिताः कतिपये दिक्षु स्थिताश्चाऽपरे।
सम्मर्दं शनकैरपास्य पुरतो दण्डप्रणामान्मुहुः
कुर्वाणाः कतिचित्सुराः गिरिसुते दृक्पातमिच्छन्ति ते ॥६८॥

अग्रे गायति किन्नरी कलपदं गन्धर्वकान्ताश्शनै-
रातोद्यानि च वादयन्ति मधुरं सव्यापसव्यस्थिताः।
कूजन्नूपुरवादमञ्जु पुरतो नृत्यन्ति दिव्याङ्गनाः
गच्छन्तः परितः स्तुवन्ति निगमस्तुत्यां विरिञ्चादयः ॥६९॥

कस्मैचित्सुचिरादुपासितमहामन्त्रौघसिद्धिं क्रमादेकस्मै
भवनिःस्पृहाय परमानन्दस्वरूपां गतिम्।
अन्यस्मै विषयानुरक्तमनसे दीनाय दुःखापहं
द्रव्यं द्वारसमाश्रिताय ददतीं वन्दामहे सुन्दरम् ॥७०॥

नम्रीभूय कृताञ्जलिप्रकटितप्रेमप्रसन्नानने
मन्दं गच्छति सन्निधौ सविनयात्सोत्कण्ठमोघत्रये ।
नानामन्त्रगणं तदर्थमखिलं तत्साधनं तत्फलं
व्याचक्षाणमुदग्रकान्ति कलये यत्किञ्चिदाद्यं महः ॥७१॥

तव दहनसदृक्षैरीक्षणैरेव चक्षु-
र्निखिलपशुजनानां भीषयद्भीषणास्यम् ।
कृतवसति परेशप्रेयसि द्वारि नित्यं
शरभमिथुनमुच्चैर्भक्तियुक्तो नतोऽस्मि ॥७२॥

कल्पान्ते सरसैकदासमुदितानेकार्कतुल्यप्रभां
रत्नस्तम्भविवद्धकाञ्चनगुणस्फूर्जद्वितानोत्तमाम् ।
कर्पूरागुरुगर्भवर्तिकलिकाप्राप्तप्रदीपावलीं
श्रीचक्राकृतिमुल्लसन्मणिगणां वन्दामहे वेदिकाम् ॥७३॥

स्वस्थानस्थितदेवतागणवृते विन्दौ मुदा स्थापितं
नानारत्नविराजिहेमविलसत्कान्तिच्छटादुर्दिनम् ।
चञ्चत्कौसुमतूलिकासनयुतं कामेश्वराधिष्ठितं
नित्यानन्दनिदानमम्ब ! सततं वन्दे च सिंहासनम् ॥७४॥

वदद्भिरभितो मुदा जय जयेति वृन्दारकैः
कृताञ्जलिपरम्परा विदधती कृतार्था दृशा ।
अमन्दमणिमण्डलीखचितहेमसिंहासनं
सखीजनसमावृतं समधितिष्ठ दाक्षायणि ! ॥७५॥

कर्पूरादिकवस्तुजातमखिलं सौवर्णभृङ्गारकं
ताम्बूलस्य करण्डकं मणिमयं चैलाञ्चलं दर्पणम् ।
विस्फूर्जन्मणिपादुके च दधतीः सिंहासनस्याभित—
स्तिष्ठन्तीः परिचारिकास्तव सदा वन्दामहे सुन्दरि ॥७६॥

त्वदमलवपुरुद्यत्कान्तिकल्लोलजालैः
स्फुटमिव दधतीभिर्बाहुविक्षेपलीलाम् ।
मुहुरपि च विधूते चामरग्राहिणीभिः
सितकरकरशुभ्रे चामरे चालयामि ॥७७॥

प्रान्तस्फुरद्विमलमौक्तिकगुच्छजालं
चञ्चन्महामणिविचित्रितहेमदण्डम् ।
उद्यत्सहस्रकरमण्डलचारुहेम-
च्छत्रं महेशमहिले विनिवेशयामि ॥७८॥
उद्यत्तावकदेहकान्तिपटलीसिन्दूरपूरप्रभा-
शोणीभूतमुदग्रलोहितमणिच्छेदानुकारिच्छवि ।
दूरादादरनिर्मिताञ्जलिपुटैरालोक्यमानं सुर-
व्यूहैः काञ्चनमातपत्रमतुलं वन्दामहे सुन्दरम् ॥७९॥
सन्तुष्टां परमामृतेन विलसत्कामेश्वराङ्कस्थितां
पुष्पौघैरभिपूजितां भगवतीं त्वां वन्दमाना मुदा ।
स्फूर्जत्तावकदेहरश्मिकलनाप्राप्तस्वरूपाभिदाः
श्रीचक्रावरणस्थितास्सविनयं वन्दामहे देवताः ॥८०॥
आधारशक्त्यादिकमाकलय्य मध्ये समस्ताधिकयोगिनीञ्च ।
मित्रेशनाथादिकमत्र नाथ-चतुष्टयं शैलसुते नतोऽस्मि ॥८१॥
त्रिपुरासुधार्णवासनमारभ्य त्रिपुरमालिनीं यावत् ।
आवरणाष्टकसंस्थितमासनषट्कं नमामि परमेशि ! ॥८२॥
ईशाने गणपं स्मरामि विचरद्विघ्नान्धकारच्छिदं
वायव्ये वटुकञ्च कज्जलरुचिं व्यालोपवीतान्वितम् ।
नैर्ऋत्ये महिषासुरप्रमथिनीं दुर्गाञ्च सम्पूजय-
न्नाग्नेयेऽखिलभक्तरक्षणपरं क्षेत्राधिनाथं भजे ॥८३॥
उड्डयाणजालन्धरकामरूपपीठानिमान्पूर्णगिरिप्रसक्तान् ।
त्रिकोणदक्षाग्रिमसव्यभागमध्यस्थितान् सिद्धिकरान्नमामि ॥८४॥
लोकेशः पृथिवीपतिर्निगदितो विष्णुर्जलानां प्रभु—
स्तेजोनाथ उमापतिश्च मरुतामीशस्तथा चेश्वरः ।
आकाशाधिपतिस्सदाशिव इति प्रेताभिधामागता-
नेतांश्चक्रबहिःस्थितान्सुरगणान्वन्दामहे सादरम् ॥८५॥

तारानाथकलाप्रवेशनिगमव्याजादृगतासुप्रथं
त्रैलोक्ये तिथिषु प्रवर्तितकलाकाष्ठादिकालक्रमम् ।
रत्नालङ्कृतिचित्रवस्त्रललितं कामेश्वरीपूर्वकम्
नित्याषोडशकं नमामि लसितं चक्रात्मनोरन्तरे ॥८६॥
हृदि भावितदैवतं प्रयत्नाभ्युपदेशानुगृहीतभक्तसङ्गम् ।
स्वगुरुक्रमसंज्ञचक्रराजस्थितमोघत्रयमानतोऽस्मि मूर्ध्ना ॥८७॥
हृदयमथशिरःशिखाखिलाद्यो कवचमथो नयनत्रयञ्च देवि ! ।
मुनिजनपरिचिन्तितं तथास्त्रं स्फुरतु सदा हृदये षडङ्गमेतत् ॥८८॥
त्रैलोक्यमोहनमिति प्रथिते तु चक्रे
चञ्चद्विभूषणगणत्रिपुराधिवासे ।
रेखात्रये स्थितवतीरणिमादिसिद्धी-
र्मुद्रा नमामि सततं प्रकटाभिधास्ताः ॥८९॥
सर्वाशापरिपूरके वसुदलद्वन्द्वेन विभ्राजिते ।
विस्फूर्जत्त्रिपुरेश्वरीनिवसतौ चक्रे स्थिता नित्यशः ।
कामाकर्षणिकादयो मणिगणभ्राजिष्णुदिव्याम्बरा
योगिन्यः प्रदिशन्तु कांक्षितफलं विख्यातगुप्ताभिधाः ॥९०॥
महेशि ! वसुभिर्दलैर्लसति सर्वसंक्षोभणे
विभूषणगणस्फुरत्त्रिपुरसुन्दीरसद्मनि ।
अनङ्गकुसुमादयो विविधभूषणोद्भासिता
दिशन्तु मम कांक्षितं तनुतराश्च गुप्ताभिधाः ॥९१॥
लसद्युगदशारके स्फुरति सर्वसौभाग्यदे
शुभाभरणभूषितत्रिपुरवासिनीमन्दिरे ।
स्थिता दधतु मङ्गलं सुभगसर्वसंक्षोभिणी-
मुखास्सकलसिद्धयो विदितसम्प्रदायाभिधाः ॥९२॥
बहिर्दशारे सर्वार्थसाधके त्रिपुराश्रयाः ।
कुलकौलाभिधाः पान्तु सर्वसिद्धिप्रदायिकाः ॥९३॥

अन्तःशोभिदशारकेऽतिललिते सर्वादिरक्षाकरे
मालिन्या त्रिपुराद्यया विरचितावासे स्थितं नित्यशः ।
नानारत्नविभूषणं मणिगणभ्राजिष्णु दिव्याम्बरं
सर्वज्ञादिकशक्तिवृन्दमनिशं वन्दे निगर्भाभिधम् ॥९४॥

सर्वरोगहरेऽष्टारे त्रिपुरासिद्धयान्विते ।
रहस्ययोगिनीर्नित्यं वशिन्याद्याः नमाम्यहम् ॥९५॥

चूताशोकविकासिकेतकरजः प्रोद्भासिनीलाम्बुज-
प्रस्फूर्जन्नवमल्लिकासमुदितैः पुष्पैः शरान्निर्मितान् ।
रम्यं पुष्पशरासनं सुललितं पाशं तथा चाङ्कुशम्
वन्दे तावकमायुधं परशिवे चक्रान्तराले स्थितम् ॥९६॥

त्रिकोण उदितप्रभे जगति सर्वसिद्धप्रदे
युते त्रिपुरयाम्बया स्थितवती च कामेश्वरी ।
तनोतु मम मङ्गलं सकलशर्म वज्रेश्वरी
करोतु भगमालिनी स्फुरतु मामके चेतसि ॥९७॥

सर्वानन्दमये समस्तजगतामाकांक्षिते वैन्दवे
भैरव्या त्रिपुराद्यया विरचितावासे स्थिता सुन्दरी ।
आनन्दोल्लसितेक्षणा मणिगणभ्राजिष्णु भूषाम्बरा
विस्फूर्जद्वदना परापररहः सा पातु मां योगिनी ॥९८॥

उल्लसत्कनककान्तिभासुरं सौरभस्फुरणवासिताम्बरम् ।
दूरतः परिहृतं मधुव्रतैरर्पयामि तव देवि चम्पकम् ॥९९॥

वैरमुद्धतमपास्य शम्भुना मस्तके विनिहितं कलाच्छलात् ।
गन्धलुब्धमधुपाश्रितं सदा केतकीकुसुममर्पयामि ते ॥१००॥

चूर्णीकृतं द्रागिव पद्मजेन त्वदाननस्पर्धि सुधांशुबिम्बम् ।
समर्पयामि स्फुरमञ्जलिस्थं विकासिजातीकुसुमोत्करं ते ॥१०१॥

अगुरुबहलधूपाजस्रसौरभ्यरम्यां
मरकतमणिराजीराजिहारिस्रगाभाम् ।
दिशि विदिशि विसर्पद्गन्धलुब्धालिमालां
वकुलकुसुममालां कण्ठपीठेऽर्पयामि ॥१०२॥

ईकारोर्ध्वगबिन्दुराननमधो बिन्दुद्वयञ्चस्तनौ
त्रैलोक्ये गुरुगम्यमेतदखिलं हार्दञ्च रेखात्मकम् ।
इत्थं कामकलात्मिकां भगवतीमन्तस्समाराधय-
न्नानन्दाम्बुधिमज्जने प्रलभतामानन्दथुं सज्जनः ॥१०३॥

धूपं तेऽगुरुसम्भवं भगवति ! प्रोल्लासिगन्धोद्धुरं
दीपं चैव निवेदयामि महसा हार्दान्धकारच्छिदम् ।
रत्नस्वर्णविनिर्मितेषु परितः पात्रेषु संस्थापितं
नैवेद्यं विनिवेदयामि परमानन्दात्मिके सुन्दरि ॥१०४॥

जातीकोरकतुल्यमोदनमिदं सौवर्णपात्रे स्थितं
शुद्धान्नं शुचि मुद्गमाषचणकोद्भूतास्तथा सूपकाः ।
प्राज्यं माहिषमाज्यमुत्तममिदं हैयङ्गवीनं पृथक्-
पात्रेषु प्रतिपादितं परशिवे तत्सर्वमङ्गीकुरु ॥१०५॥

शिम्बीसूरणशाकबिम्बबृहतीकूष्माण्डकोशातकी-
वृन्ताकानि पटोलकानि मृदुना संसाधितान्यग्निना ।
सम्पन्नानि च वेसवारविसरैर्दिव्यानि भक्त्या कृता-
न्यग्रे ते विनिवेदयामि गिरिजे सौवर्णपात्रव्रजे ॥१०६॥

निम्बूकार्द्रकचूतकन्दकदली कौशातकीकर्कटी-
धात्रीबिल्वकरीरकैर्विरचितान्यानन्दचिद्विग्रहे ।
राजीभिः कटुतैलसैन्धवहरिद्राभिः स्थितान्पातये
सन्धानानि निवेदयामि गिरिजे भूरिप्रकाराणि ते ॥१०७॥

सितयाञ्चितलड्डुकव्रजान्मृदुपूपान्मृदुलाश्च पूरिकाः
परमान्नमिदं च पार्वति ! प्रणयेन प्रतिपादयामि ते ॥१०८॥

दुग्धमेतदनले सुसाधितं चन्द्रमण्डलनिभं तथा दधि ।
फाणितं शिखरिणीं सितासितां सर्वमम्ब विनिवेदयामि ते ॥१०९॥

अग्रे ते विनिवेद्य सर्वममितं नैवेद्यमङ्गीकृतं
ज्ञात्वा तत्त्वचतुष्टयं प्रथमतो मन्ये सुतृप्तां ततः ।
देवीं त्वां परिशिष्टमम्ब कनकामत्रेषु संस्थापितं
शक्तिभ्यः समुपाहरामि सकलं देवेशि शम्भुप्रिये ॥११०॥

वामेनस्वर्णपात्रीमनुपमपरमान्नेन पूर्णां दधाना-
मन्येन स्वर्णदर्वीं निजजनहृदयाभीष्टदां धारयन्तीम् ।
सिन्दूरारक्तवस्त्रां विविधमणिलसद्भूषणां मेचकाङ्गीं
तिष्ठन्तीमग्रतस्ते मधुमदमुदितामन्नपूर्णां नमामि ॥१११॥

पंक्त्योपविष्टान्परितस्तु चक्रे शक्त्या स्वया लिङ्गितवामभागान् ।
सर्वोपचारैः परिपूज्य भक्त्या तवाम्बिके पारिषदान्नमामि ॥११२॥

परमामृतमत्तसुन्दरीगणमध्यस्थितमर्कभासुरम् ।
परमामृतघूर्णितेक्षणं किमपि ज्योतिरुपास्महे परम् ॥११३॥

दृश्यते तव मुखाम्बुजं शिवे श्रूयते स्फुटमनाहतध्वनिः ।
अर्चने तव गिरामगोचरे न प्रयाति विषयान्तरं मनः ॥११४॥

त्वन्मुखाम्बुजविलोकनोल्लसत्प्रेमनिश्चलविलोचनद्वयीम् ।
उन्मनीमुपगतां सभामिमां भावयामि परमेशि तावकीम् ॥११५॥

चक्षुः पश्यतु नेह किञ्चन परं घ्राणं न वा जिघ्रतु
श्रोत्रं हन्त शृणोतु न त्वगपि स्पर्शं समालम्बताम् ।
जिह्वा वेत्तु न वा रसं मम परं युस्मत्स्वरूपामृते
नित्यानन्दविघूर्णमाननयने नित्यं मनो मज्जतु ॥११६॥

यस्त्वां पश्यति पार्वति प्रतिदिनं ध्यानेन तेजोमयीं
मन्ये सुन्दरि तत्त्वमेतदखिलं वेदेषु निष्ठां गतम् ।
यस्तस्मिन्समये तवार्चनविधावानन्दसान्द्राशयो
यातोऽहं तदभिन्नतां परशिवे सोऽयं प्रसादस्तव ॥११७॥

गणाधिनाथं वटुकञ्च योगिनीः क्षेत्राधिनाथञ्च विदिक्चतुष्टये ।
सर्वोपचारैःपरिपूज्य भक्तितो निवेदयामो बलिमुक्तयुक्तिभिः ॥११८॥

वीणामुपान्ते खलु वादयन्त्यै निवेद्य शेषं खलु शेषिकायै ।
सौवर्णभृङ्गारविनिर्गतेन जलेन शुद्धाचमनं विधेहि ॥११९॥

ताम्बूलं विनिवेदयामि विलसत्कर्पूरकस्तूरिका-
जातीपूगलवङ्गचूर्णखदिरैर्भक्त्या समुल्लासितम् ।
स्फूर्जद्रत्नसमुद्गकप्रणिहितं सौवर्णपात्रे स्थितै-
र्दीपैरुज्ज्वलमन्नचूर्णरचितैरारात्रिकं गृह्यताम् ॥१२०॥

काचिद्गायति किन्नरी कलपदं वाद्यं घनानोर्वशी-
रम्भा नृत्यति केलिमञ्जुलपदं मातः पुरस्तात्तव ।
कृत्यं प्रोज्झ्य सुरस्त्रियो मधुमदव्याघूर्णमानेक्षणं
नित्यानन्दसुधाम्बुधिं तव मुखं पश्यन्ति हृष्यन्ति च ॥१२१॥

ताम्बूलोद्भासिवक्त्रैस्त्वदमलवदनालोकनोल्लासिनेत्रै-
श्चक्रस्थैः शक्तिसङ्घैः परिहृतविषयासङ्गमाकर्ण्यमानम् ।
गीतज्ञाभिः प्रकामं मधुरसमधुरं वादितं किन्नरीभि-
र्वीणाझङ्कारनादं कलय परशिवानन्दसन्धानहेतोः ॥१२२॥

अर्चाविधौ ज्ञानलवोऽपि दूरे दूरे तदापादकवस्तुजातम् ।
प्रदक्षिणीकृत्य ततोऽर्च्चनं ते पञ्चोपचारात्मकमर्पयामि ॥१२३॥

यथेप्सितमनोगतप्रकटितोपचारार्चितां
निजावरणदेवतागणवृतां सुरेशस्थिताम् ।
कृताञ्जलिपुटो मुहुः कलितभूमिरष्टाङ्गकै-
र्नमामि भगवत्यहं त्रिपुरसुन्दरि त्राहि माम् ॥१२४॥

विज्ञप्तीरवधेहि मे सुमहता यत्नेन ते सन्निधिं
प्राप्तं मामिह कान्दिशीकमधुना मातर्न दूरीकुरु ।
चित्तं त्वत्पदभावने व्यभिचरेद्दृग्वाक्च मे जातु चे-
त्तत्सौम्ये स्वगुणैर्वधान न यथा भूयो विनिर्गच्छति ॥१२५॥

काहं मन्दमतिःक्वचेदमखिलैरेकान्तभक्तैःस्तुतं
ध्यातं देवि तथापि ते स्वमनसा श्रीपादुकापूजनम् ।
कादाचित्कमदीयचिन्तनविधौ सन्तुष्ट्या शर्मदं
स्तोत्रं देवतया तया प्रकटितं मन्ये मदीयानने ॥१२६॥

नित्यार्चनमिदं चित्ते भाव्यमानं सदा मया ।
निवद्धं विविधैः पद्यैरनुगृह्णातु सुन्दरी ॥१२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतःकृतौ महात्रिपुरसुन्दरीमानसपूजास्तोत्रं समाप्तम् ।

# श्रीबालात्रिपुरसुन्दरीमानसपूजास्तोत्रम्

## श्रीमज्जगद्गुरुश्रीशङ्कराचार्यविरचितम्

ॐ उषसि मागधमङ्गलगायनैर्झटिति जागृहि जागृहि जागृहि ।
अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदम्ब सुखीकुरु ॥१॥
कनकमयवितर्दिशोभमानं दिशि-दिशि पूर्णसुवर्णकुम्भयुक्तम् ।
मणिमयमण्डपमध्यमेहि मातर्मयि कृपया हि समर्चनं गृहीतुम् ॥२॥
कनककलशशोभमानशीर्षं जलधरचुम्बिसमुल्लसत्पताकम् ।
भगवति तव सन्निवासहेतोर्मणिमयमन्दिरमेतदर्पयामि ॥३॥
तपनीयमयी सतूलिका कमनीया मृदुलोत्तरच्छदा ।
नवरत्नविभूषिता मया शिविकेयं जगदम्ब तेऽर्पिता ॥४॥
कनकमयवितर्दिस्थापिते तूलिकाढ्ये-
विविधकुसुमकीर्णे कोटिबालार्कवर्णे ।
भगवति रमणीये रत्नसिंहासनेऽस्मिन्-
उपविश पदयुग्मं हेमपीठे निधेहि ॥५॥
मणिमयमौक्तिकनिर्मितं महान्तं कनकस्तम्भचतुष्टयेन युक्तम् ।
कमनीयतमं भवानि तुभ्यं नवमुल्लोचमहं समर्पयामि ॥६॥
दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ! ॥७॥
गन्धपुष्पयवसर्षपदूर्वासम्मितं तिलकुशाक्षतमिश्रम् ।
हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ! ॥८॥
जलजद्युतिनाकरेण जातीफलकङ्कोललवङ्गगन्धयुक्तैः ।
अमृतैरमृतैरिवाहृतैर्भगवत्याचमनं विधीयताम् ॥९॥
निहितः कनकस्य सम्पुटे पिहितो रत्नपिधानकेन सः ।
तदयं भवतीकरेऽर्पितो मधुपर्को भवति प्रगृह्यताम् ॥१०॥

एतच्चम्पकतैलमेव विविधैर्पुष्पैर्मुहुर्वासितम्
न्यस्तं रत्नमये सुवर्णचषके भृङ्गैर्भ्रमद्भिर्वृतम् ।
सानन्दं सुरसुन्दरीभिरभितो हस्तैर्धृतं यन्मया
केशेषु भ्रमरप्रभेषु सकलेष्वङ्गेषु चालिप्यताम् ॥११॥
मातःकुङ्कुमपङ्कनिर्मितमिदं देहे तवोद्वर्तनम्
भक्त्याऽहङ्कलयामि हेमरजसा सम्मिश्रितं केशरम् ।
केशानामलकैर्विशोध्य विशदान् कस्तूरिकाद्यन्वितम्
स्नानं ते नवरत्नकुम्भसहितैः संवासितोष्णोदकैः ॥१२॥
दधिदुग्धघृतैःसमाक्षिकैः सितया शर्करया समन्वितैः ।
स्नपयामि तवाहमादृतो जननि ! त्वां पुनरुष्णवारिभिः ॥१३॥
एलोशीरसुवासितैः सुकुसमैर्गङ्गादितीर्थोदकै-
र्मणिक्यामलमौक्तिकामृतयुतैः स्वच्छैः सुवर्णोदकैः ।
मन्त्रान् वैदिकतान्त्रिकान् परिपठन् सानन्दमत्यादरात्
स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमङ्गीकुरु ॥१४॥
बालार्कद्युतिदाडिमीयकुसुमप्रस्पर्धिसर्वोत्तमं
मातस्त्वं परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ।
मुक्ताभिर्ग्रथितं सकञ्चुकमिदं स्वीकृत्य पीतप्रभम्
तप्तस्वर्णसमानवर्णबहुलं प्रावर्णमङ्गीकुरु ॥१५॥
नवरत्नयुते मयार्पिते कमनीये तपनीयपादुके-
सविलासमिदं पदद्वयं कृपया देवि ! तयोर्निधीयताम् ॥१६॥
बहुभिरगुरुधूपैः सादरं धूपयित्वा ।
भगवति ! तव केशान् कङ्कतैर्मार्जयित्वा ।
सुरभिरविन्दैश्चम्पकैश्चार्चयित्वा
झटिति कनकसूत्रैर्जूटमावेष्टयामि ॥१७॥
सौवीराञ्जनमिदमम्ब ! चक्षुषोस्ते विन्यस्तं कनकशलाकया मया यत् ।
तन्नूनं मलिनमपि त्वदक्षिसङ्गात् ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥१८॥

मञ्जीरे पदयोर्निधाय रुचिरे विन्यस्य काञ्चीं कटौ
मुक्ताहारमुरोजयोरनुपमां नक्षत्रमालां गले ।
केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात्
ताटङ्के तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥१९॥

धम्मिल्ले तव देवि हेमकुसुमान्याधाय भालस्थले
मुक्ताराजिविराजिहेमतिलकं नासापुटे मौक्तिकम् ।
मातर्मौक्तिकजालिकाञ्च कुचयोः सर्वाङ्गुलीषूर्मिकाः
कट्यां काञ्चनकिङ्किणीर्विनिदधे रत्नावतंसं श्रुतौ ॥२०॥

मातर्भालतले तवातिविमले काश्मीरकस्तूरिका
कर्पूरागुरुभिः करोमि तिलकं देहेऽङ्गरागं ततः ।
वक्षोजादिषु यक्षकर्दमरसैः सित्काञ्चपुष्पद्रवैः
पादौ कुङ्कुमलेपनादिभिरहं सम्पूजयामि क्रमात् ॥२१॥

रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैश्चारुचैर्विचित्रैः ।
अखण्डितैर्देवि ! यवादिभिर्वा काश्मीरपङ्काङ्किततण्डुलैर्वा ॥२२॥

जननि चम्पकतैलमिदं पुरो मृगमदोऽयमयं पटवासकः ।
सुरभिगन्धमिदं च चतुःसमम् सपदि सर्वमिदं प्रतिगृह्यताम् ॥२३॥

सीमन्ते ते भगवति मया सादरं न्यस्तमेतत्
सिन्दूरं मे हृदयकमले देवि हर्षं तनोतु ।
बालादित्यद्युतिरिव सदा लोहिता यस्य कान्ति-
रन्तर्ध्वान्तं हरतु सकलं चेतसा चिन्तयामि ॥२४॥

मन्दारकुन्दकरवीरलवङ्गपुष्पै-
स्त्वां देवि सन्ततमहं परिपूजयामि ।
जातीजपावकुलचम्पककेतकादि-
नानाविधानि कुसुमानि च तेऽर्पयामि ॥२५॥

मालतीबकुलहेमपुष्पिकाकाञ्चनारकरवीरचम्पकैः ।
कर्णिकारगिरिकर्णिकादिभिः पूजयामि जगदम्ब ते वपुः ॥२६॥

परिजातशतपत्रपाटलैर्मल्लिकाबकुलचम्पकादिभिः ।
अम्बुजैश्चकुसुमैश्च सादरं पूजयामि जगदम्ब ! ते वपुः ॥२७॥

लाक्षासम्मिलितैःशिलारसयुतैः श्रीवाससम्मिश्रितैः
कर्पूराकलितैः सितामधुयुतैर्गोसर्पिषालोडितैः ।
श्रीखण्डागुरुगुग्गुलप्रभृतिभिर्नानाविधैर्वस्तुभिः
धूपं ते परिकल्पयामि जननि ! त्वं धूपमङ्गीकुरु ॥२८॥

रत्नालङ्कृतहेमपात्रनिहितैर्गोसर्पिषोद्दीपितैः
दीपैर्दीर्घतरान्धकारविधुरैर्बालार्ककोटिप्रभैः ।
आताम्रज्ज्वलदुज्ज्वलज्ज्वलनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥२९॥

महति कनकपात्रे स्थापयित्वा विशालान्-
डमरुसदृशरूपान् पक्वगोधूमदीपान् ॥
बहुघृतमथ तेषु न्यस्य दीपैरकम्पै-
र्भुवनजननि कुर्वे नित्यमारात्रिकन्ते ॥३०॥

सविनयमथ दत्त्वा जानुयुग्मं धरायां-
सपदि शिरसि धृत्वा पात्रमारात्रिकस्य ।
मुखकमलसमीपे तेऽम्बसार्धत्रिवारं-
भ्रमयति मयि भूयात् ते कृपार्द्रः कटाक्षः ॥३१॥

मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसन्तानकान्-
सूपापूपसिताघृतैः सवटकैः सक्षौद्ररम्भाफलैः ।
एलाजीरकहिङ्गुनागरनिशाकौस्तुम्बरीसंयुतैः-
शाकैःसाकमहं सुधाधिकरसैः सन्तर्पयाम्यर्पयन् ॥३२॥

सापूपसूपदधिदुग्धसिताघृतानि
सुस्वादुभक्ष्यपरमान्नपुरःसराणि ।
साकोल्लसन्मरिचजीरकवल्लिकानि
भक्ष्याणि भुङ्क्ष्व जगदम्ब मयार्पितानि ॥३३॥

क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्ज्वलं मधु
मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ॥३४॥
उष्णोदकैः पाणियुगं मुखञ्च प्रक्षाल्य मातः कलधौतपात्रे ।
कर्पूरमिश्रेण सकुङ्कुमेन हस्तौ समुद्वर्तय चन्दनेन ॥३५॥
अतिशीतमुशीरवासितं तव पाणौ च मया निवेदितम् ।
पटपूतमिदं जितामृतं शुचि गंगामृतमम्ब पीयताम् ॥३६॥
आताम्ररम्भाफलसंयुतानि द्राक्षाफलाक्षोटसमन्वितानि ।
मबीजपूराणि सदाडिमानि फलानि ते देवि ! समर्पयामि ॥३८॥
कर्पूरेण युतैर्लवङ्गसहितैःकङ्कोलचूर्णान्वितैः
सुस्वादुक्रमुकैः सगौरखदिरैः सुस्निग्धजातीफलैः ।
मातः ! केतकिपत्रपाण्डुरुचिरैस्ताम्बूलवल्लीदलैः
सानन्दं मुखमण्डनार्थमतुलं ताम्बूलमङ्गीकुरु ॥३९॥
एलालवङ्गादिसमन्वितानि कङ्कोलकर्पूरविमिश्रितानि ।
ताम्बूलवल्लीदलसंयुतानि फलानि ते देवि समर्पितानि ॥४०॥
ताम्बूलवल्लीदलनिर्जितहेमवर्णस्वर्णाक्त
पूगफलमौक्तिकचूर्णयुक्तम् ।
रत्नस्थलीस्थितमिदं खदिरेण सार्धं
ताम्बूलमम्ब वदनाम्बुरुहे ! गृहाण ॥४१॥
अथ हुम `णमिश्रैर्मौक्तिकैस्त्वां विकीर्य-
त्रिभुवनकमनीयैः पूजयित्वा च वस्त्रैः ।
मिलितविविधमुक्तां दिव्यमाणिक्ययुक्तां-
जननि कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥४२॥
मातः काञ्चनदण्डमण्डितमिदं पूर्णेन्दुबिम्बप्रभं-
नानारत्नविशोभिहेमकलशं लोकत्रयाह्लादकम् ॥
भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्यात्महस्ते धृतं-
छत्रन्ते परिकल्पयामि शिरसि त्वष्ट्रा स्वयं निर्मितम् ॥४३॥

शरदिन्दुमरीचिगौरवर्णैर्मणियुक्तैर्विलसत्सुवर्णदण्डैः ।
जगदम्ब विचित्रचामरैस्त्वामहमानन्दभरेण बीजयामि ॥४४॥

मार्त्तण्डमण्डलनिभो जगदम्ब ! योऽयं-
भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते ।
पूर्णेन्दुविम्बरुचिरं वदनं स्वकीय-
मस्मिन् विलोकय विलोलविलोचने त्वम् ॥४५॥

इन्द्रादयो नतिनतैर्मुकुटप्रदीपै-
र्नीराजयन्ति सततं तव पादपीठम् ।
तस्मादहं तव शरीरमशेषमेतन्-
नीराजयामि जगदम्ब सहस्रदीपैः ॥४६॥

प्रियगतिरतितुङ्गो रत्नपल्लाणयुक्तः-
कनकमयविभूषःस्निग्धगम्भीरघोषः ।
भगवति कलितोऽयं वाहनार्थं मया ते-
तुरगशतसमेतो वायुवेगस्तुरङ्गः ॥४७॥

मधुकरवृतकुम्भो न्यस्तसिन्दूररेणुः-
कनककलितघण्टः किङ्किणीशोभिकण्ठः ।
श्रवणयुगलचञ्चच्चामरो मेघतुल्यो-
जननि तव मुदे स्यान्मत्तमातङ्ग एषः ॥४८॥

द्रुततरतुरगैर्विराजमानं, मणिमयचक्रचतुष्टयेन युक्तम् ।
कनकमयमहं वितानवन्तं भगवति ते हि रथं समर्पयामि ॥४९॥

हयगजरथपत्तिशोभमानं दिशि दिशि दुन्दुभिमेघनादयुक्तम् ।
अभिनवचतुरङ्गसैन्यमेतत् भगवति भक्तिभरेण तेऽर्पयामि ॥५०॥

परिधिकृतसप्तसागरं वहुसम्पत्सहितं मयाम्ब ते ।
विपुलं धरणीतलाभिधं प्रवलं दुर्गमिदं समर्पितम् ॥५१॥

शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः ।
भ्रमरीमुखरीकृतैरनेकैर्व्यंजनैस्त्वां जगदम्ब बीजयामि ॥५२॥

भ्रमविलुलितलोलकुन्तलालिर्विगलितमाल्यविकीर्णरङ्गभूमिः ।
इयमतिचतुरा नटी नटन्ती तव हृदये मुदमातनोतु मातः ! ॥५३॥
मुखचलनविलासलोलवेणीविलसितनिर्णितलोलभृङ्गमालाः ।
युवजनसुखकारिचारुलीला भगवति ! ते पुरतो नटन्ति बालाः ॥५४॥
रुचिरकुचतटीनां नाट्यकाले नटीनां-
प्रतिगृहमथ तत्र प्रत्यहं प्रादुरासीत् ।
धिमिक धिमिकि धिद्धी धिद्धि धिद्धेति धिद्ध-
धिकिति धिकिति तत्थै त्थै यथेयेति शब्दः ॥५५॥
भ्रमदलिकुलतुल्यालोलधम्मिल्लभारास्मितमुखकमलोद्यद्दिव्यलावण्यपूरा ।
अभिनवनववेषा वारयोषा नटन्ती परभृतकलकण्ठी देवि मोदन्तनोतु ॥५६॥

डमरुडिण्डिमझर्झरझल्लरी मृदुरवार्द्रघटार्द्रघटादयः ।
झटितिझङ्कृतिभिर्जगदम्बिके बहुदयं हृदयं सुखयन्तु ते ॥५७॥
विपञ्चीषु सप्तस्वरान् वादयन्त्य-
स्तव द्वारि गायन्ति गन्धर्वकन्याः ।
क्षणं सावधानेन चित्तेन मातः-
समाकर्णय त्वं मया प्रार्थिताऽसि ॥५८॥
अतिशयकमनीयैर्नर्त्तनैर्नर्त्तकीनां-
झटिति च रमयित्वा चेत एवं त्वदीयम् ।
स्वयमहमपि चित्रैर्नृत्यवादित्रगीतै-
र्भगवति भवदीयं मानसं रञ्जयामि ॥५९॥

तव देवि गुणानुवर्णने चतुरा नो चतुराननादयः ।
तदिहैकमुखेषु जन्तुषु स्तवनं कस्तव कर्त्तुमीश्वरः ॥६०॥
पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलन्ददाति ।
तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥६१॥
रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशाङ्किताभ्याम् ।
अशेषवृन्दारकवन्दिताभ्यां नमो भवानीपदपङ्कजाभ्याम् ॥६२॥

चरणनलिनयुग्मं पङ्कजैः पूजयित्वा-
कनककमलमालां कण्ठदेशेऽर्पयित्वा ॥
शिरसि विनिहितोऽयं रत्नपुष्पाञ्जलिस्ते-
हृदयेकमलमध्ये देवि हर्षन्तनोतु ॥६३॥
अथ मणिमयमञ्चकाभिरामे द्युतिमति पुष्पवितानराजमाने ।
प्रसरदगुरुधूपितेऽस्मिन् भगवति वासगृहेऽस्तु ते निवासः ॥६४॥
एतस्मिन् मणिखचिते सुवर्णपीठे त्रैलोक्याभयवरदौ निधाय पादौ ।
विस्तीर्णे मृदुलतरच्छदेऽस्मिन् पर्यङ्के कनकमये निषीद मातः ॥६५॥
तव देवि सरोजचिह्नयोः पदयोर्निर्जितपद्मरागयोः ।
अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥६६॥
अथ मातरुशीरवासितं निजताम्बूलरसेन राजितम् ।
तपनीयमये हि पात्रके मुखगण्डूषजलं विधीयताम् ॥६७॥
क्षणमथ जगदम्ब मञ्चकेऽस्मिन् मृदुतरतूलिकया विराजमाने ।
अतिमहति मुदा निजेच्छया त्वं सुखशयनं कुरु मां हृदि स्मरन्ती ॥८॥
मुक्ताकुन्देन्दुगौरां मणिमयमुकुटां रत्नताटङ्कयुक्ता-
मक्षस्रक्पुष्पहस्तामभयवरकरां चन्द्रचूडां त्रिनेत्राम् ॥
नानालङ्कारयुक्तां सुरमुकुटलसद्द्योतितस्वर्णपीठां,
सानन्दां सुप्रसन्नां त्रिभुवनजननीं चेतसा चिन्तयामि ॥६९॥
एषा भक्त्या तव विरचिता या मया देवि पूजा-
स्वीकृत्यैनां सपदि सकलां मेऽपराधान् क्षमस्व ।
न्यूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः
सानन्दम्मे हृदयकमले तेऽस्तु नित्यं निवासः ॥
पूजामिमां पठेत् प्राज्ञः पूजाकर्तुमनीश्वरः ।
पूजाफलमवाप्नोति वाञ्छितार्थांश्च विन्दति ।
प्रत्यहं भक्तियुक्तो यो देविपूजामिमां पठेत् ।
वाग्वादिन्याः प्रसादेन वत्सरात्स कविर्भवेत् ॥

श्रीबालात्रिपुरसुन्दरीमानसपूजास्तोत्रम् सम्पूर्णम् ॥

## श्रीविद्यासर्वस्वभूताः षडाम्नायमन्त्राः

श्रीनाथादिगुरुत्रयं गणपतिं पीठत्रयं भैरवं
सिद्धौघं वटुकत्रयं पदयुगं दूतीक्रमं मण्डलम् ।
वीरान्द्वयष्टचतुष्कषष्टिनवकं वीरावलीपञ्चकं
श्रीमन्मालिनिमन्त्रराजसहितं वन्दे गुरोर्मण्डलम् ॥

वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।
रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥

गुरुपादुकामनुमुच्चार्य सुमुखादिपञ्चमुद्राः प्रदर्श्य गणपतिमूलेन महागणपतिं प्रणमेत् ।

### अथ पूर्वाम्नायः

तत्र त्रैलोक्यमोहनसर्वाशापरिपूरकसर्वसंक्षोभणाख्ये सृष्टिचक्रे पूर्वाम्नायदेवतां मुक्तातपत्रच्छायायामुपविष्टां पद्मरागारुणां मुक्ताभरणवस्त्रमाल्यानुलेपनां पाशाङ्कुशवराभयकरां रक्तमुकुटार्पितचन्द्रलेखां ध्यात्वा—

### गुरुमण्डलम्

१—गुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंसः शिवः सोहं ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, हंसः शिवः सोहं, स्वरूपनिरूपणहेतवे श्रीगुरवे नमः । अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

२—परमगुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, सोहं हंसः शिवः, ह्स्ख्फ्रें हसक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, सोहं हंसः शिवः, स्वच्छप्रकाशविमर्शहेतवे श्रीपरगुरवे नमः । अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

३—परमेष्ठिगुरुः—ॐ ऐं ह्रीं श्रीं, ऐं क्लीं सौः, हंस, शिवः सोहं हंसः, ह्स्ख्फ्रें सहक्षमलवरयूं ह्सौः, सहक्षमलवरयीं स्हौः, हंसः शिवः सोहं हंसः, स्वात्मारामपञ्जरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः । अमुकानन्दनाथश्रीपादुकां पूजयामि नमः ॥

४—गणपतिः—ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । महागणपतिश्रीपा० ।

५—पीठत्रयम्—

(क) ४ ऐं क्लीं सौः अं आं सौः कामगिरिपीठब्रह्मात्मशक्त्यै नमः । कामगिरिपीठब्रह्मात्मशक्तिश्रीपा० ।

(ख) ४ ऐं ह्रीं श्रीं ऐं क्लीं सौः पूर्णगिरिपीठविष्ण्वात्मशक्त्यै नमः । पूर्णगिरिपीठविष्ण्वात्मशक्तिश्रीपा० ।

(ग) ४ ऐं क्लीं सौः श्रीं ह्रीं ऐं जालन्धरपीठरुद्रात्मशक्त्यै नमः । जालन्धरपीठरुद्रात्मशक्तिश्रीपा० ।

## देवताः

६—शुद्धविद्या—४ ऐं ईं औः । शुद्धविद्याम्बाश्री० ।

७—बाला—४ ऐं क्लीं सौः सौः क्लीं ऐं । बालात्रिपुरसुन्दर्यम्बा० ।

८—द्वादशार्धा—४ हसकलरडैं हसकलरडीं हसकलरडौः । द्वादशार्धाम्बा० ।

९—मातङ्गिनीमन्त्राः—

(क) ४ ॐ ह्रीं हसन्ति हसितालापे मातङ्गि परिचारिके । मम भयविघ्नापदां नाशं कुरु कुरु ठ ठ हुं फट् स्वाहा । श्रीहसन्तीश्यामलाम्बाश्री० ।

(ख) ४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नमो भगवति श्रीमातङ्गीश्वरि सर्वजनमनोहारि सर्वमुखरञ्जिनि क्लीं ह्रीं श्रीं सर्वराजवशङ्करि सर्वस्त्रीपुरुषवशङ्करि सर्वदुष्टमृगवशङ्करि सर्वसत्त्ववशङ्करि सर्वलोकवशङ्करि त्र्यैलोक्यं मे वशमानय स्वाहा । सौः क्लीं ऐं श्रीं ह्रीं ऐं । श्रीराजश्यामलाम्बाश्रीपा० ।

(ग) ४ ॐ नमो भगवते महाशुकाय त्रिभुवनालङ्काराय राजमदमर्दनाय शीघ्रं राजानं मे वशमानय स्वाहा । श्रीशुकश्यामलाम्बाश्री० ।

(घ) ४ ॐ ऐं ॐ नमो भगवति शां शारिके सकलकलाकोविदे विद्यां बोधय बोधय स्वाहा । श्रीशारिकाश्यामलाम्बाश्रीपा० ।

(ङ) ४ ॐ नमो भगवत्यै वीं वीणायै मम संगीतविद्यां प्रयच्छ स्वाहा । श्रीवीणाश्यामलाम्बाश्रीपा० ।

(च) ४ ॐ नमो भगवते व्यं वेणवे मम साहित्यविद्यां प्रयच्छ स्वाहा । श्रीवेणुश्यामलाम्बाश्रीपा० ।

(छ) ४ ऐं नमः उच्छिष्टचण्डालि मातङ्गि सर्वजनवशङ्करि स्वाहा । श्रीलघुश्यामलाम्बाश्रीपा० ।

१०—गायत्री—

४ ॐ भूर्भुःस्वः । तत्सवितुर्वरेण्यं—प्रचोदयात् । गायत्र्यम्बाश्रीपा० ।

११—गणपतिमन्त्राः—

(क) ४ ॐ श्रीं ह्रीं ग्लौं गणपतये सर्वकार्यसिद्धिं कुरु कुरु स्वाहा । क्षिप्रगणपति० ।

(ख) ४ ॐ श्रीं ह्रीं सर्वकार्यविघ्नप्रशमनाय सर्वराजवश्यकराय सर्वस्त्रीपुरुषाकर्षणाय सर्वलोकवशीकरणाय आं ह्रीं क्रों हुं फट् स्वाहा । सिद्धगणपति० ।

(ग) ४ ॐ ग्लौं नवनीतगणपतये सर्वजनान्मे वशमानय स्वाहा । नवनीतगणपति० ।

(घ) ४ ॐ श्रीं ह्रीं क्लीं ग्लौं ऐं वद वद वाग्वादिनि सिद्धगणपतये गीं भगवति स्वाहा । शक्तिगणपति० ।

(ङ) ॐ हस्तिमुखाय लम्बोदराय उच्छिष्टाय महात्मने आं क्रों ह्रीं क्लीं ग्लौं गं घे घे उच्छिष्टाय स्वाहा । उच्छिष्टगणपति० ।

(च) ४ ॐ गं ॐ । एकाक्षरीगणपति० ।

१२—कार्तिकेयमन्त्राः—

(क) ४ ॐ ऐं क्षं क्षं कुमाराय नमः । कुमारश्रीपा० ।

(ख) ४ ॐ ह्रीं श्रीं सं सुब्रह्मण्याय वैरिधैर्यं चलय चलय स्वाहा । सुब्रह्मण्य० ।

(ग) ४ ॐ ह्रीं श्रीं क्लीं सौः स्कन्दाय नमः । स्कन्द० ।

१३—मृत्युञ्जयमनु :—४ ॐ ह्रौं जुं सः। मृत्युञ्जय०।

१४—नीलकण्ठमनु:—४ ॐ फ्रों नीं ठः। नीलकण्ठ०।

१५—त्र्यम्बकमनु :—

४ ॐ त्र्यम्बकं यजामहे सुगन्धि पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। त्र्यम्बक०।

१६—जातवेदोमनु—

४ ॐ वैश्वानर जातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय साधय स्वाहा। जातवेद०।

१७—प्रत्यङ्गिरामनु :—

(क) ४ ॐ आं ह्रीं क्रों ॐ नमः कृष्णवसने सिंहवदने महाभैरवि ज्वलज्ज्वालाजिह्वे करालवदने प्रत्यङ्गिरे क्ष्म्रों। ॐ नमो नारायणाय। घृणिस्सूर्य आदित्यों। सहस्रार हुं फट्। अव ब्रह्मद्विषो-जहि। ब्राह्मीप्रत्यङ्गिरा०।

(ख) ४ ॐ ह्रीं खें फ्रें भक्षज्वालाजिह्वे करालवदने कालरात्रि प्रत्यङ्गिरे क्षों क्ष्म्रौं ह्रीं नमस्तुभ्यं हन हन, मां रक्ष रक्ष, मम शत्रून् भक्षय भक्षय हुं फट् स्वाहा। नारायणीप्रत्यङ्गिरा०।

(ग) ४ श्रीं ह्रीं ॐ नमः कृष्णवसने सहस्रसिंहिनि सहस्रवदने कालरात्रि प्रत्यङ्गिरे परसैन्यपरकर्मविध्वंसिनि परमन्त्रोत्सादिनि सर्वभूतदमनि सर्वदेहान्बन्ध बन्ध सर्वविद्यां छिन्धि छिन्धि क्षोभय क्षोभय परतन्त्राणि स्फोटय स्फोटय सर्वशृङ्खलान् त्रोटय त्रोटय ज्वलज्ज्वालाजिह्वे करालवदने प्रत्यङ्गिरे ह्रीं नमः। रौद्रीप्रत्यङ्गिरा०।

(घ) ४ यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव। तां ब्रह्मणापन्निर्णुद्मः प्रत्यक्कर्तारमृच्छतु॥ उग्रकृत्याप्रत्यङ्गिरा०।

(ङ) ४ ज्वलज्ज्वालाजिह्वे करालदंष्ट्रे प्रत्यङ्गिरे क्षीं ह्रीं हुं फट्। अथर्वणभद्रकालीप्रत्यङ्गिरा०।

१८—४ ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्। अकाररूपाय सृष्टिकर्त्रे ब्रह्मणे नमः। ब्रह्म०।

१९—४ ह्स्रैं ह्स्क्लरीं ह्स्रौः। पूर्वाम्नायसमयविद्येश्वर्युन्मोदिनी देव्याम्बा०।

२०—४ मूलं गुरुत्रयगणपतिपीठत्रयसहितायै शुद्धविद्यादिसमयविद्येश्वरीपर्यन्तचतुर्विंशतिसहस्रदेवतापरिसेवितायै कामगिरिपीठस्थितायै पूर्वाम्नाय समष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः ॥

इति पूर्वाम्नायः।

## अथ दक्षिणाम्नायः।

चतुर्दशारद्विदशारात्मके स्थितिचक्रे दक्षिणाम्नायदेवतामुद्यत्सूर्यसहस्राभां नानालङ्कारभूषितां रक्तवस्त्रानुलेपनां वामाद्यूर्ध्वयोस्तदाद्यधःस्थयोः करयोः पाशाङ्कुशपुस्तकाक्षमालाधरां ध्यात्वा—

गुरुमण्डलम्।

१—भैरव :—

(क) ४ फ्रें फट् फां फीं ह्लीं श्रीं महामन्थानभैरवश्रीपा०

(ख) ,, ,, खचक्रभैरव०

(ग) ,, ,, फट्कारभैरव०

(घ) ,, ,, एकात्मानन्दभैरव०

(ङ) ४ फ्रें फट् फां फीं ह्लीं श्रीं रविभक्षणभैरवश्रीपा०

(च) ४ ,, ,, चण्डभैरव०

(छ) ,, ,, नभोनिर्मलभैरव०

(ज) ,, ,, डमरभास्करभैरव०

२—सिद्धौघ :—

(क) ४ ह्लीं श्रीं सौः आं महादुर्मनाम्बासिद्धश्रीपा०

(ख) ४ ,, सुन्दर्यम्बासिद्ध०

(ग) ४ ,, विश्वदलनाम्बासिद्ध०

(घ) ४ ह्लीं श्रीं सौः आं कपालिकाम्बासिद्ध०

(ङ) ४ ,, बडवाम्बासिद्ध०

(च) ४ ,, भीमाम्बासिद्ध०

(छ) ४ ,, कराल्यम्बासिद्ध०

(ज) ३ ,, खराननाम्बासिद्ध०

(झ) ४ ,, शालिनाम्बासिद्ध०

३—वटुकत्रयम्—

(क) ४ ॐ ह्रीं श्रीं हुं फट् स्कन्दवटुकश्रीपा०

(ख) ४ ,, ,, चित्रवटुक०

(ग) ४ ,, ,, विरिञ्चिवटुक०

४—पदयुगं—

(क) ४ हसकलह्रीं हसकहलह्रीं सकलह्रीं। प्रकाशपादुकाश्री०

(ख) ४ हसकल हसकहल सकलह्रीं। विमर्शपादुकाश्री०

५—सौभाग्यविद्या—

३ ऐं क-५ क्लीं ह-६ सौः स-४। सौभाग्यविद्याम्बा०

६—बगलामनुः—

४ ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धि विनाशय ह्लीं ॐ स्वाहा। बगलामुखी०

७—वाराहीमनुः—

४ ऐं ग्लौं ऐं नमो भगवति वार्तालि वार्तालि वाराहि वाराहि वराहमुखि वराहमुखि अन्धे अन्धिनि नमः। रुन्धे रुन्धिनि नमः। जम्भे जम्भिनि नमः। मोहे मोहिनि नमः। स्तम्भे स्तम्भिनि नमः। सर्वदुष्टप्रदुष्टानां सर्वेषां सर्ववाक्चित्तचक्षुर्मुखगतिजिह्वास्तम्भनं कुरु कुरु शीघ्रं वश्यं ऐं ग्लौं ठः ठः ठः ठः हुं अस्त्राय फट्। श्रीवाराह्यम्बा०

८—वटुकमनुः—

४ ॐ ह्रीं वं वटुकाय आपदुद्धारणं कुरु कुरु व वटुकाय ह्रीं ॐ स्वाहा। आपदुद्धारणवटुक०

९—तिरस्करिणीमनुः—

४ ऐं ह्रीं श्री ऐं क्लीं सौः ॐ नमो भगवति तिरस्करिणि महामाये महानिद्रे सकलपशुजनमनश्चक्षुश्श्रोत्रतिरस्करणं कुरु कुरु स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं। तिरस्करिण्यम्बा०

१०–महामाया—

४ ॐ ह्रीं ईं ॐ नमो भगवति महामाये मनोमये जगत्क्षोभिणि वर वरदे सर्वजनं मोहय मोहय ईं ह्रीं ॐ स्वाहा। श्रीमहामाया०

११–अघोरमनुः—

४ ह्रां ह्रीं ह्रूं अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः। ह्रै ह्रौं ह्रः अघोराय स्वाहा। अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः स्वाहा। कं कं हं क्षं सं हं ग्रीं ग्रीं प्रत्यक्ष प्रत्यक्ष ह्रूं ह्रीं ह्रां सं हुं फट् स्वाहा। अघोर०

१२–शरभमनुः—

(क) ४ ॐ नमो भगवते प्रलयकालाग्निरुद्राय दक्षाध्वरध्वंसकाय महाशरभाय मम शत्रुच्छेदनं कुरु कुरु स्वाहा। श्रीशरभेश्वर०

(ख) ४ खें खां खं फट् प्राणग्रहसि प्राणग्रहसि हुँ फट्। सर्वशत्रुसंहारकाय शरभसाल्वाय पक्षिराजाय हुँ फट् स्वाहा। शरभेश्वरी०

१३–भेतालमनुः—

४ छ्रां छ्रीं छ्रूं छ्रैं छ्रौं छ्रः ऐं ह्रीं क्लीं झां परेतभूताधिपतये महापिशाचकपालाय झां झोटिंगदमनाय अधिपाय भो भो भेतालाय तुभ्यं नमस्स्वाहा। भेताल०

१४–खड्गरावणमनुः—

४ ॐ ह्रीं क्लीं खं भूतेश ह्रीं ह्रां खड्गरावणाय नमः। खड्गरावण०

१५–वीरभद्रमनुः—

४ ॐ क्लीं ग्रीं वीरभद्र जय जय नमः स्वाहा। वीरभद्र०

१६—रौद्रमनुः—

४ ॐ नमो भगवते रुद्राय । रुद्र०

१७—शास्तृमनुः—

४ ह्रीं हरिहरपुत्राय पुत्रलाभाय शत्रुनाशाय मदगजवाहनाय महाशास्त्रे प्रत्यक्षवेत्रायुधाय वर वरद सर्वजनं मे वशमानय स्वाहा । श्रीशस्तृ०

१८—पाशुपतास्त्रमनुः—

४ ॐ श्लीं पशु हुँ फट् । पाशुपतास्त्र०

१९—ब्रह्मास्त्रमनुः—

४ ॐ आं ह्लीं क्रों ग्लौं हुं ऐं क्लीं ह्रीं श्रीं बगलामुखि आवेशयावेशय आं ह्लीं क्रों ब्रह्मास्त्ररूपिणि एह्येहि आं ह्लीं क्रों मम हृदये आवहावह संनिधिं कुरु कुरु आं ह्लीं क्रों मम हृदये सुखं चिरं तिष्ठ तिष्ठ आं ह्लीं क्रों हुँ फट् स्वाहा । ब्रह्मास्त्र०

२०—वायव्यास्त्रमनुः—

४ आवायव्ययावायव्या व्यायवाया व्ययवाआ । और्वायव्ययावायव्या व्यायवायाव्यर्वाऔ । ॐ हन हन हुं फट् स्वाहा । वायव्यास्त्र०

२१—भैरवमन्त्राः—

(क) ४ ॐ नमो भगवते उग्रभैरवाय सर्वविघ्नान्नाशय नाशय हुं फट् स्वाहा । उग्रभैरव०

(ख) ॐ ह्रीं आं अङ्गभैरव ( देवदत्त ) कोपशमनं कुरु कुरु स्वाहा । अङ्गभैरव०

(ग) ४ ह्रूं ह्रीं फ्लीं अघोरभैरवाय (देवदत्तं) मोहय स्वाहा । अघोरभैरव०

(घ) ४ ॐ नमो भगवते महाभीमभैरवाय लोकभयङ्कराय सर्वशत्रुसंहारकाय हुं (देवदत्तं) ध्वंसय ध्वंसय स्वाहा । भीमभैरव०

(ङ) ४ वं रं ह्रूं ॐ नमो भगवते विजयभैरवाय सर्वशत्रुविनाशनाय विबुधवाहनाय नररुधिरमांसभक्षणाय ( देवदत्तं ) उच्चाटयोच्चाटय हुं ताडय ताडय भस्मीकुरु भस्मीकुरु स्वाहा । विजयभैरव०

(च) ४ ह्रीं स्प्रं रक्तभैरवाय शवकपालमालालङ्कृताय नवाम्बुदश्यामाय एह्येहि शीघ्रं एहि मां पाहि एं ऐं आगामिकार्यं वद वद अखिलोपाधि हर हर सौभाग्यं देहि मे स्वाहा । रक्तभैरव०

(छ) ४ ॐ श्रीं ह्रीं क्लीं ॐ नमो भगवते स्वर्णाकर्षणभैरवाय प्रणताभीष्टपरिपूरणाय एह्येहि करुणानिधे मह्यं हिरण्यं दापय दापय श्रीं ह्रीं क्लीं स्वाहा । स्वर्णाकर्षणभैरव०

२२—दक्षिणामूर्तिमन्त्रा :—

(क) ४ ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहा । मेधादक्षिणामूर्ति०

(ख) ४ ॐ नमो भगवते दक्षिणामूर्तये मह्यं श्रियं प्रज्ञां प्रयच्छ स्वाहा । लक्ष्मीदक्षिणामूर्ति०

(ग) ४ ॐ अः नमः शिवाय अः ॐ । कीर्तिदक्षिणामूर्ति०

(घ) ४ ॐ ज्ञां नमश्चिन्मयमूर्तये ज्ञानं देहि स्वाहा । ज्ञानदक्षिणामूर्ति०

(ङ) ४ ॐ श्रीं सौः श्रीसाम्बशिवाय तुभ्यं स्वाहा । साम्बदक्षिणामूर्ति०

(च) ४ ॐ ह्रीं ॐ दक्षिणामूर्तये सर्वसाध्यमेधां समुत्कर्षय स्वाहा । वीरदक्षिणामूर्ति०

(छ) ४ ओंकारसंहारमूर्तये नमः । संहारदक्षिणामूर्ति०

(ज) ४ ॐ नमो भगवते दक्षिणामूर्तये त्रिनेत्राय त्रिकालज्ञानाय सर्वशत्रुघ्नाय सर्वापस्मारविदारणाय दारय दारय मारय मारय भस्मीकुरु भस्मीकुरु एह्येहि हुं फट् । अपस्मारनिवर्तकदक्षिणामूर्ति०

२३–४ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः । सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते . अस्तु रुद्ररूपेभ्यः ॥ उकाररूपाय स्थितिकर्त्रे विष्णवे नमः । विष्णुश्री०

२४–४ ॐ ह्रीं ऐं क्लिन्ने क्लिन्नमदद्रवे कुले ह्सौः । दक्षिणाम्नायसमयविद्येश्वरी भोगिनीदेव्यम्बा०

४ मूलं भैरवाष्टकनवसिद्धौघवटुकत्रयपदयुगसहितायै सौभाग्यविद्यादिसमयविद्येश्वरीपर्यन्तत्रिंशत्सहस्रदेवतापरिसेवितायै पूर्णगिरिपीठस्थितायै

दक्षिणाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः॥

इति दक्षिणाम्नायः।

अथ पश्चिमाम्नायः

नवयोनिचक्रे सहस्राराख्ये पश्चिमाम्नायाधिदेवतां पञ्चमुण्डासनां बालार्कसहस्रप्रभां मुण्डमालाधरां रक्तवस्त्राभरणानुलेपनां वामाद्यूर्ध्वं तदाद्यधः पाशाङ्कुशाभयवरकरां त्रिनेत्रां ध्यात्वा—

गुरुमण्डलम्

१—दूत्यः—

(क) ४ अं आं सौः ह्लीं श्रीं सौः योन्यम्बादूतीश्रीपा०
(ख) ४ ,, ,, योनिसिद्धनाथाम्बादूती०
(ग) ४ ,, ,, महायोन्यम्बादूती०
(घ) ४ ,, ,, महायोनिसिद्धनाथाम्बादूती०
(ङ) ४ अं आं सौः ह्लीं श्रीं सौः दिव्ययोन्यम्बादूती०
(च) ४ ,, ,, दिव्ययोनिसिद्धनाथाम्बा०
(छ) ४ ,, ,, शङ्खयोन्यम्बादूती०
(ज) ४ ,, ,, शङ्खयोनिसिद्धनाथाम्बादूती०
(झ) ४ ,, ,, पद्मयोन्यम्बादूती०
(ञ) ४ ,, ,, पद्मयोनिसिद्धनाथाम्बादूती०

२—मण्डलम्—

(क) ४ ह्लीं श्रीं ऐं ह्लीं श्रीं क्लीं ह्लीं श्रीं सौः वह्निमण्डल०
(ख) ४ ,, ,, ,, सूर्यमण्डल०
(ग) ४ ,, ,, ,, सोममण्डल०

३—वीरद्वयष्टकम्—

(क) ४ ह्लीं श्रीं फट् फां फ्रें सृष्टिवीरभैरवश्री०
(ख) ४ ,, ,, स्थितिवीरभैरव०

(ग) ४ ,, ,, संहारवीरभैरव०

(घ) ४ ,, ,, रक्तवीरभैरव०

(ङ) ४ ,, ,, यमवीरभैरव०

(च) ४ ,, ,, मृत्युवीरभैरव०

(छ) ४ ,, ,, भद्रवीरभैरव०

(ज) ४ ,, ,, परमार्कवीरभैरव०

(झ) ४ ,, ,, मार्तण्डवीरभैरव०

(ञ) ४ ,, ,, कालाग्निरुद्रभैरव०

४—चतुःषष्टिसिद्धाः—४ऐं श्रीं ह्लीं क्लीं श्रीं ह्लीं सौः श्रीं ह्लीं मङ्गलानाथश्रीपा०

४-९ चौण्डिकानाथ०
ज्येष्ठानाथ०
कन्तुकिनाथ०
पटहानाथ०
कूर्मानाथ०
धनदानाथ०
गन्धानाथ०
गगनानाथ०
मतङ्गानाथ०
चम्पकानाथ०
कैवर्तानाथ०
मातङ्गगमनानाथ०
सूर्यभक्षानाथ०
नभोभक्षानाथ०
स्रोतिकानाथ०
रूपिकानाथ०
दंष्ट्रानाथ०

४-९ धूम्राक्षानाथ०
ज्वालानाथ०
गान्धारानाथ०
गगनेश्वरानाथ०
मायानाथ०
महामायानाथ०
नित्यानाथ०
शान्तानाथ०
विश्वानाथ०
कामानाथ०
उमानाथ०
श्रियानाथ०
सुभगानाथ०
विद्यानाथ०
महाविद्यानाथ०
अमृतनाथ०
चन्द्रानाथ०

४-९ अन्तरिक्षानाथ०
सिद्धानाथ०
श्रद्धानाथ०
अनन्तानाथ०
शम्बरानाथ०
उल्कानाथ०
त्रैलोक्यानाथ०
भीमानाथ०
राक्षसीनाथ०
मलिनानाथ०
प्रचण्डानाथ०
अनङ्गानाथ०
त्रिविधानाथ०
अनभिहितानाथ०
नन्दिनाथ०

४-९ महाभगानाथ०
सुन्दरानाथ०
विश्वेश्वरानाथ०
कालानाथ०
महाकालानाथ०
अभयानाथ०
विकारानाथ०
महाविकारानाथ०
सर्वगानाथ०
सृगालानाथ०
पूतनानाथ०
शर्वरीनाथ०
व्योमानाथ०
पूर्णानाथ०
(चतुःषष्टिनाथाः)

देवताः ।

५—लोपामुद्रामनुः—
४ हसकलह्रीं हसकहलह्रीं सकलह्रीं । लोपामुद्राम्बाश्री०

६—भुवनेश्वरीमनुः—४ श्रीं ह्रीं श्रीं । भुवनेश्वर्यम्बा०

७—अन्नपूर्णामनुः—४ ह्रीं श्रीं क्लीं ॐ नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं देहि स्वाहा । अन्नपूर्णाम्बा०

८—कामकलामनुः—४ अं आं — — ळं क्षं ईं । कामकलाम्बा०

९—सुदर्शनमनुः—(क) ४ ॐ सहस्रार हुं फट् । सुदर्शन०
(ख) ४ श्रीं ह्रीं ॐ सुदर्शनचक्राय रिपुचित्तं भ्रामय स्वाहा । सुदर्शन०

१०—(क) ॐ क्षिं क्षिप स्वाहा । महागरुडश्री०
(ख) ४ ॐ नमो भगवते श्रीमन्महागरुडाय अमृतकोशोद्भवाय वज्रनखवज्रतुण्डपक्षालङ्कृतशरीराय श्रीमन्महागरुड विषं हुं फट् स्वाहा । गरुडश्री०

(ग) ४ यं क्षं क्षिप स्वाहा। गरुड०

११—कार्तवीर्यमनुः—४ ॐ फ्रों ब्रीं क्लीं ब्लूं आं ह्रीं क्रों श्रीं हुं फट् स्वाहा।
कार्तवीर्यार्जुनाय नमः। कार्तवीर्यार्जुन०

१२—नृसिंहमनुः—४ ॐ क्ष्रौं ईं हं उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम्।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम्। हं ईं क्ष्रौं ॐ।
मन्त्रराजनृसिंह०

१३—नामत्रयमनुः—४ अच्युताय नमः। अनन्ताय नमः। गोविन्दाय नमः।
नामत्रय०

१४—राममन्त्राः—

(क) ४ ॐ रां रामाय नमः। राम०

(ख) ४ ॐ श्रीं ह्रीं क्लीं नित्यशुद्धबुद्धाय रामाय परब्रह्मणे नमः। राम०

१५—सीतामन्त्रः—४ ॐ श्रीं सीतायै स्वाहा। सीतादेवी०

१७—गोपालमन्त्राः—

(क) ४ क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा। राजगोपाल०

(ख) ४ अन्नरूप रसरूप नमो नमः। अन्नाधिपतये ममान्नं प्रयच्छ स्वाहा। गोपालश्री०

(ग) ४ ॐ क्लीं कृष्ण कृष्ण हरे कृष्ण सर्वज्ञ त्वं प्रसीद मे। रामारमण विश्वेश विद्यामाशु प्रयच्छ मे क्लीं ॐ। गोपाल०

(घ) ४ क्लीं देवकीसुत गोविन्द वासुदेव जगत्पते।
देहि मे तनयं कृष्ण शरणागतवत्सल। सन्तानगोपाल०

(ङ) ४ क्लीं कृष्ण क्लीं। गोपाल०

१७—सौरमनुः—४ ॐ ह्रीं घृणिस्सूर्य आदित्योंं। सूर्य०

१८—धन्वन्तरिमनुः—४ ॐ नमो भगवते धन्वन्तरये अमृतकलशहस्ताय सर्वामयविनाशनाय त्रिलोकनाथाय विष्णवे स्वाहा। धन्वन्तरि०

१९—इन्द्रजालिमनुः—

(क) ॐ ह्रीं ईं ॐ नमो भगवति महामाये मनोमये जगत्क्षोभिणि वर वरदे सर्वजनं मोहय मोहय ईं ह्रीं स्वाहा। इन्द्रजालिमायामहादेवि०

(ख) ४ वं सं झं जुं रं ह्रीं श्रीं मों भगवति चित्रविद्ये महामाये अमृतेश्वरि एह्येहि प्रसन्नवदने अमृतं प्लावय अनलं शीतलं कुरु कुरु सर्वविषं नाशय ज्वरं हन हन पैत्योन्मादं मोचय मोचय आज्योष्णं शमय शमय सर्वजनं मोहय मोहय मां पालय पालय मों श्रीं ह्रीं रं जुं झूं झूं सं वं स्वाहा । इन्द्रजालि०

२०—इन्द्रादिसुरमन्त्राः—

(क) ४ ॐ लं यतइन्द्र भयामहे ततो नो अभयं कृधि मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि । लंॐ इन्द्राय नमः । इन्द्रश्री०

(ख) ४ ॐ रं इद्धादुलूक आपप्तत् हिरण्याक्षो अयोमुखः रक्षसां दूत आगतः तमितो नाशयाग्ने । रं ॐ अग्नये नमः । अग्नि०

(ग) ४ ॐ क्रों ह्रीं आं वैवस्वताय धर्मराजाय भक्तानुग्रहकृते नमः । यम०

(घ) ४ ॐ नमो विचित्राय धर्मलेखकाय यमवाहिकाधारिणे यमलवरयूं जन्मसम्पत्प्रलयं कथय स्वाहा । चित्रगुप्त०

(ङ) ४ क्षं निर्ऋतये नमः । निर्ऋति०

(च) ४ वं वरुणाय नमः । वरुण०

(छ) ४ यं वायवे नमः । वायु०

(ज) (१) ४ ॐ क्रीं यक्षाय कुबेराय वैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे देहि दापय स्वाहा । कुबेर०

(२) ४ ॐ श्रीं ॐ ह्रीं श्रीं ह्रीं क्लीं वित्तेश्वराय नमः । कुबेर०

(झ) ४ ॐ हं ॐ नमो भगवते रुद्राय हं ॐ । रुद्र०

२१—इन्द्राक्षीमनुः—

(क) ४ ॐ ऐं घ्रीं ह्रीं हूं दुं लं श्रीं ईं इन्द्राक्षि रक्ष रक्ष मम शत्रून् दुःखग्रन्थि स्फोटय स्फोटय मम अरीन् भञ्जय भञ्जय मम मनोग्रन्थि शरीरग्रन्थि घातय घातय हुं फट् स्वाहा । सुरनायिकाइन्द्राक्षीश्री०

(ख) ४ ॐ श्रीं छ्रां ऐं क्लीं सौः ॐ नमो भगवति इन्द्राक्षि भूतभविष्यद्वर्तमानकालवादिनि प्रपञ्चकारिणि ( अमुकं ) मे कार्यं कथय सौः क्लीं ऐं छ्रां श्रीं ॐ स्वाहा । सर्ववादिनीइन्द्राक्षी०

२२—दत्तात्रेयमन्त्राः—

(क) ४ आं ह्रीं क्रों ऐं क्लीं सौः श्रीं ग्लौं द्रां । दत्तात्रेय०

(ख) ४ ॐ ह्रीं द्रां दत्तात्रेयाय नमः द्रां ह्रीं ॐ । दत्तात्रेय०

(ग) ४ ॐ ह्रीं द्रां दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ।
दिगम्बरमुने बालपिशाचज्ञानसागर द्रां ह्रीं ॐ । दत्तात्रेय०

२३—द्वादशाक्षरीमनुः—

४ ॐ नमो भगवते वासुदेवाय । वासुदेव०

२४—अष्टाक्षरीमनुः—

४ ॐ नमो नारायणाय । नारायण०

२५—रूद्रमनुः—

४ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः ।
भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः ॥
मकाररूपाय संहारकर्त्रे रुद्राय नमः । रुद्रश्री०

२६—४ हृस्रैं हृस्क्लीं हृस्रौः हृस्ख्फ्रें भगवत्यम्बे हसक्षमलवरयूं हृस्ख्फ्रें अघोरमुखि छ्रां छ्रीं किणि किणि विच्चे हृस्रौः हृस्ख्फ्रें हृस्रौः पश्चिमाम्नायसमयविद्येश्वरीकुब्जिकादेव्याम्बाश्री०

४ मूलं दशदूतीमण्डलत्रयवीरदशकचतुःषष्टिसिद्धनाथसहितायै लोपामुद्रादिसमयविद्येश्वरीपर्यन्तद्विसहस्रदेवतापरिसेवितायै जालन्धरपीठस्थितायै पश्चिमाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः ॥

इति पश्चिमाम्नायः ।

अथ उत्तराम्नायः

समष्टिचक्रे उत्तराम्नायदेवतां कुब्जकालीं पञ्चमुण्डासनां बन्धूककुसुमारुणां तादृशवस्त्राभरणानुलेपनां चन्द्रचूडां मुण्डमालाधरां त्रिनेत्रां वामोर्ध्वादितदधोऽन्तं पुस्तकाक्षमालावराभयकरां ध्यात्वा—

१—नवमुद्राः—

४ द्रां सर्वसंक्षोभिणीमुद्राश्री०।४ द्रीं सर्वविद्राविणीमुद्रा०। ४ क्लीं सर्वाकर्षिणीमुद्रा०।४ ब्लूं सर्ववशङ्करीमुद्रा०। ४ सः सर्वोन्मादिनीमुद्रा०। ४ क्रों सर्वमहाङ्कुशा मुद्रा०। ह्स्ख्फ्रें सर्वखेचरी मुद्रा०। ४ ह्सौः सर्वबीज मुद्रा०। ४ ऐं मर्वयोनि मुद्रा०।

२—वीरावलीपञ्चकमनुः—

४ ऐं ह्रीं श्रीं ऐं क्लीं सौः लं ब्रह्मवीरावलीश्री०

" " वं विष्णुवीरावली०

" " रं रुद्रवीरावली०

" " यं ईश्वरवीरावली०

" " हं सदाशिववीरावली०

देवताः।

३—तुरीयमनुः—४ हसकल हसकहल सकलह्रीं। तुरीयाम्बा०

२—महार्घमनुः—४ ऐं ईं औः क-५-ह-६-स-४ सं सृष्टिनित्ये स्वाहा हं स्थितिपूर्णे नमः, रं महासंहारिणि कृशे चण्डकालि फट्, रं ह्स्ख्फ्रें महानाख्ये अनन्तभास्करि महाचण्डकालि फट्, रं महासंहारिणि कृशे चण्डकालि फट्, हं स्थितिपूर्णे नमः, सं सृष्टिनित्ये स्वाहा। महार्घाम्बा०।

५—अश्वारूढामनुः—४ आं ह्रीं क्रों एहि परमेश्वरि स्वाहा। अश्वारूढाम्बा०

६—मिश्राम्बामनुः—४ ऐं। मिश्राम्बा०

७—वाग्वादिनीमनुः—

४ ऐं वद वद वाग्वादिनि स्वाहा। वाग्वादिन्यम्बा०

८—दुर्गामनुः—

(क) ४ ॐ श्रीं ह्रीं क्लीं दुं उत्तिष्ठ पुरुषे किं स्वपिषि भयं मे समुपस्थितं यदि शक्यमशक्यं वा तन्मे भगवति शमय शमय स्वाहा। वनदुर्गाम्बाश्री०

(ख) ४ ॐ श्रीं ह्रीं क्लीं क्ष्रौं दुं ज्वल ज्वल शूलिनि दुष्टग्रह हुं फट् स्वाहा। शूलिनीदुर्गाम्बा०

(ग) ४ ॐ ह्रीं दुं जातवेदसे सुनवाम सोमम रातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः— दुं ह्रीं ॐ। जातवेदोदुर्गाम्बा०

(घ) ४ ॐ ह्रीं दुं दुर्गां देवीं शरणमहं प्रपद्ये दुं ह्रीं ॐ। शान्तिदुर्गाम्बा०

(ङ) ४ ॐ ह्रां ह्रीं सौः ऐं श्रीं क्षं दुं शबरिदुर्गायै क्रों अमलवरयूं आदि-शक्तिस्वरूपिणि अक्षरमये रक्षःकुलनाशनि मां रक्ष रक्ष मम शत्रून् विदारय विदारय रोगान् भस्मीकुरु भस्मीकुरु कृत्रिमान् दह दह प्राणान् वह वह आभिचारिकान् नाशय नाशय सर्वं मां रक्ष रक्ष शबरिदुर्गायै हुं फट् स्वाहा। शबरिदुर्गाम्बा०

(च) ४ ह्रां ह्रीं सौः ग्लौं ऐं श्री ज्वलदुर्गे एह्येहि स्फुर प्रस्फुर आदि-विष्णुसोदरि अस्त्रज्वलदुर्गे आवेशयावेशय। ज्वलदुर्गाय विद्महे जाज्वल्यमानाय धीमहि। तन्नो बडवानलः प्रचोदयात्। वमल-वरयूं ज्वलदुर्गास्त्रे हुं फट् स्वाहा। ज्वलदुर्गाम्बा०

(छ) ४ खं चिटि चिटि चण्डालि महाचण्डालि (अमुकं) मे वशमानय स्वाहा। लवणदुर्गाम्बाश्री०

(ज) ४ ॐ क्रों ह्रीं आं दुं दुर्गे एह्येहि आवेशयावेशय ह्रीं दुं दुर्गे आं ह्रीं क्रों ॐ हुं फट् स्वाहा। दीपदुर्गाम्बा०

(झ) ४ ॐ श्रीं ह्रीं कटुके कटुपत्रके असुभगे आसुरि रक्तवसने अथर्वण-दुहिते अघोरे घोरकर्मकारिके (अमुकस्य) प्रतिस्थतस्य साध्यस्य गतिं दह दह उपविष्टस्य गुदं दह दह प्रसुप्तस्य मनो दह दह प्रवुद्धस्य हृदयं दह दह हन हन पच पच नामरूपं दह दह तावद्दह तावत्पच यावन्मे वशमागच्छति तावन्मे वशमानय स्वाहा। असुरदुर्गाम्बा०

९—कालीमनुः—

४ क्रीं क्रीं क्रीं हुँ हुँ हुँ ह्रीं ह्रीं ह्रीं दक्षिणकालिके ह्रीं ह्रीं ह्रीं हुँ हुँ हुँ क्रीं क्रीं क्रीं स्वाहा। दक्षिणकालिकाम्बा०

१०—चण्डीमनुः—

४ ऐं ह्रीं क्लीं चामुण्डायै विच्चे। चण्डिकापरमेश्वरी०

११—नकुलीमनुः—

४ ओष्ठापिधाना नकुली दन्तैः परिवृताः पविः,
सर्वस्यै वाच ईशाना चारु मामिह वादयेत्। नकुलीवाग्देवता०

१२—पुलिन्दिनीमनुः—

४ ॐ ईं नमो भगवति शारदादेव्यत्यन्तामलभोज्यं देहि देहि आगच्छ आगच्छ आगन्तुकं हृदि संस्थं कार्यं सत्यं ब्रूहि ब्रूहि पुलिन्दिनि ईं ॐ स्वाहा। पुलिन्दिन्यम्बाश्री०

१३—रेणुकामनुः—

४ क्लीं नमो भगवति रक्तपञ्चमि रेणुकादेवि हन हन पच पच अखिल-जगन्मे वशं कुरु कुरु स्वाहा क्लीं। रेणुकाम्बा०

१४—लक्ष्मीमनुः—

४ ॐ श्रीं ह्रीं क्लीं महालक्ष्मि एह्येहि सर्वसौभाग्यं देहि मे स्वाहा। महालक्ष्म्यम्बा०

१५—वागीशामनुः—४ सं सरस्वत्यै नमः। वागीशा०

१६—मातृकामनुः—

४ ॐ श्रीं ह्रीं क्लीं अं आं—लं क्षं क्लीं ह्रीं श्रीं ॐ। मातृकाम्बा०

१७—स्वयंवरामनुः—

४ ॐ ह्रीं योगिनि योगिनि योगेश्वरि योगाभयङ्करि सकलस्थावर-जङ्गममुखहृदयं मम वशमाकर्षयाकर्षय स्वाहा। स्वयंवराम्बा०

१८—वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय

नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः । अर्धमात्राकाराय तिरोधानकर्त्रे ईश्वराय नमः । ईश्वरश्री०

१९—४ ह्स्ख्फ्रें महाचण्डयोगीश्वरि कालिके फट् । उत्तराम्नायसमयविद्येश्वरिकालिकादेव्यम्बा०

४ मूलं नवमुद्रापञ्चवीरावलीसहितायै तुर्याम्बादिसमयविद्येश्वरीपर्यन्तद्विसहस्रदेवतापरिसेवितायै ओड्याणपीठस्थितायै उत्तराम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीमहात्रिपुरसुन्दरीश्रीपादुकां पूजयामि नमः ॥

इत्युत्तराम्नायः ।

## पंचदशीपक्षे चतुराम्नायः षोडशीपक्षे तु षडाम्नायः

### अथ ऊर्ध्वाम्नायः

अमृतार्णवमध्योद्यत्स्वर्णद्वीपे मनोरमे ।
कल्पवृक्षवनान्तःस्थे नवमाणिक्यमण्डपे ॥
नवरत्नमयश्रीमत्सिंहासनगताम्बुजे ।
त्रिकोणान्तःसमासीनं चन्द्रसूर्यायुतप्रभम् ॥
अर्धाम्बिकासमायुक्तं प्रविभक्तविभूषणम् ।
कोटिकन्दर्पलावण्यं सदा षोडशवार्षिकम् ॥
मन्दस्मितमुखाम्भोजं त्रिनेत्रं चन्द्रशेखरम् ।
दिव्याम्बरस्रगालेपं दिव्याभरणभूषितम् ॥
पानपात्रं च चिन्मुद्रां त्रिशूलं पुस्तकं करैः ।
विद्यासंसदि बिभ्राणं सदानन्दमुखेक्षणम् ॥
महाषोढोदिताशेषदेवतागणसेवितम् ।
एवं चित्ताम्बुजे ध्यायेदर्धनारीश्वरं शिवम् ॥
पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ।
सर्वतेजोमयं ध्यायेत् सचराचरविग्रहम् ॥

## गुरुमण्डलम्

१—मालिनीमन्त्रः—

४ ऐं ह्रीं श्रीं अं आं——ळं क्षं श्रीं ह्रीं एं मालिन्यम्बा०

२—मन्त्रराजः—४ ह्लां ह्लीं हुं फट् । मन्त्रराजश्री०

देवताः ।

३—परापोडशीः—

४ श्रीं सौः क्लीं ऐं ह्रीं श्रीं ह्रीं ॐ सकलह्रीं हसकहलह्रीं कएईलह्रीं ह्रीं श्रीं ऐं क्लीं सौः । परापोडश्यम्बा०

४—पराभट्टारिकामनुः—४ सौः । पराभट्टारिकाम्बाश्री०

५—पराशांभवमनुः—

४ ऐं ह्रीं श्रीं हस्ख्फ्रें ह्सौः अहमहं अहमहं ह्सौः ह्स्ख्फ्रें श्रीं ह्रीं ऐं । पराशाम्भव०

६—पराशांभवीः—४ ह्स्ख्फ्रें ह्रीं सौः श्रीं हुं । पराशाम्भव्यम्बा०

७—प्रासादः—

(क) ४ ह्सौः । प्रासादपराम्बा०

(ख) ४ स्हौः । पराप्रासादाम्बा०

८—दहरम्—४ हं सं रं ईं । दहरविद्याम्बा०

९—हंसः—४ हंसः । हंसश्री०

१०—महावाक्यम्—

४ प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, तत्त्वमसि, अयमात्मा ब्रह्म । महावाक्याम्बा०

११—पञ्चाक्षरी—

(क) ४ ॐ नमः शिवाय । शिवपञ्चाक्षर्यम्बा०

(ख) ४ ॐ ह्रीं नमः शिवाय । शक्तिपञ्चाक्षर्यम्बा०

१२—तारकं—४ ॐ ह्रीं । तारक०

१३—४ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपति-र्ब्रह्मा शिवो मे अस्तु सदाशिवोऽम् । मन्त्रातीतस्वरूपायानुग्रहकर्त्रे सदाशिवाय नमः । सदाशिवश्री०

१४—मखपरयघच् महिचनडयङ् गंशफर् । ऊर्ध्वाम्नायसमयविद्येश्वर्यम्बा श्री० ४ मूलं श्रीमन्मालिनिमन्त्रराजगुरुमण्डलसहितायै पराम्बादिसमयविद्येश्वरीपर्यन्त-अशीतिसहस्रदेवतापरिसेवितायै शाम्भवपीठस्थितायै ऊर्ध्वाम्नायसमष्टिरूपिण्यै श्रीमहात्रिपुरसुन्दर्यै नमः । श्रीमहात्रिपुरसुन्दरीपराभट्टारिकाश्रीपादुकां पूजयामि नमः ॥

इत्यूर्ध्वाम्नायः ।

## अथ अनुत्तराम्नायः ।

### गुरुमण्डलम् ।

१—महापादुका—

४ ऐं ह्रीं श्रीं ऐं क्लीं सौः ऐं ग्लौं ह्स्ख्फ्रें ह्सक्षमलवरयूं सहक्षमलवरयीं ह्सौः स्हौः । श्रीविद्यानन्दनाथात्मकचर्यानन्दनाथश्रीमहापादुकांपूज०नमः ।

२—संप्रदायपादुका—

४ श्रीं ह्रीं क्लीं अमृततरंगिणीपादुकापरमेश्वरी वौषट् । संप्रादयपादुका०

३—कादिविद्यागुरुपरम्परा—

४ परप्रकाशानन्दनाथ०

४ परशिवानन्दनाथ०

४ पराशक्त्याम्बा०

४ कौलेश्वरानन्दनाथ०

४ शुक्लदेव्यम्बा०

४ कुलेश्वरानन्दनाथ०

४ कामेश्वर्यम्बा०

४ भोगानन्दनाथ०

४ क्लिन्नानन्दनाथ०

४ समयानन्दनाथ०

४ सहजानन्दनाथ०

४ गगनानन्दनाथ०

४ विश्वानन्दनाथ०

४ विमलानन्दनाथ०

४ मदनानन्दनाथ०

४ भुवनानन्दनाथ०

४ लीलाम्बा०

४ स्वात्मानन्दनाथ०

४ प्रियानन्दनाथ०

४—कामराजचरणाः—

४ ऐं ह्रीं श्रीं योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि सोहं।
स्वच्छप्रकाशपरिपूर्णपरापरमहाप्रकाशपरिपूर्णानन्दनाथश्री०

| | | | |
|---|---|---|---|
| ४ ऐं क-५ हंसः। | रक्तचरणश्रीपादुकां पूजयामि नमः। | | |
| ,, ,, | रक्तचरणाम्बा | ,, | ,, |
| ४ क्लीं ह-६ सोहं। | शुक्लचरण | ,, | ,, |
| ,, ,, | शुक्लचरणाम्बा | ,, | ,, |
| ४ सौः स-४ हंसःसोहं। | मिश्रचरण | ,, | ,, |
| ,, ,, | मिश्रचरणाम्बा | ,, | ,, |

४ ऐं क-५ क्लीं ह-६ सौः स-४ हंसः सोहं निर्वाणचरणश्री०

,, ,, ,, निर्वाणचरणाम्बाश्री०

देवताः।

५—पञ्चाम्बाः—

४ आदिनाथव्योमातीताम्बाश्रीपादुकां पूजयामि नमः।
४ आदिनाथव्योमेश्वर्यम्बाश्री० ,,
४ अनामयानन्दनाथव्योमगाम्बाश्री० ,,
४ अनन्तानन्दनाथव्योमचारिण्यम्बाश्री० ,,
४ चिदाभासव्योमस्थाम्बाश्री० ,,

६—नवनाथमन्त्राः—

४ हं उन्मन्याकाशानन्दनाथश्रीपादुकां पूजयामि नमः
४ सं समाकाशानन्दनाथश्री० ,,
४ क्षं व्यापकाकाशानन्दनाथश्री० ,,
४ मं शक्त्याकाशानन्दनाथश्री० ,,
४ लं ध्वन्याकाशानन्दनाथश्री० ,,
४ वं ध्वनिमात्राकाशानन्दनाथश्री० ,,
४ रं इन्द्वाकाशानन्दनाथश्री० ,,
४ यं चिदाकाशानन्दनाथश्री० ,,
४ ऊं व्यस्ताकाशानन्दनाथश्री० ,,
४ हसक्षमलवरयऊं समस्ताकाशानन्दनाथश्रीपादुकां पूजयामि नमः

७—मूलविद्याः—

(क) ४ ह्लीं स्वच्छप्रकाशपरिपूर्णपरापरमहासिद्धविद्याकुलयोगिनी ह्लीं। ह्लींमूलविद्याम्बा०

(ख) ४ ह्सौः स्वात्मानं बोधय बोधय स्हौः। प्रासादपरामूलविद्याम्बा०

(ग) ४ ऐं ब्लूं क्लिन्ने क्लेदिनि महामदद्रवे क्लीं क्लेदय क्लां क्लीं मोहय मोहय क्लीं नमः स्वाहा। अतिरहस्ययोगिनीमूलविद्याम्बा०

(घ) ४ हंसः स्वच्छप्रकाशपरिपूर्णानन्दपरमहंसपरमहात्मने स्वाहा ह्सौः ह्स्ख्फ्रें। शाम्भवीमूलविद्याम्बाश्री०

(ङ) ह्लीं नित्यस्फुरणचैतन्यानन्दमयी महाबिन्दुव्यापकमातृकास्वरूपिणी ऐं ह्लीं श्रीं ईं। हृल्लेखामूलविद्याम्बाश्री०

(च) ४ ऐं ह्लीं श्रीं स्वच्छप्रकाशात्मिके ह्लीं कुलमहामालिनि ऐं कुलमातृके ह्लीं ऐं समयविमले श्रीं। समयविमलामूलविद्याम्बाश्री०

(छ) ४ हंसः स्वच्छप्रकाशपरिपूर्णपरापरमहाप्रकाशात्मिके कुलकुण्डलिनि आज्ञासिद्धिमहाभैरवि आत्मानं बोधय बोधय अम्बे भगवति ह्लीं हुं। परबोधिनीमूलविद्याम्बाश्री०

(ज) ४ ॐ मोक्षं कुरु कुरु। कौलपञ्चाक्षरीमूलविद्याम्बाश्री०

(झ) ४ हसकलह्लीं हसकहलह्लीं सकलह्लीं। चैतन्यमूलविद्याम्बा०

(ञ) ४ ऐं शुद्धसूक्ष्मनिराकारनिर्विकल्पपरब्रह्मस्वरूपिणी क्लीं परमानन्दशक्तिः सौः। शाम्भवानन्दनाथानुत्तरकौलिनीमूलविद्याम्बा०

(ट) ४ हंसस्सोहं स्वच्छानन्दपरमहंसपरमात्मने स्वाहा। गुरूत्तमविमर्शिनीमूलविद्याम्बा०

(ठ) ४ अनामाख्यव्योमातीतानन्दनाथपरापरव्योमातीतव्योमेश्वर्यम्बायै नमः। अनामाख्यमूलविद्याम्बा०

(ड) ४ ऐं ईं ॐ। सङ्केतसारमूलविद्याम्बा०

(ढ) ४ ह्लीं भगवति विच्चे वाग्वादिनि क्लीं महाहृदयमातङ्गिनि ऐं क्लिन्ने ब्लूं स्त्रीं। अनुत्तरवाग्वादिनीमूलविद्याम्बा०

८—पञ्चदशाक्षरी—

४ क-१५ । पञ्चदशाक्षरीब्रह्मविद्याम्बा०

९—महाषोडशी—

४ श्रीं ह्रींक्लींऐंसौः ॐह्रींश्रीं क-५ ह-६ स-४ सौः ऐं क्लीं ह्रीं श्रीं महाषोडश्यम्बा०

१०—पूर्तिविद्या—

४ हसकल हसकहल सकलह्रीं सर्वानन्दमयबैन्दवचक्रे परब्रह्मस्वरूपिणी-परामृतशक्ति-सर्वमन्त्रेश्वरी-सर्वयन्त्रेश्वरी - सर्वतन्त्रेश्वरी - सर्ववीरेश्वरी-सर्वयोगीश्वरी-सकलजगदधिष्ठानदेवतायै श्रीमहापूर्तिविद्यायै नमः । श्रीमहापूर्तिविद्याम्बा०

११—षडाधारविद्यामनुः—

४सां हंसः मूलाधाराधिष्ठानदेवतायै साकिनीसहितगणनाथस्वरूपिण्यै नमः । गणनाथरूपिण्यम्बा०

४कां सोहंस्वाधिष्ठानाधिष्ठानदेवतायै काकिनीसहितब्रह्मस्वरूपिण्यै नमः। ब्रह्मस्वरूपिण्यम्बा०

४ लां हंसः सोहं मणिपूरकाधिष्ठानदेवतायै लाकिनीसहितविष्णुस्वरूपिण्यै-नमः । विष्णुस्वरूपिण्यम्बा०

४ रां हंसश्शिवस्सोहं अनाहताधिष्ठानदेवतायै राकिणीसहितसदाशिव-स्वरूपिण्यै नमः । सदाशिवस्वरूपिण्यम्बा०

४ डां सोहं हंसश्शिवः विशुद्ध्यधिष्ठानदेवतायै डाकिनीसहितजीवेश्वर-स्वरूपिण्यै नमः । जीवेश्वरस्वरूपिण्यम्बा०

४हां हंसश्शिवस्सोहं सोहं हंसश्शिवः आज्ञाधिष्ठानदेवतायै हाकिनीसहित परमात्मस्वरूपिण्यै नमः । परमात्मस्वरूपिण्यम्बा०

१२–(क) ४ ऐं क्लीं सौः श्रीं ह्रीं क्लीं क-५ ह-६ स-४ ह-५ ह-६ स-४ हस-कल हसकहल सकलह्रीं क्लीं ह्रीं श्रीं श्रीं सौः क्लीं श्रीं ह्रीं ऐं प्रकाशचरणाभ्यां नमः । प्रकाशचरणश्री०

(ख) ४ ऐं क्लीं सौः श्रीं ह्रीं क्लीं क-५ ह-६ स-४ ह-५ ह-६ स-४ हस-
कल हसकहल सकलह्रीं क्लीं ह्रीं श्रीं श्रीं सौः क्लीं श्रीं ह्रीं ऐं
विमर्शचरणाभ्यां नमः विमर्शचरणश्री०

१३—४ भगवति विच्चे महामाये मातङ्गिनि ब्लूं अनुत्तरवाग्वादिनि ह्स्ख्फ्रें
ह्स्ख्फ्रें ह्सौः। अनुत्तरशाङ्कर्यम्बा०

४ मूलं परिपूर्णानन्दनाथादिनवनाथसहितायै चतुर्दशमूलविद्याद्यनुत्तर-
शाङ्कर्यनन्तानन्तदेवतापरिसेवितायै अनुत्तराम्नायसमष्टिरूपिण्यै श्रीमहा-
त्रिपुरसुन्दर्यै नमः। श्रीमहात्रिपुरसुन्दरीपराभट्टारिकाश्रीपादुकां
पूजयामि नमः।

इत्यनुत्तराम्नायः।

॥ इति षडाम्नायाः॥

---

## सम्बुद्ध्यन्तखड्गमाला-मन्त्रः

अस्य श्रीशुद्धशक्तिसम्बुद्ध्यन्तमालामहामन्त्रस्य, उपस्थेन्द्रियाधिष्ठायि-
वरुणादित्यऋषये नमः शिरसि। गायत्रीच्छन्दसे नमः मुखे। सात्त्विकककार-
भट्टारकपीठस्थितशिवकामेश्वराङ्कनिलयायै कामेश्वरीललितामहाभट्टारिकायै
देवतायै नमः हृदये।

ऐं बीजं, क्लीं शक्तिः सौः कीलकं, खड्गसिद्धौ विनियोगः। ह्रां इत्यादिना
करहृदयादिन्यासः।

ध्यानम्—तादृशं खड्गमाप्नोति येन हस्तस्थितेन वै।
अष्टादशमहाद्वीपसम्राड्भोक्ता भविष्यति॥

लमित्यादि पञ्चपूजा।

ऐं ह्रीं श्रीं ॐ नमस्त्रिपुरसुन्दरि (१२) हृदयदेवि शिरोदेवि शिखादेवि
कवचदेवि नेत्रदेव्यस्त्रदेवि (३७) कामेश्वरि भगमालिनि नित्यक्लिन्ने भेरुण्डे
वह्निवासिनि महावज्रेश्वरि शिवदूति त्वरिते कुलसुन्दरि नित्ये नीलपताके
विजये सर्वमङ्गले ज्वालामालिनि चित्रे महानित्ये (१०२) परमेश्वरपरमेश्वरि

मित्रीशमयि षष्ठीशमय्युड्डीशमयि चर्यानाथमयि लोपामुद्रामय्यगस्त्यमयि कालतापनमयि धर्माचारमयि मुक्तकेशीश्वरमयि दीपकलानाथमयि विष्णुदेवमयि प्रभाकरदेवमयि तेजोदेवमयि मनोजदेवमयि कल्याणदेवमयि रत्नदेवमयि वासुदेवमयि (२१७) श्रीरामानन्दमय्यणिमासिद्धे लघिमासिद्धे महिमासिद्धे ईशित्वसिद्धे वशित्वसिद्धे प्राकाम्यसिद्धे भुक्तिसिद्धे इच्छासिद्धे प्राप्तिसिद्धे सर्वकामसिद्धे (२७१) ब्राह्मि माहेश्वरि कौमारि वैष्णवि वाराहि माहेन्द्रि चामुण्डे महालक्ष्मि (२९६) सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्ववशङ्करि सर्वोन्मादिनि सर्वमहाङ्कुशे सर्वखेचरि सर्वबीजे सर्वयोने सर्वत्रिखण्डे त्रैलोक्यमोहनचक्रस्वामिनि प्रकटयोगिनि (३६५) कामाकर्षिणि बुद्ध्याकर्षिण्यहङ्काराकर्षिणि शब्दाकर्षिणि स्पर्शाकर्षिणि रूपाकर्षिणि रसाकर्षिणि गन्धाकर्षिणि चित्ताकर्षिणी धैर्याकर्षिणि स्मृत्याकर्षिणि नामाकर्षिणि बीजाकर्षिण्यात्माकर्षिण्यमृताकर्षिणि शरीराकर्षिणी सर्वाशापरिपूरकचक्रस्वामिनि (४५९) गुप्तयोगिन्यनङ्गकुसुमेऽनङ्गमेखलेऽनङ्गमदनेऽनङ्गमदनातुरेऽनङ्गरेखेऽनङ्गवेगिन्यनङ्गाङ्कुशेऽनङ्गमालिनि सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि (५२२) सर्वसंक्षोभिणि सर्वविद्राविणि सर्वाकर्षिणि सर्वाह्लादिनि सर्वसंमोहिनि सर्वस्तम्भिनि सर्वजृम्भिणि सर्ववशङ्करि सर्वरञ्जिनि सर्वोन्मादिनि सर्वार्थसाधिनि सर्वसंपत्तिपूरणि सर्वमन्त्रमयि सर्वद्वन्द्वक्षयङ्करि सर्वसौभाग्यदायकचक्रस्वामिनि संप्रदाययोगिनि (६२४) सर्वसिद्धिप्रदे सर्वसंपत्प्रदे सर्वप्रियङ्करि सर्वमङ्गलकारिणि सर्वकामप्रदे सर्वदुःखविमोचिनि सर्वमृत्युप्रशमनि सर्वविघ्ननिवारिणि सर्वाङ्गसुन्दरि सर्वसौभाग्यदायिनि सर्वार्थसाधकचक्रस्वामिनि कुलोत्तीर्णयोगिनि (७१२) सर्वज्ञे शर्वशक्ते सर्वैश्वर्यप्रदे सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि (७८९) वशिनि कामेश्वरि मोदिनि विमलेऽरुणे जयिनि सर्वेश्वरि कौलिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि (८३१) बाणिनि चापिनि पाशिन्यङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महाश्रीसुन्दरि सर्वसिद्धिप्रदचक्र-

स्वामिन्यतिरहस्ययोगिनि (८८६) श्रीश्रीमहाभट्टारिके सर्वानन्दमयचक्र-स्वामिनि परापररहस्ययोगिनि (९१५) त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महात्रिपुर-सुन्दरि (९६१) महामहेश्वरि महामहाराज्ञि महामहाशक्ते महामहागुप्ते महा-महाज्ञप्ते महामहानन्दे महामहास्पन्दे महामहाशये महामहाश्रीचक्रनगरसम्राज्ञि नमस्ते (त्रिः) स्वाहा श्रीं ह्रीं ऐं ॥१०३१॥

एकत्रिंशदधिकसहस्राक्षराणि । इति संबुद्ध्यन्तखड्गमाला ।

## चतुर्थ्यन्त—खड्गमालामन्त्रः

अस्य श्रीखड्गमालामन्त्रस्य उपस्थाधिष्ठायिने वरुणादित्यऋषये नमः शिरसि, गायत्रीच्छन्दसे नमः मुखे, ललितादेवतायै नमः हृदये, क ५ बीजाय नमः गुह्ये, ह ६ शक्तये नमः पादयोः, स ४ कीलकाय नमः नाभौ, श्रीललिता-प्रसादसिद्ध्यर्थे पाठे विनियोगः । कूटत्रयद्विरावृत्त्या करहृदयादिन्यासः ।

ध्यानम्

बालार्कारुणतेजसं त्रिनयनां रक्ताम्बरोल्लासिनीं
नानालङ्कृतिराजमानवपुषं बालोडुराड्शेखराम्
हस्तैरिक्षुधनुःसृणीसुमशरान् पाशं मुदा बिभ्रतीं
श्रीचक्रस्थितसुन्दरीं त्रिजगतामाधारभूतां स्मरेत् ॥

इति ध्यात्वा मानसैः संपूज्य ।

ॐ ऐं ह्रीं श्रीं ॐ नमः त्रिपुरसुन्दर्यै नमः
४ ,, हृदयदेव्यै नमः
४ ,, शिरोदेव्यै नमः
४ ,, शिखादेव्यै नमः
४ ,, कवचदेव्यै नमः
४ ,, नेत्रदेव्यै नमः
४ ,, अस्त्रदेव्यै नमः
४ ॐ कामेश्वर्यै नमः
४ ,, भगमालिन्यै नमः
४ ,, नित्यक्लिन्नायै नमः
४ ,, भेरुण्डायै नमः
४ ,, वह्निवासिन्यै नमः
४ ,, महावज्रेश्वर्यै नमः
४ ,, शिवदूत्यै नमः

४ ॐ त्वरितायै नमः
४ ,, कुलसुन्दर्यै नमः
४ ,, नित्यायै नमः
४ ,, नीलपताकायै नमः
४ ,, विजयायै नमः
४ ,, सर्वमङ्गलायै नमः
४ ,, ज्वालामालिन्यै नमः
४ ,, चित्रायै नमः
४ ,, महानित्यायै नमः
४ ,, परमेश्वरपरमेश्वर्यै नमः
४ ,, मित्रीशमय्यै नमः
४ ,, षष्ठीशमय्यै नमः
४ ,, उड्डीशमय्यै नमः
४ ,, चर्यानाथमय्यै नमः
४ ,, लोपामुद्रामय्यै नमः
४ ,, अगस्त्यमय्यै नमः
४ ,, कालतापनमय्यै नमः
४ ,, धर्माचार्यमय्यै नमः
४ ,, मुक्तकेशीश्वरमय्यै नमः
४ ,, दीपकलानाथमय्यै नमः
४ ,, विष्णुदेवमय्यै नमः
४ ,, प्रभाकरदेवमय्यै नमः
४ ,, तेजोदेवमय्यै नमः
४ ,, मनोजदेवमय्यै नमः
४ ,, कल्याणदेवमय्यै नमः
४ ,, रत्नदेवमय्यै नमः

४ ॐ वासुदेवमय्यै नमः
४ ,, श्रीरामानन्दमय्यै नमः
४ ,, अणिमासिद्ध्यै नमः
४ ,, लघिमासिद्ध्यै नमः
४ ,, महिमासिद्ध्यै नमः
४ ,, ईशित्वसिद्ध्यै नमः
४ ,, वशित्वसिद्ध्यै नमः
४ ,, प्राकाम्यसिद्ध्यै नमः
४ ,, भुक्तिसिद्ध्यै ममः
४ ,, इच्छासिद्ध्यै नमः
४ ,, प्राप्तिसिद्ध्यै नमः
४ ,, सर्वकामसिद्ध्यै नमः
४ ,, ब्राह्म्यै नमः
४ ,, माहेश्वर्यै नमः
४ ,, कौमार्यै नमः
४ ,, वैष्णव्यै नमः
४ ,, वाराह्यै नमः
४ ,, माहेन्द्र्यै नमः
४ ,, चामुण्डायै नमः
४ ,, महालक्ष्म्यै नमः
४ ,, सर्वसंक्षोभिण्यै नमः
४ ,, सर्वविद्राविण्यै नमः
४ ,, सर्वाकर्षिण्यै नमः
४ ,, सर्ववशङ्कर्यै नमः
४ ,, सर्वोन्मादिन्यै नमः
४ ,, सर्वमहाङ्कुशायै नमः

४ ॐ सर्वखेचर्यै नमः
४ ,, सर्वबीजायै नमः
४ ,, सर्वयोन्यै नमः
४ ,, सर्वत्रिखण्डायै नमः
४ ,, त्रैलोक्यमोहन-
चक्रस्वामिन्यै नमः
४ ,, प्रकटयोगिन्यै नमः
४ ,, कामाकर्षिण्यै नमः
४ ,, बुद्ध्याकर्षिण्यै नमः
४ ,, अहङ्काराकर्षिण्यै नमः
४ ,, शब्दाकर्षिण्यै नमः
४ ,, स्पर्शाकर्षिण्यै नमः
४ ,, रूपाकर्षिण्यै नमः
४ ,, रसाकर्षिण्यै नमः
४ ,, गन्धाकर्षिण्यै नमः
४ ,, चित्ताकर्षिण्यै नमः
४ ,, धैर्याकर्षिण्यै नमः
४ ,, स्मृत्याकर्षिण्यै नमः
४ ,, नामाकर्षिण्यै नमः
४ ,, बीजाकर्षिण्यै नमः
४ ,, आत्माकर्षिण्यै नमः
४ ,, अमृताकर्षिण्यै नमः
४ ,, शरीराकर्षिण्यै नमः
४ ,, सर्वाशापरिपूरकचक्र-
स्वामिन्यै नमः
४ ,, गुप्तयोगिन्यै नमः

४ ॐ अनङ्गकुसुमायै नमः
४ ,, अनङ्गमेखलायै नमः
४ ,, अनङ्गमदनायै नमः
४ ,, अनङ्गमदनातुरायैनमः
४ ,, अनङ्गरेखायै नमः
४ ,, अनङ्गवेगिन्यै नमः
४ ,, अनङ्गाङ्कुशायै नमः
४ ,, अनङ्गमालिन्यैः नमः
४ ,, सर्वसंक्षोभणचक्र-
स्वामिन्यै नमः
४ ,, गुप्ततरयोगिन्यै नमः
४ ,, सर्वसंक्षोभिण्यै नमः
४ ,, सर्वविद्राविण्यै नमः
४ ,, सर्वाकर्षिण्यै नमः
४ ,, सर्वाह्लादिन्यै नमः
४ ,, सर्वसम्मोहिन्यै नमः
४ ,, सर्वस्तम्भिन्यै नमः
४ ,, सर्वजृम्भिण्यै नमः
४ ,, सर्वशङ्कर्यै नमः
४ ,, सर्वरञ्जिन्यै नमः
४ ,, सर्वोन्मादिन्यै नमः
४ ,, सर्वार्थसाधिन्यै नमः
४ ,, सर्वसम्पत्तिपूरण्यै नमः
४ ,, सर्वमन्त्रमय्यै नमः
४ ,, सर्वद्वन्द्वक्षयङ्कर्यै नमः
४ ,, सर्वसौभाग्यदायकचक्र-
स्वामिन्यै नमः

४ ॐ सम्प्रदाययोगिन्यै नमः
४ ,, सर्वसिद्धिप्रदायै नमः
४ ,, सर्वसम्पत्प्रदायै नमः
४ ,, सर्वप्रियङ्कर्यै नमः
४ ,, सर्वमङ्गलकारिण्यै नमः
४ ,, सर्वकामप्रदायै नमः
४ ,, सर्वदुःखविमोचिन्यै नमः
४ ,, सर्वमृत्युप्रशमिन्यै नमः
४ ,, सर्वविघ्ननिवारिण्यै नमः
४ ,, सर्वाङ्गसुन्दर्यै नमः
४ ,, सर्वसौभाग्यदायिन्यै नमः
४ ,, सर्वार्थसाधकचक्र-
स्वामिन्यै नमः
४ ,, कुलोत्तीर्णयोगिन्यै नमः
४ ,, सर्वज्ञायै नमः
४ ,, सर्वशक्त्यै नमः
४ ,, सर्वैश्वर्यप्रदायै नमः
४ ,, सर्वज्ञानमय्यै नमः
४ ,, सर्वव्याधिविनाशिन्यै नमः
४ ,, सर्वाधारस्वरूपायै नमः
४ ,, सर्वपापहरायै नमः
४ ,, सर्वानन्दमय्यै नमः
४ ,, सर्वरक्षास्वरूपिण्यै नमः
४ ,, सर्वेप्सितप्रदायै नमः
४ ,, सर्वरक्षाकरचक्र-
स्वामिन्यै नमः

४ ॐ निगर्भयोगिन्यै नमः
४ ,, वशिन्यै नमः
४ ,, कामेश्वर्यै नमः
४ ,, मोदिन्यै नमः
४ ,, विमलायै नमः
४ ,, अरुणायै नमः
४ ,, जयिन्यै नमः
४ ,, सर्वेश्वर्यै नमः
४ ,, कौलिन्यै नमः
४ ,, सर्वरोगहरचक्र-
स्वामिन्यै नमः
४ ,, रहस्ययोगिन्यै नमः
४ ,, बाणिन्यै नमः
४ ,, चापिन्यै नमः
४ ,, पाशिन्यै नमः
४ ,, अङ्कुशिन्यै नमः
४ ,, महाकामेश्वर्यै नमः
४ ,, महावज्रेश्वर्यै नमः
४ ,, महाभगमालिन्यै नमः
४ ,, महाश्रीसुन्दर्यै नमः
४ ,, सर्वसिद्धिप्रदचक्र-
स्वामिन्यै नमः
४ ,, अतिरहस्ययोगिन्यै नमः
४ ,, श्रीश्रीमहाभट्टारिकायै
नमः
४ ,, सर्वानन्दमयचक्रस्वा-
मिन्यै नमः

४ ॐ परापररहस्य-
योगिन्यै नमः
४ ,, त्रिपुरायै नमः
४ ,, त्रिपुरेश्यै नमः
४ ,, त्रिपुरसुन्दर्यै नमः
४ ,, त्रिपुरवासिन्यै नमः
४ ,, त्रिपुराश्रियै नमः
४ ,, त्रिपुरमालिन्यै नमः
४ ,, त्रिपुरासिद्धायै नमः
४ ,, त्रिपुराम्बमहात्रिपुर-
सुन्दर्यै नमः
४ ,, महामहेश्वर्यै नमः
४ ॐ महामहाराज्ञ्यै नमः
४ ,, महामहाशक्त्यै नमः
४ ,, महामहागुप्तायै नमः
४ ,, महामहाज्ञप्तायै नमः
४ ,, महामहानन्दायै नमः
४ ,, महामहास्पन्दायै नमः
४ ,, महामहाशयायै नमः
४ ,, महामहाश्रीचक्रनगर-
साम्राज्ञ्यै नमस्ते नमस्ते
नमस्ते स्वाहा श्रीं ह्रीं-
ऐं ॐ श्रीपरदेवतार्पण-
मस्तु ।

इति चतुर्थ्यन्तखड्गमालामन्त्रः ।

## अथ श्रीत्रिपुरारहस्योक्तं श्रीललितालक्षार्चनविधानम्

अथ लक्षप्रपूजादिविधानं शृणु वच्मि ते ।
विशेषपर्वसु सदा शुक्रवारेऽपि वाऽऽरभेत् ॥
सङ्कल्प्य पूज्य गणपं स्वस्ति विप्रैर्हि वाचयेत् ।
ततः सम्पूज्य विधिना चाऽऽवृत्यन्तं महेश्वरीम् ॥
पूजयेत्सावृतिं देवीमुपचारैस्तु पञ्चभिः ।
तत्र पुष्पोपचारस्य स्थाने पूजां समाचरेत् ॥
सहस्राद्यैर्नामभिस्तु ततो धूपादिपूजनम् ।
समापयेद्यथावत्तं प्रत्यहञ्चैवमर्चयेत् ॥
समसङ्ख्याविधानेन प्रत्यहं पूजयेत्क्रमात् ।
एकजातीयकैः पुष्पैर्यत्रैव पूजयेत्पराम् ॥

स्वयं वा पुत्रपत्न्याद्यैर्ब्राह्मणद्वारतोऽपि वा ।
अन्ते तु सर्वतोभद्रे नवयोनिसमायुते ॥
कलशं सुप्रतिष्ठाप्य सौवर्णादिसमुद्भवम् ।
अलङ्कृतं सूत्रवस्त्रैर्मध्ये तण्डुलपुञ्जके ॥
अलङ्कृतं धूपितञ्च निधाय मनुमुच्चरन् ।
तमष्टगन्धतोयेन पूरयेत्पञ्चरत्नकम् ॥
निक्षिप्य तस्मिंस्तद्वक्त्रमादाच्छाद्यपञ्चपल्लवैः ।
सतण्डुलं फलं पूर्णं पात्रञ्चापि मुखे न्यसेत् ॥
तत्र प्रतिकृतिं देव्याः सर्वावयवशोभिताम् ।
विन्यस्य तस्यामावाह्य पूजनन्तु समाचरेत् ॥
तत्राऽऽदौ सर्वतोभद्रदेवताः क्रमतो यजेत् ।
दशदिक्षु च दिक्पालान् शृङ्खलासु चतुर्षु च ॥
धर्मादीन्मध्यभवने श्वेतेऽधर्मादिकान् यजेत् ।
रक्तार्धभवने पूर्वात्प्रादक्षिण्येन पूजयेत् ॥
असिताङ्गादिमिथुनं मेखलासु गुणत्रयम् ।
एवं सम्पूज्य कलशे पीठपूजनपूर्वकम् ॥
विधिनाऽऽवाह्य त्रिपुरां पूजयेदुपचारकैः ।
तत्तत्पुष्पादिकं स्वर्णभवं वा रजतोद्भवम् ॥
माषाद्वा कर्षतो वाऽपि कुर्यादन्यूनमुत्तमम् ।
तदर्धं पादमपि वा कृत्वा तन्नवसंख्यकम् ॥
पूजयेदुपचारेषु नामभिर्वशिनीमुखैः ।
मध्ये च त्रिपुरां रात्रौ पूजयेच्चक्रनायकम् ॥
कलशस्य पश्चिमतः सर्वतोभद्रमण्डले ।
स्वयं वा पूजयेदाचार्येण वा क्रमवेदिना ॥

पूजयित्वा यथाशास्त्रं कुमारीं वटुकं तथा ।
गुरुं सुवासिनीश्चापि ब्राह्मणादीनपि क्रमात् ॥

उद्वासरहितां पूजां समाप्याऽखिलसंवृतः ।
कथाभिर्गायनैर्नृत्यैः कुर्याज्जागरणं निशि ॥

परेद्युःकृतकृत्योऽथ पूजयेच्चक्रनायकम् ।
पूजाङ्गहोमतः पश्चादग्निं संसाध्य शास्त्रतः ॥

यथावत्तत्र जुहुयात्तत्तत्पुष्पैः सहस्रकम् ।
पूजां समाप्य चोद्वास्य कलशं वस्त्रसंयुतम् ॥

दक्षिणाप्रतिमायुक्तं सुवासिन्यै निवेदयेत् ।
ब्राह्मणानां षोडशकं सुवासिन्यष्टकं तथा ॥

बटुकांश्च कुमारींश्च वित्तशाठ्यविवर्जितः ।
भोजयेद्भक्ष्यभोज्याद्यैर्दक्षिणाद्यैश्च तोषयत् ॥

एवं पूजनमात्रेण सर्वपापैर्विमुच्यते ।
प्रसन्ना त्रिपुरेशानी वाञ्छितार्थप्रदा भवेत् ॥

सर्वसौभाग्यसंयुक्तो वंशपुत्रैर्युतस्तथा ।
पितॄन्प्रोद्धरते सर्वानन्ते मोक्षं समश्नुते ॥

राज्यप्राप्तिस्तु कमलैः करवीरैर्महच्छ्रियम् ।
जपापुष्पैस्सन्ततिम्वै जातिपुष्पैर्गृहादिकम् ॥

योनिपुष्पैर्वंशवृद्धिं वकुलैः सौमनस्यताम् ।
किंशुकैः रोगनिर्हृतिं कुटजैः शत्रुनाशनम् ॥

एवमन्यैः सुगन्धाढ्यैः पुष्पैः पत्रैश्च भार्गव ! ।
पूजयित्वा विधानेन महाफलमवाप्नुयात् ॥

फलैर्धान्यैरर्चयेच्च प्रोक्तमार्गानुसारतः ।
लक्षवर्त्तिप्रदीपैर्वा पूजयेत्त्रिपुराम्बिकाम् ॥

समर्थस्तत्र वर्तिभ्यां दीपानेव प्रकल्पयेत् ।
दशकेन शतेनापि सहस्रेणाऽपि वा तथा ॥
पञ्चाशद्दशसाहस्रैः सहस्रशतमेव वा ।
एकैकञ्च घृतापूर्णमर्प्ययेदेकनामभिः ॥
सहस्रनामभिर्देयाः शतनामभिरेव वा ।
दशावर्तनकैर्वाऽपि चैकावर्तनकेन वा ॥
तथा पञ्चशतावृत्या दीपं देव्यै समर्पयेत् ।
अन्ते स्वर्णेन रौप्येण नवकं वर्तियुग्मकम् ॥
कृत्वा ताम्रमये दीपे घृतवर्तिसमुज्ज्वले ।
निवेदयेत्तु कलशे पायसेन हुनेत्तथा ॥
श्रीसूक्तेनाऽभिषेकञ्चै कुर्याच्छ्रीचक्रनायके ।
आवृत्तीनां लक्षकेन सहस्रेण शतेन वा ॥
स्वयम्वा ब्राह्मणैर्वापि क्षीरैरिक्षुरसैर्घृतैः ।
मधुभिर्वा फलरसैर्दधिभिर्वा सुगन्धिभिः ॥
तोयैस्तीर्थाद्भवैर्वाऽपि राम ! पूर्वोक्तवर्त्मना ।
अन्ते दशांशतो वह्नौ पायसेन हुनेत्क्रमात् ॥
प्रत्यृचं श्रीसूक्तकस्य पूर्ववत्तु समापयेत् ।
रुद्राभिषेकतो वाऽपि महाफलमुदीरितम् ॥
एवं भार्गव ! सम्प्रोक्तं-धनिनां सुखसाधनम् ॥

इति श्रीललितलक्षार्चनविधानं सम्पूर्णम् ॥

असामर्थ्ये—

"अशक्तः कारयेत्पूजां दद्याद्वार्चनसाधनम् ।
दानाशक्तः सपर्यान्तं पश्येत्तत्परमानसः ।

## अथ श्रीसूक्तमूलपाठः

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥२॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ॥३॥

कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥

आदित्यवर्णे तपसोधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥६॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥७॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥८॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥९॥

मनसः काममाकूतिं वाचः सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥१०॥

कर्दमेन प्रजाभूता मयि सम्भव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥११॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ।
नि च देवीं मातरं श्रियं वासय मे कुले ॥१२॥

आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१३॥

आर्द्रां यष्करिणीं यष्टिं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१४॥

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
श्रियः पञ्चदशर्चं च श्रीकामः सततं जपेत् ॥१६॥

सरसिजनिलये सरोजहस्ते धवलरांशुकगन्धमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् ॥१७॥

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः ।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्विनौ ॥१८॥

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा ।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥१९॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥२०॥

पद्मानने पद्मऊरु पद्माक्षि पद्मसम्भवे ।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥२१॥

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् ।
विष्णुप्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥२२॥

महालक्ष्मीं च विद्महे विष्णुपत्नीं च धीमहि ।
तन्नो लक्ष्मीः प्रचोदयात् ॥२३॥

पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सन्निधत्स्व ॥२४॥

आनन्दः कर्दमः श्रीदः चिक्लीत इति विश्रुताः ।
ऋषयः श्रियपुत्राश्च मयि श्रीर्देवी देवता ॥२५॥
ऋणरोगादिदारिद्र्यं पापक्षुदपमृत्यवः ।
भयशोकमनस्तापा नश्यन्तु मम सर्वदा ॥२६॥
श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पवमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥२७॥

इति फलश्रुतिसहितं श्रीसूक्तं समाप्तम् ॥

# त्रिपुरारहस्योक्तं ज्ञानकालिकास्तोत्रम्

शिवे देवि सम्वित्सुधासागराऽऽत्मस्वरूपाऽसि सर्वान्तराऽऽत्मैकरूपा।
न किञ्चिद् विना त्वत्कलामस्ति लोके ततः सत्स्वरूपाऽसि सत्येऽप्यसत्ये ॥१॥
असत्यं पुनः सत्यमन्ये द्विरूपं द्वयातीतमेके जगुः सर्वमेतत्।
न ते तां विदुर्मायया मोहितास्ते चिदानन्दरूपा त्वमेवाऽसि सर्वम् ॥२॥
क्षणानां क्रमैर्भिन्नरूपां धराद्यैर्मितामाहुरेके तमोमात्ररूपाम्।
तमोदीप्तिसंभिन्नरूपाञ्च शान्तस्वरूपां महेशीं विदुस्त्वां न तेऽज्ञाः ॥३॥
शिवादिक्षितिप्रान्ततत्त्वावलिर्या विचित्रा यदीये शरीरे विभाति।
पटे चित्रकल्पा जले रेन्दुतारा नभोवत्परा सा त्वमेवाऽसि सर्वा ॥४॥
अभिन्नं विभिन्नं बहिर्वाऽन्तरे वा विभाति प्रकाशस्तमो वाऽपि सर्वम्।
ऋते त्वां चितिं येन नो भाति किञ्चित्ततस्त्वं समस्तं न किञ्चित्त्वदन्यत् ॥५॥
निरुध्याऽन्तरङ्गं विलाप्याऽक्षसङ्गं परित्यज्य सर्वत्र कामादिभावम्।
स्थितानां महायोगिनां चित्तभूमौ चिदानन्दरूपा त्वमेका विभासि ॥६॥
तथाऽन्ये मनः सेन्द्रियं सञ्चरच्चाऽन्त्रसंयम्य तन्मार्गके जागरूकाः।
स्वसम्वित्सुधाऽऽदर्शदेहे स्फुरन्तं महायोगिनाथाः प्रपश्यन्ति सर्वम् ॥७॥
निरुक्ते महासारमार्गेऽतिसूक्ष्मे गतिं ये न विन्दन्ति गूढस्वभावाः।
जनान् तान् समुद्धर्तुमक्षावगम्यं बहिः स्थूलरूपं विभिन्नं बिभर्षि ॥८॥
तदाराधनेऽनेकमार्गान् विचित्रान् विधायाऽथ मार्गेण केनापि यान्तम्।
नदीवारि सिन्धुर्यथा स्वीकरोति प्रदाय स्वभावं नु स्वात्मीकरोषि ॥९॥
तथा तासु मूर्तिष्वनेकासु मुख्या धनुर्बाणपाशाङ्कुशाढ्यैव मूर्तिः।
शरीरेषु मूर्धेव ये तां भजेयुर्जनास्त्रैपुरीं मूर्तिमत्युत्तमास्ते ॥१०॥
जनान् दुःखसिन्धोः समुद्धर्तुकामा पथस्ताननेकान् प्रदिश्य प्रकृष्टान्।
दयार्द्रस्वभावेति विख्यातकीर्तिस्त्वमेकैव पूज्या पराशक्तिरूपा ॥११॥
सदा ते पदाब्जे मनःषट्पदो मे पिबन् तद्रसं निर्वृतः संस्थितोऽस्तु।
इति प्रार्थनां मे निशम्याऽऽशु मातर्विधेहि स्वदृष्टिं दयार्द्रामपीपत् ॥१२॥

इति संस्तुत्य सा गौरी त्रिपुरां परमेश्वरीम्!
स्तोत्रेण ज्ञानकलिकाख्येन ध्यानं समास्थिता ॥१३॥

इति ज्ञानकलिकास्तोत्रं सम्पूर्णम्।

श्रीमहात्रिपुरसुन्दर्यै नमः

# सौन्दर्य-लहरी

न्यासः

अस्य श्रीसौन्दर्यलहरीस्तोत्रस्य गोविन्दऋषिः। अनुष्टुप्छन्दः। श्रीमहात्रिपुरसुन्दरीदेवता। शिवः शक्त्या युक्त इति बीजम्। सुधासिन्धोर्मध्य इति शक्तिः। जपो जल्पः शिल्पमिति कीलकम्। ह्लां ह्लीं ह्लूं ह्लैं ह्लौं ह्लः इत्यादि षडङ्गन्यासः॥

ध्यानम्

लौहित्यनिर्जितजपाकुसुमानुरागां पाशाङ्कुशे धनुरिषूनपि धारयन्तीम्।
ताम्रायतामरुणमाल्यविशेषशोभां ताम्बूलपूरितमुखीं त्रिपुरां नमामि॥

लमित्यादिपञ्चोपचाराः।

—०—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।
अतस्त्वामाराध्यां हरिहरविरञ्चादिभिरपि
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥१॥

तनीयांसं पांसुं तव चरणपङ्केरुहभवं
विरञ्चिः सञ्चिन्वन्विरचयति लोकानविकलम्।
वहत्येनं शौरिः कथमपि सहस्रेण शिरसां
हरः संक्षुभ्यैनं भजति भसितोद्धूलनविधिम्॥२॥

अविद्यानामन्तस्तिमिरमिहिरद्वीपनगरी
जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी।
दरिद्राणां चिन्तामणिगुणनिका जन्मजलधौ
निमग्नानां दंष्ट्रा मुररिपुवराहस्य भवति॥३॥

त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-
स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया ।
भयात्त्रातुं दातुं फलमपि च वाञ्छासमधिकं
शरण्ये लोकानां तव हि चरणावेव निपुणौ ॥४॥

हरिस्त्वामाराध्य प्रणतजनसौभाग्यजननीं
पुरा नारी भूत्वा पुरिरपुमपि क्षोभमनयत् ।
स्मरोऽपि त्वां नत्वा रतिनयनलेह्येन वपुषा
मुनीनामप्यन्तः प्रभवति हि मोहाय महताम् ॥५॥

धनुः पौष्पं मौर्वी मधुकरमयी पञ्च विशिखाः
वसन्तः सामन्तो मलयमरुदायोधनरथः ।
तथाऽप्येकः सर्वं हिमगिरिसुते कामपि कृपा-
मपाङ्गात्ते लब्ध्वा जगदिदमनङ्गो विजयते ॥६॥

क्वणत्काञ्चीदामा करिकलभकुम्भस्तननता
परिक्षीणा मध्ये परिणतशरच्चन्द्रवदना ।
धनुर्बाणान् पाशं सृणिमपि दधाना करतलैः
पुरस्तादास्तां नः पुरमथितुराहोपुरुषिका ॥७॥

सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते
मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे ।
शिवाकारे मञ्चे परमशिवपर्यङ्कनिलयां
भजन्ति त्वां धन्याः कतिचन चिदानन्दलहरीम् ॥८॥

महीं मूलाधारे कमपि मणिपूरे हुतवहं
स्थितं स्वाधिष्ठाने हृदि मरुतमाकाशमुपरि ।
मनोऽपि भ्रूमध्ये सकलमपि भित्त्वा कुलपथं
सहस्रारे पद्मे सह रहसि पत्या विहरसे ॥९॥

सुधाधारासारैश्चरणयुगलान्तर्विगलितैः
प्रपञ्चं सिञ्चन्ती पुनरपि रसाम्नायमहसः ।
अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं
स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणि ॥१०॥

चतुर्भिः श्रीकण्ठैः शिवयुवतिभिः पञ्चभिरपि
प्रभिन्नाभिः शम्भोर्नवभिरपि मूलप्रकृतिभिः ।
चतुश्चत्वारिंशद्वसुदलकलाश्रत्रिवलय
त्रिरेखाभिः सार्धं तव शरणकोणाः परिणताः ॥११॥

त्वदीयं सौन्दर्यं तुहिनगिरिकन्ये तुलयितुं
कवीन्द्राः कल्पन्ते कथमपि विरिञ्चिप्रभृतयः ।
यदालोकौत्सुक्यादमरललना यान्ति मनसा
तपोभिर्दुष्प्रापामपि गिरिशसायुज्यपदवीम् ॥१२॥

नरं वर्षीयांसं नयनविरसं नर्मसु जडं
तवापाङ्गालोके पतितमनुधावन्ति शतशः ।
गलद्वेणीबन्धाः कुचकलशविस्रस्तसिचया
हठात्त्रुटचत्काञ्च्यो विगलितदुकूला युवतयः ॥१३॥

क्षितौ षट्पञ्चाशद्द्विसमधिकपञ्चाशदुदके
हुताशे द्वाषष्टिश्चतुरधिकपञ्चाशदनिले ।
दिवि द्विष्षट्त्रिंशन्मनसि च चतुःषष्टिरिति ये
मयूखास्तेषामप्युपरि तव पादाम्बुजयुगम् ॥१४॥

शरज्ज्योत्स्नाशुद्धां शशियुतजटाजूटमकुटां
वरत्रासत्राणस्फटिकघटिकापुस्तककराम् ।
सकृन्न त्वा नत्वा कथमिव सतां संनिदधते
मधुक्षीरद्राक्षामधुरिमधुरीणाः फणितयः ॥१५॥

कवीन्द्राणां चेतःकमलवनबालातपरुचिं
भजन्ते ये सन्तः कतिचिदरुणामेव भवतीम्।
विरिञ्चिप्रेयस्यास्तरुणतरशृङ्गारलहरी-
गभीराभिर्वाग्भिर्विदधति सतां रञ्जनममी ॥१६॥

सवित्रीभिर्वाचां शशिमणिशिलाभङ्गरुचिभि-
र्वशिन्याद्याभिस्त्वां सह जननि सञ्चिन्तयति यः।
स कर्ता काव्यानां भवति महतां भङ्गिरुचिभि-
र्वचोभिर्वाग्देवीवदनकमलामोदमधुरैः ॥१७॥

तनुच्छायाभिस्ते तरुणतरणिश्रीसरणिभि-
र्दिवं सर्वामुर्वीमरुणिमनिमग्नां स्मरति यः।
भवन्त्यस्य त्रस्यद्वनहरिणशालीननयना-
सहोर्वश्या वश्याः कति कति न गीर्वाणगणिकाः ॥१८॥

मुखं बिन्दुं कृत्वा कुचयुगमधस्तस्य तदधो
हरार्धं ध्यायेद्यो हरमहिषि ते मन्मथकलाम्।
स सद्यः संक्षोभं नयति वनिता इत्यतिलघु
त्रिलोकीमप्याशु भ्रमयति रवीन्दुस्तनयुगाम् ॥१९॥

किरन्तीमङ्गेभ्यः किरणनिकुरम्बामृतरसं
हृदि त्वामाधत्ते हिमकरशिलामूर्तिमिव यः।
स सर्पाणां दर्पं शमयति शकुन्ताधिप इव
ज्वरप्लुष्टान् दृष्ट्या सुखयति सुधाधारसिरया ॥२०॥

तटिल्लेखातन्वीं तपनशशिवैश्वानरमयीं
निषण्णां षण्णामप्युपरि कमलानां तव कलाम्।
महापद्माटव्यां मृदितमलमायेन मनसा
महान्तः पश्यन्तो दधति परमाह्लादलहरीम् ॥२१॥

भवानि त्वं दासे मयि वितर दृष्टिं सकरुणा-
मिति स्तोतुं वाञ्छन् कथयति भवानि त्वमिति यः ।
तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीं
मुकुन्दब्रह्मेन्द्रस्फुटमकुटनीराजितपदाम् ॥२२॥

त्वया हृत्वा वामं वपुरपरितृप्तेन मनसा
शरीरार्धं शम्भोरपरमपि शङ्के हृतमभूत् ।
यदेतत्त्वद्रूपं सकलमरुणाभं त्रिनयनं
कुचाभ्यामानम्रं कुटिलशशिचूडालमकुटम् ॥२३॥

जगत्सूते धाता हरिरवति रुद्रः क्षपयते
तिरस्कुर्वन्नेतत्स्वमपि वपुरीशस्तिरयति ।
सदापूर्वः सर्वं तदिदमनुगृह्णाति च शिव-
स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥२४॥

त्रयाणां देवानां त्रिगुणजनितानां तव शिवे
भवेत्पूजा पूजा तव चरणयोर्या विरचिता ।
तथाहि त्वत्पादोद्वहनमणिपीठस्य निकटे
स्थिता ह्येते शश्वन्मुकुलितकरोत्तंसमकुटाः ॥२५॥

विरिञ्चिः पञ्चत्वं व्रजति हरिराप्नोति विरतिं
विनाशं कीनाशो भजति धनदो याति निधनम् ।
वितन्द्री माहेन्द्री विततिरपि संमीलितदृशा
महासंहारेऽस्मिन् विहरति सति त्वत्पतिरसौ ॥२६॥

जपो जल्पः शिल्पं सकलमपि मुद्राविरचना
गतिः प्रादक्षिण्यक्रमणमशनाद्याहुतिविधिः ।
प्रणामः संवेशः सुखमखिलमात्मार्पणदृशा
सपर्यापर्यायस्तव भवतु यन्मे विलसितम् ॥२७॥

सुधामप्यास्वाद्य प्रतिभयजरामृत्युहरिणीं
विपद्यन्ते विश्वे विधिशतमखाद्या दिविषदः ।
करालं यत्क्ष्वेलं कवलितवतः कालकलना
न शंभोस्तन्मूलं तव जननि ताटङ्कमहिमा ॥२८॥

किरीटं वैरिञ्चं परिहर पुरः कैटभभिदः
कठोरे कोटीरे स्खलसि जहि जम्भारिमकुटम् ।
प्रणम्रेष्वेतेषु प्रसभमुपयातस्य भवनं
भवस्याभ्युत्थाने तव परिजनोक्तिर्विजयते ॥२९॥

स्वदेहोद्भूताभिर्घृणिभिरणिमाद्याभिरभितः
निषेव्ये नित्ये त्वामहमिति सदा भावयति यः ।
किमाश्चर्यं तस्य त्रिनयनसमृद्धिं तृणयतः
महासंवर्ताग्निर्विरचयति नीराजनविधिम् ॥३०॥

चतुःषष्ट्या तन्त्रैः सकलमतिसन्धाय भुवनं
स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।
पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना-
स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥३१॥

शिवः शक्तिः कामः क्षितिरथ रविः शीतकिरणः
स्मरो हंसः शक्रस्तदनु च परामारहरयः ।
अमी हृल्लेखाभिस्तिसृभिरवसानेषु घटिता
भजन्ते वर्णास्ते तव जननि नामावयवताम् ॥३२॥

स्मरं योनिं लक्ष्मीं त्रितयमिदमादौ तव मनो-
र्निधायैके नित्ये निरवधिमहाभोगरसिकाः ।
भजन्ति त्वां चिन्तामणिगुणनिबद्धाक्षवलयाः
शिवाग्नौ जुह्वन्तः सुरभिघृतधाराहुतिशतैः ॥३३॥

शरीरं त्वं शम्भोः शशिमिहिरवक्षोरुहयुगं
तवात्मानं मन्ये भगवति नवात्मानमनघम् ।
अतः शेषः शेषीत्ययमुभयसाधारणतया
स्थितः सम्बन्धो वां समरसपरानन्दपरयोः ॥३४॥

मनस्त्वं व्योम त्वं मरुदसि मरुत्सारथिरसि
त्वमापस्त्वं भूमिस्त्वयि परिणतायां न हि परम् ।
त्वमेव स्वात्मानं परिणमयितुं विश्ववपुषा
चिदानन्दाकारं शिवयुवतिभावेन बिभृषे ॥३५॥

तवाज्ञाचक्रस्थं तपनशशिकोटिद्युतिधरं
परं शम्भुं वन्दे परिमिलितपार्श्वं परचिता ।
यमाराध्यन् भक्त्या रविशशिशुचीनामविषये
निरालोकेऽलोके निवसति हि भालोकभुवने ॥३६॥

विशुद्धौ ते शुद्धस्फटिकविशदं व्योमजनकं
शिवं सेवे देवीमपि शिवसमानव्यवसिताम् ।
ययोः कान्त्या यान्त्या शशिकिरणसारूप्यसरणे-
र्विधूतान्तर्ध्वान्ता विलसति चकोरीव जगती ॥३७॥

समुन्मीलत्संवित्कमलमकरन्दैकरसिकं
भजे हंसद्वन्द्वं किमपि महतां मानसचरम् ।
यदालापादष्टादशगुणितविद्यापरिणति-
र्यदादत्ते दोषाद्गुणमखिलमद्भ्यः पय इव ॥३८॥

तव स्वाधिष्ठाने हुतवहमधिष्ठाय निरतं
तमीडे सम्वर्तं जननि महतीं तां च समयाम् ।
यदालोके लोकान्दहति महति क्रोधकलिते
दयार्द्रा या दृष्टिः शिशिरमुपचारं रचयति ॥३९॥

तटित्त्वन्तं शक्त्या तिमिरपरिपन्थिस्फुरणया
स्फुरन्नानारत्नाभरणपरिणद्धेन्द्रधनुषम् ।
तव श्यामं मेघं कमपि मणिपूरैकशरणं
निषेवे वर्षन्तं हरमिहिरतप्तं त्रिभुवनम् ॥४०॥

तवाधारे मूले सह समयया लस्यपरया
नवात्मानं मन्ये नवरसमहाताण्डवनटम् ।
उभाभ्यामेताभ्यामुदयविधिमुद्दिश्य दयया
सनाथाभ्यां जज्ञे जनकजननीमज्जगदिदम् ॥४१॥

गतैर्माणिक्यत्वं गगनमणिभिः सान्द्रघटितं
किरीटं ते हैमं हिमगिरिसुते कीर्तयति यः ।
स नीडेयच्छायाच्छुरणशबलं चन्द्रशकलं
धनुः शौनासीरं किमिति न निबध्नाति धिषणाम् ॥४२॥

धुनोतु ध्वान्तं नस्तुलितदलितेन्दीवरवनं
घनस्निग्धश्लक्ष्णं चिकुरनिकुरुम्बं तव शिवे ।
यदीयं सौरभ्यं सहजमुपलब्धुं सुमनसो
वसन्त्यस्मिन्मन्ये बलमथनवाटीविटपिनाम् ॥४३॥

तनोतु क्षेमं नस्तव वदनसौन्दर्यलहरी-
परीवाहस्रोतःसरणिरिव सीमन्तसरणिः ।
वहन्ती सिन्दूरं प्रबलकबरीभारतिमिर-
द्विषां वृन्दैर्बन्दीकृतमिव नवीनार्ककिरणम् ॥४४॥

अरालैः स्वाभाव्यादलिकलभसश्रीभिरलकैः
परीतं ते वक्त्रं परिहसति पङ्केरुहरुचिम् ।
दरस्मेरे यस्मिन् दशनरुचिकिञ्जल्करुचिरे
सुगन्धौ माद्यन्ति स्मरदहनचक्षुर्मधुलिहः ॥४५॥

ललाटं लावण्यद्युतिविमलमाभाति तव यत्
द्वितीयं तन्मन्ये मकुटघटितं चन्द्रशकलम् ।
विपर्यासन्यासादुभयमपि सम्भूय च मिथः
सुधालेपस्यूतिः परिणमति राकाहिमकरः ॥४६॥

भ्रुवौ भुग्ने किञ्चिद्भुवनभयभङ्गव्यसनिनि
त्वदीये नेत्राभ्यां मधुकररुचिभ्यां धृतगुणम् ।
धनुर्मन्ये सव्येतरकरगृहीतं रतिपतेः
प्रकोष्ठे मुष्टौ च स्थगयति निगूढान्तरमुमे ॥४७॥

अहस्सूते सव्यं तव नयनमर्कात्मिकतया
त्रियामां वामं ते सृजति रजनीनायकतया ।
तृतीया ते दृष्टिर्दरदलितहेमाम्बुजरुचिः
समाधत्ते सन्ध्यां दिवसनिशयोरन्तरचरीम् ॥४८॥

विशाला कल्याणी स्फुटरुचिरयोध्या कुवलयैः
कृपाधाराऽऽधारा किमपि मधुराऽऽभोगवतिका ।
अवन्ती दृष्टिस्ते बहुनगरविस्तारविजया
ध्रुवं तत्तन्नामव्यवहरणयोग्या विजयते ॥४९॥

कवीनां सन्दर्भस्तबकमकरन्दैकरसिकं
कटाक्षव्याक्षेपभ्रमरकलभौ कर्णयुगलम् ।
अमुञ्चन्तौ दृष्ट्वा तव नवरसास्वादतरला-
असूयासंसर्गादलिकनयनं किंचिदरुणम् ॥५०॥

शिवे श्रृङ्गारार्द्रा तदितरजने कुत्सनपरा
सरोषा गङ्गायां गिरिशचरिते विस्मयवती ।
हराहिभ्यो भीता सरसिरुहसौभाग्यजननी
सखीषु स्मेरा ते मयि जननि दृष्टिस्सकरुणा ॥५१॥

गते कर्णाभ्यर्णं गरुत इव पक्ष्माणि दधती
पुरां भेत्तुश्चित्तप्रशमरसविद्रावणफले ।
इमे नेत्रे गोत्राधरपतिकुलोत्तंसकलिके
तवाकर्णाकृष्टस्मरशरविलासं कलयतः ॥५२॥

विभक्तत्रैवर्ण्यं व्यतिकरितलीलाञ्जनतया
विभाति त्वन्नेत्रत्रितयमिदमीशानदयिते ।
पुनस्स्रष्टुं देवान् द्रुहिणहरिरुद्रानुपरतान्
रजस्सत्त्वं बिभ्रत्तम इति गुणानां त्रयमिव ॥५३॥

पवित्रीकर्तुं नः पशुपतिपराधीनहृदये
दयामित्रैर्नेत्रैररुणधवलश्यामरुचिभिः ।
नदः शोणो गङ्गा तपनतनयेति ध्रुवममुं
त्रयाणां तीर्थानामुपनयसि सम्भेदमनघम् ॥५४॥

निमेषोन्मेषाभ्यां प्रलयमुदयं याति जगती
तवेत्याहुस्सन्तो धरणिधरराजन्यतनये ।
त्वदुन्मेषाज्जातं जगदिदमशेषं प्रलयतः
परित्रातुं शङ्के परिहृतनिमेषास्तव दृशः ॥५५॥

तवापर्णे कर्णेजपनयनपैशुन्यचकिताः
निलीयन्ते तोये नियतमनिमेषाश्शफरिकाः ।
इयं च श्रीर्बद्धच्छदपुटकवाटं कुवलयं
जहाति प्रत्यूषे निशि च विघटय्य प्रविशति ॥५६॥

दृशा द्राघीयस्या दरदलितनीलोत्पलरुचा
दवीयांसं दीनं स्नपय कृपया मामपि शिवे ।
अनेनायं धन्यो भवति न च ते हानिरियता
वने वा हर्म्ये वा समकरनिपातो हिमकरः ॥५७॥

अरालं ते पालीयुगलमगराजन्यतनये
न केषामाधत्ते कुसुमशरकोदण्डकुतुकम् ।
तिरश्चीनो यत्र श्रवणपथमुलङ्घ्य विलस-
न्नपाङ्गव्यासङ्गो दिशति शरसन्धानधिषणाम् ॥५८॥

स्फुरद्गण्डाभोगप्रतिफलितताटङ्कयुगलं
चतुश्चक्रं मन्ये तव मुखमिदं मन्मथरथम् ।
यमारुह्य द्रुह्यत्यवनिरथमर्केन्दुचरणं
महावीरो मारः प्रमथपतये सज्जितवते ॥५९॥

सरस्वत्याः सूक्तीरमृतलहरीकौशलहरीः
पिबन्त्याः शर्वाणि श्रवणचुलुकाभ्यामविरलम् ।
चमत्कारश्लाघाचलितशिरसः कुण्डलगणो
झणत्कारैस्तारैः प्रतिवचनमाचष्ट इव ते ॥६०॥

असौ नासावंशस्तुहिनगिरिवंशध्वजपटि
त्वदीयो नेदीयः फलतु फलमस्माकमुचितम् ।
वहत्यन्तर्मुक्ताः शिशिरकरनिश्वासगलितं
समृद्ध्या यत्तासां बहिरपि च मुक्तामणिधरः ॥६१॥

प्रकृत्याऽऽरक्तायास्तव सुदति दन्तच्छदरुचेः
प्रवक्ष्ये सादृश्यं जनयतु फलं विद्रुमलता ।
न बिम्बं तद्बिम्बप्रतिफलनरागादरुणितं
तुलामध्यारोढुं कथमिव विलज्जेत कलया ॥६२॥

स्मितज्योत्स्नाजालं तव वदनचन्द्रस्य पिबतां
चकोराणामासीदतिरसतया चञ्चुजडिमा ।
अतस्ते शीतांशोरमृतलहरीमाम्लरुचयः
पिबन्ति स्वच्छन्दं निशि निशि भृशं काञ्जिकधिया ॥६३॥

अविश्रान्तं पत्युर्गुणगणकथाम्रेडनजपा
जपापुष्पच्छाया तव जननि जिह्वा जयति सा ।
यदग्रासीनायाः स्फटिकदृषदच्छच्छविमयी
सरस्वत्या मूर्तिः परिणमति माणिक्यवपुषा ॥६४॥

रणे जित्वा दैत्यानपहृतशिरस्त्रैः कवचिभिः
निवृत्तैश्चण्डांशत्रिपुरहरनिर्माल्यविमुखैः ।
विशाखेन्द्रोपेन्द्रैः शशिविशदकर्पूरशकलाः
विलीयन्ते मातस्तव वदनताम्बूलकबलाः ॥६५॥

विपञ्च्या गायन्ती विविधमपदानं पशुपतेः
त्वयाऽऽरब्धे वक्तुं चलितशिरसा साधुवचने ।
तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां
निजां वीणां वाणी निचुलयति चोलेन निभृतम् ॥६६॥

कराग्रेण स्पृष्टं तुहिनगिरिणा वत्सलतया
गिरीशेनोदस्तं मुहुरधरपानाकुलतया ।
करग्राह्यं शम्भोर्मुखमुकुरवृन्तं गिरिसुते
कथङ्कारं ब्रूमस्तव चुबुकमौपम्यरहितम् ॥६७॥

भुजाश्लेषान्नित्यं पुरदमयितुः कण्टकवती
तव ग्रीवा धत्ते मुखकमलनालश्रियमियम् ।
स्वतः श्वेता कालागुरुबहुलजम्बालमलिना
मृणालीलालित्यं वहति यदधो हारलतिका ॥६८॥

गले रेखास्तिस्रो गतिगमकगीतैकनिपुणे
विवाहव्यानद्धप्रगुणगुणसंख्याप्रतिभुवः ।
विराजन्ते नानाविधमधुररागाकरभुवां
त्रयाणां ग्रामाणां स्थितिनियमसीमान इव ते ॥६९॥

मृणाली मृद्वीनां तव भुजलतानां चतसृणां
चतुर्भिस्सौन्दर्यं सरसिजभवस्स्तौति वदनैः ।
नखेभ्यः संत्रस्यन् प्रथममथनादन्धकरिपोः
चतुर्णां शीर्षाणां सममभयहस्तार्पणधिया ॥७०॥

नखानामुद्योतैर्नवनलिनरागं विहसतां
कराणां ते कान्ति कथय कथयामः कथमुमे ।
कयाचिद्वा साम्यं भजतु कलया हन्त कमलं
यदि क्रीडल्लक्ष्मीचरणतललाक्षारसचणम् ॥७१॥

समं देवि स्कन्दद्विपवदनपीतं स्तनयुगं
तवेदं नः खेदं हरतु सततं प्रस्नुतमुखम् ।
यदालोक्याशङ्काकुलितहृदयो हासजनकः
स्वकुम्भौ हेरम्बः परिमृशति हस्तेन झटिति ॥७२॥

अमू ते वक्षोजावमृतरसमाणिक्यकुतुपौ
न सन्देहस्पन्दो नगपतिपताके मनसि नः ।
पिबन्तौ तौ यस्मादविदितवधूसङ्गरसिकौ
कुमारावद्यापि द्विरदवदनक्रौञ्चदलनौ ॥७३॥

वहत्यम्ब स्तम्बेरमदनुजकुम्भप्रकृतिभिः
समारब्धां मुक्तामणिभिरमलां हारलतिकाम् ।
कुचाभोगो बिम्बाधररुचिभिरन्तश्शबलितां
प्रतापव्यामिश्रां पुरदमयितुः कीर्तिमिव ते ॥७४॥

तव स्तन्यं मन्ये धरणिधरकन्ये हृदयतः
पयःपारावारः परिवहति सारस्वतमिव ।
दयावत्या दत्तं द्रविडशिशुरास्वाद्य तव यत्
कवीनां प्रौढानामजनि कमनीय कवयिता ॥७५॥

हरक्रोधज्वालावलिभिरवलीढेन वपुषा
गभीरे ते नाभीसरसि कृतसङ्गो मनसिजः ।
समुत्तस्थौ तस्मादचलतनये धूमलतिका
जनस्तां जानीते तव जननि रोमावलिरिति ॥७६॥

यदेतत्कालिन्दी तनुतरतरङ्गाकृति शिवे
कृशे मध्ये किञ्चिज्जननि तव यद्भाति सुधियाम् ।
विमर्दादन्योन्यं कुचकलशयोरन्तरगतं
तनूभूतं व्योम प्रविशदिव नाभिं कुहरिणीम् ॥७७॥

स्थिरो गङ्गावर्तः स्तनमुकुलरोमावलिलता-
कलावालं कुण्डं कुसुमशरतेजोहुतभुजः ।
रतेर्लीलागारं किमपि तव नाभिर्गिरिसुते
बिलद्वारं सिद्धेर्गिरिशनयनानां विजयते ॥७८॥

निसर्गक्षीणस्य स्तनतटभरेण क्लमजुषो
नमन्मूर्तेर्नारीतिलक शनकैस्त्रुटचत इव ।
चिरं ते मध्यस्य त्रुटिततटिनीतीरतरुणा
समावस्थास्थेम्नो भवतु कुशलं शैलतनये ॥७९॥

कुचौ सद्यस्स्विद्यत्तटघटितकूर्पासभिदुरौ
कषन्तौ दोर्मूले कनककलशाभौ कलयता ।
तव त्रातुं भङ्गादलमिति वलग्नं तनुभुवा
त्रिधा नद्धं देवि त्रिवलि लवलीवल्लिभिरिव ॥८०॥

गुरुत्वं विस्तारं क्षितिधरपतिः पार्वति निजान्
नितम्बादाच्छिद्य त्वयि हरणरूपेण निदधे ।
अतस्ते विस्तीर्णो गुरुरयमशेषां वसुमतीं
नितम्बप्राग्भारस्स्थगयति लघुत्वं नयति च ॥८१॥

करीन्द्राणां शुण्डान् कनककदलीकाण्डपटलीं
उभाभ्यामूरुभ्यामुभयमपि निर्जित्य भवति ।
सुवृत्ताभ्यां पत्युः प्रणतिकठिनाभ्यां गिरिसुते
विधिज्ञे जानुभ्यां विबुधकरिकुम्भद्वयमसि ॥८२॥

पराजेतुं रुद्रं द्विगुणशरगर्भौ गिरिसुते
निषङ्गौ जङ्घे ते विषमविशिखो बाढमकृत ।
यदग्रे दृश्यन्ते दशशरफलाः पादयुगली-
नखाग्रच्छद्मानस्सुरमकुटशाणैकनिशिताः ॥८३॥

श्रुतीनां मूर्धानो दधति तव यौ शेखरतया
ममाप्येतौ मातश्शिरसि दयया धेहि चरणौ ।
ययोः पाद्यं पाथः पशुपतिजटाजूटतटिनी
ययोर्लाक्षालक्ष्मीररुणहरिचूडामणिरुचिः ॥८४॥

नमोवाकं ब्रूमो नयनरमणीयाय पदयोः
तवास्मै द्वन्द्वाय स्फुटरुचिरसालक्तकवते ।
असूयत्यत्यन्तं यदभिहननाय स्पृहयते
पशूनामीशानः प्रमदवनकङ्केलितरवे ॥८५॥

मृषा कृत्वा गोत्रस्खलनमथ वैलक्ष्यनमितं
ललाटे भर्तारं चरणकमले ताडयति ते ।
चिरादन्तश्शल्यं दहनकृतमुन्मूलितवता
तुलाकोटिक्वाणैः किलिकिलितमीशानरिपुणा ॥८६॥

हिमानीहन्तव्यं हिमगिरिनिवासैकचतुरौ
निशायां निद्राणं निशि चरमभागे च विशदौ ।
वरं लक्ष्मीपात्रं श्रियमतिसृजन्तौ समयिनां
सरोजं त्वत्पादौ जननि जयतश्चित्रमिह किम् ॥८७॥

पदं ते कीर्तीनां प्रपदमपदं देवि विपदां
कथं नीतं सद्भिः कठिनकमठीकर्परतुलाम् ।
कथं वा बाहुभ्यामुपयमनकाले पुरभिदा
यदादाय न्यस्तं दृषदि दयमानेन मनसा ॥८८॥

नखैर्नाकस्त्रीणां करकमलसङ्कोचशशिभिः
तरूणां दिव्यानां हसत इव ते चण्डि चरणौ ।
फलानि स्वःस्थेभ्यः किसलयकराग्रेण ददतां
दरिद्रेभ्यो भद्रां श्रियमनिशमह्नाय ददतौ ॥८९॥

ददाने दीनेभ्यश्श्रियमनिशमाशानुसदृशीं
अमन्दं सौन्दर्यप्रकरमकरन्दं विकिरति ।
तवास्मिन्मन्दारस्तबकसुभगे यातु चरणे
निमज्जन्मज्जीवः करणचरणष्षट्चरणताम् ॥९०॥

पदन्यासक्रीडापरिचयमिवारब्धुमनसः
स्खलन्तस्ते खेलं भवनकलहंसा न जहति ।
अतस्तेषां शिक्षां सुभगमणिमञ्जीररणित-
च्छलादाचक्षाणं चरणकमलं चारुचरिते ॥९१॥

गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः
शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।
त्वदीयानां भासां प्रतिफलनरागारुणतया
शरीरी शृङ्गारो रस इव दृशां दोग्धि कुतुकम् ॥९२॥

अराला केशेषु प्रकृतिसरला मन्दहसिते
शिरीषाभा चित्ते दृषदुपलशोभा कुचतटे ।
भृशं तन्वी मध्ये पृथुरुरसिजारोहविषये
जगत्त्रातुं शम्भोर्जयति करुणा काचिदरुणा ॥९३॥

कलङ्कः कस्तूरी रजनिकरबिम्बं जलमयं
कलाभिः कर्पूरैर्मरकतकरण्डं निबिडितम् ।
अतस्त्वद्भोगेन प्रतिदिनमिदं रिक्तकुहरं
विधिर्भूयो भूयो निबिडयति नूनं तव कृते ॥९४॥

पुरारातेरन्तःपुरमसि ततस्त्वच्चरणयोः
सपर्यामर्यादा तरलकरणानामसुलभा ।
तथा ह्येते नीताः शतमखमुखाः सिद्धिमतुलां
तव द्वारोपान्तस्थितिभिरणिमाद्याभिरमराः ॥९५॥

कलत्रं वैधात्रं कति कति भजन्ते न कवयः
श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।
महादेवं हित्वा तव सति सतीनामचरमे
कुचाभ्यामासङ्गः कुरवकतरोरप्यसुलभः ॥९६॥

गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविदो
हरेः पत्नीं पद्मां हरसहचरीमद्रितनयाम् ।
तुरीया कापि त्वं दुरधिगमनिस्सीममहिमा
महामाया विश्वं भ्रमयसि परब्रह्ममहिषि ॥९७॥

कदा काले मातः कथय कलितालक्तकरसं
पिबेयं विद्यार्थी तव चरणनिर्णेजनजलम् ।
प्रकृत्या मूकानामपि च कविताकारणतया
कदा धत्ते वाणीमुखकमलताम्बूलरसताम् ॥९८॥

सरस्वत्या लक्ष्म्या विधिहरिसपत्नो विहरते
रतेः पातिव्रत्यं शिथिलयति रम्येण वपुषा ।
चिरं जीवन्नेव क्षपितपशुपाशव्यतिकरः
परानन्दाभिख्यं रसयति रसं त्वद्भजनवान् ॥९९॥

प्रदीपज्वालाभिर्दिवसकरनीराजनविधिः
सुधासूतेश्चन्द्रोपलजललवैरर्घ्यरचना ।
स्वकीयैरम्भोभिः सलिलनिधिसौहित्यकरणं
त्वदीयाभिर्वाग्भिस्तव जननि वाचां स्तुतिरियम् ॥१००॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे
श्रीभगवतपादविरचिता सौन्दर्यलहरी समाप्ता ॥

---

## तन्त्रराजोक्तं नित्याकवचम्

समस्तापद्विमुक्त्यर्थं सर्वसम्पदवाप्तये ।
भूतप्रेतपिशाचादिपीडाशान्त्यै सुखाप्तये ॥
समस्तरोगनाशाय समरे विजयाय च ।
चौरसिंहद्वीपिगजगवयादि - भयानके ॥
अरण्ये शैलगहने मार्गे दुर्भिक्षके तथा ।
सलिलाग्निमरुत्पीडास्वब्धौ पोतादिसङ्कटे ॥
प्रजप्य नित्याकवचं सकृत्सर्वं तरत्यसौ ।
सुखी जीवति निर्द्वन्द्वो निःसपत्नो जितेन्द्रियः ॥
शृणु तत्कवचं देवि ! वक्ष्ये तव तदात्मकम् ।
येनाहमपि युद्धेषु देवासुरजयी सदा ॥
सर्वतः सर्वदाऽऽत्मानं ललिता पातु सर्वदा ।
कामेशी पुरतः पातु भगमाला त्वनन्तरम् ॥
दिशं पातु तथा दक्षपार्श्वं मे पातु सर्वदा ।
नित्यक्लिन्ना तु भेरुण्डा दिशं पातु सदा मम ॥
तथैव पश्चिमं भागं रक्षेत्सा वह्निवासिनी ।
महावज्रेश्वरी रक्षेदनन्तरदिशं सदा ॥
वामपार्श्वं सदा पातु दूती मे त्वरिता ततः ।
पालयेत्तु दिशं वात्यां रक्षेन्मां कुलसुन्दरी ॥

नित्यामामूर्ध्वतः पातु साऽधो मे पातु सर्वदा ।
नित्या नीलपताकाख्या विजया सर्वतश्च माम् ॥

करोतु मे मङ्गलानि सर्वदा सर्वमङ्गला ।
देहेन्द्रियमनःप्राणान् ज्वालामालिनिविग्रहा ॥

पालयेदनिशं चित्रा चित्तं मे पातु सर्वदा ।
कामात् क्रोधात् तथा लोभान्मोहान्मानान्मदादपि ॥

पापान्मत्सरतःशोकात् संशयात्सर्वतः सदा ।
स्तैमित्याच्च समुद्योगादशुभेषु तु कर्मसु ॥

असत्यात् क्रूरचिन्तातो हिंसातश्चोरतस्तथा ।
रक्षन्तु मां सर्वदा ताः कुर्वन्त्विच्छां शुभेषु च ॥

नित्याः षोडश मां पान्तु गजारूढाः स्वशक्तिभिः ।
तथा हयसमारूढाः पान्तु मां सर्वतः सदा ॥

सिंहारूढास्तथा पान्तु मां तरक्षुगता अपि ।
रथारूढाश्च मां पान्तु सर्वतः सर्वदा रणे ॥

तार्क्ष्यारूढाश्च मां पान्तु तथा व्योमगतास्तु ताः ।
भूगताः सर्वदा पान्तु मां सर्वत्र च सर्वदा ॥

भूत-प्रेतपिशाचापस्मारकृत्यादिकान् गदान् ।
द्रावयन्तु स्वशक्तीनां भीषणैरायुधैर्मम ॥

गजाश्वद्वीपिपञ्चास्यतार्क्ष्यारूढाखिलायुधाः ।
असंख्याः शक्तयो देव्याः पान्तु मां सर्वतः सदा ॥

सायं प्रातर्जपन्नित्याकवचं सर्वरत्नकम् ।
कदाचिन्नाशुभं पश्येन्न शृणोति च तत्समः ॥

श्रीकरपात्रस्वामिविरचिते श्रीविद्यारत्नाकरे नित्याकवचं समाप्तम् ।

---

# श्रीललितासहस्रनामावलिः

अस्य श्रीललितासहस्रनामस्तोत्रमालामन्त्रस्य वशिन्यादिभ्यो वाग्देवताभ्य ऋषिभ्यो नमः शिरसि। अनुष्टुप्छन्दसे नमः मुखे। श्रीमहात्रिपुरसुन्दर्यै देवतायै नमः हृदये। क ५ बीजाय नमः गुह्ये। स० ४ शक्तये नमः पादयोः। ह० ६ कीलकाय नमः नाभौ। चतुर्विधपुरुषार्थसिद्ध्यर्थे जपे (श्रीललिताम्बाप्रीत्यर्थं) (पूजने) विनियोगाय नमः सर्वाङ्गे।

कूटत्रयं द्विरावृत्य (बालया वा) षडङ्गद्वयम्।

ध्यानश्लोकः

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुरत्,
तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम्।
पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं,
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्पराभम्बिकाम् ॥१॥

मानसैः पञ्चोपचारैः सम्पूज्य,

## श्रीललितासहस्रनामावलिः

ॐ–ऐं–ह्रीं–श्रीं

ॐ श्रीमात्रे नमः
श्रीमहाराज्ञ्यै
श्रीमत्सिंहासनेश्वर्यै
चिदग्निकुण्डसम्भूतायै
देवकार्यसमुद्यतायै
उद्यद्भानुसहस्राभायै

ॐ चतुर्बाहुसमन्वितायै नमः
रागस्वरूपपाशाढ्यै
क्रोधाकाराङ्कुशोज्ज्वलायै
मनोरूपेक्षुकोदण्डायै १०
पञ्चतन्मात्रसायकायै

ॐ निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डलायै नमः
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचायै
कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डितायै
अष्टमीचन्द्रविभ्राजदलिकस्थलशोभितायै
मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै
नवचम्पकपुष्पाभनासादण्डविराजितायै
ताराकान्तितिरस्कारिनासाभरणभासुरायै २०
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरायै
ताटङ्कयुगलीभूततपनोडुपमण्डलायै
पद्मरागशिलादर्शपरिभाविकपोलभुवे
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदायै
शुद्धविद्याङ्कुराकारद्विजपंक्तिद्वयोज्ज्वलायै
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरायै
निजसंल्लापमाधुर्यविनिर्भर्त्सितकच्छप्यै
मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै
अनाकलितसादृश्यचिबुकश्रीविराजितायै
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरायै ३०
कनकाङ्गदकेयूरकमनीयभुजान्वितायै
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्वितायै
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तन्यै
नाभ्यालवालरोमालिलताफलकुचद्वय्यै नमः
लक्ष्यरोमलताधारतासमुन्नेयमध्यमायै
स्तनभारदलन्मध्यपट्टबन्धवलित्रयायै
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतट्यै

ॐ रत्नकिङ्किणिकारम्यरशनादामभूषितायै नमः
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्वितायै ४०
माणिक्यमुकुटाकारजानुद्वयविराजितायै
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिकायै
गूढगुल्फायै
कूर्मपृष्ठजयिष्णुप्रपदान्वितायै
नखदीधितिसञ्छन्ननमज्जनतमोगुणायै
पदद्वयप्रभाजालपराकृतसरोरुहायै
शिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजायै

ॐ मरालीमन्दगमनायै नमः
महालावण्यशेवधये
सर्वारुणायै
अनवद्याङ्ग्यै ५०
सर्वाभरणभूषितायै
शिवकामेश्वराङ्कस्थायै
शिवायै
स्वाधीनवल्लभायै

ॐ सुमेरुमध्यशृङ्गस्थायै नमः
श्रीमन्नगरनायिकायै
चिन्तामणिगृहान्तस्थायै
पञ्चब्रह्मासनस्थितायै
महापद्माटवीसंस्थायै
कदम्बवनवासिन्यै ६०
सुधासागरमध्यस्थायै
कामाक्ष्यै
कामदायिन्यै

देवर्षिगणसङ्घातस्तूयमानात्मवैभवायै नमः
भण्डासुरवधोद्युक्तशक्तिसेनासमन्वितायै
सम्पत्करीसमारूढसिन्धुरव्रजसेवितायै
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृतायै
चक्रराजरथारूढसर्वायुधपरिष्कृतायै
गेयचक्ररथारूढमन्त्रिणीपरिसेवितायै
किरिचक्ररथारूढदण्डानाथापुरस्कृतायै ७०

ॐ ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगायै नमः
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षितायै
नित्यापाराक्रमाटोपनिरीक्षणसमुत्सुकायै
भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दितायै
मन्त्रिण्यम्बाविरचितविषङ्गवधतोषितायै नमः
विशुक्रप्राणहरणवाराहीवीर्यनन्दितायै
कामेश्वरमुखालोककल्पितश्रीगणेश्वरायै
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षितायै
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिण्यै
कराङ्गुलिनखोत्पन्ननारायणदशाकृत्यै ८०
महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिकायै
कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यकायै
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवायै
हरनेत्राग्निसंदग्धकामसंजीवनौषध्यै
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजायै
कण्ठाधः कटिपर्यन्तमध्यकूटस्वरूपिण्यै
शक्तिकूटैकतापन्नकट्यधोभागधारिण्यै

ॐ मूलमन्त्रात्मिकायै नमः
मूलकूटत्रयकलेवरायै
कुलामृतैकरसिकायै ९०
कुलसङ्केतपालिन्यै
कुलाङ्गनायै
कुलान्तस्थायै
कौलिन्यै
कुलयोगिन्यै
अकुलायै

ॐ समयान्तस्थायै नमः
समयाचारतत्परायै
मूलाधारैकनिलयायै
ब्रह्मग्रन्थिविभेदिन्यै १००
मणिपूरान्तरुदितायै
विष्णुग्रन्थिविभेदिन्यै
आज्ञाचक्रान्तरालस्थायै
रुद्रग्रन्थिविभेदिन्यै
सहस्राराम्बुजारूढायै

ॐ सुधासाराभिवर्षिण्यै नमः
तटिल्लतासमरुच्यै
षट्चक्रोपरिसंस्थितायै
महासक्त्यै
कुण्डलिन्यै ११०
बिसतन्तुतनीयस्यै
भवान्यै
भावनागम्यायै
भवारण्यकुठारिकायै
भद्रप्रियायै
भद्रमूर्तये
भक्तसौभाग्यदायिन्यै
भक्तिप्रियायै
भक्तिगम्यायै
भक्तिवश्यायै १२०
भयापहायै
शाम्भव्यै
शारदाराध्यायै
शर्वाण्यै
शर्मदायिन्यै
शाङ्कर्यै
श्रीकर्यै
साध्व्यै नमः
शरच्चन्द्रनिभाननायै
शातोदर्यै १३०
शान्तिमत्यै

ॐ निराधारायै नमः
निरञ्जनायै
निर्लेपायै
निर्मलायै
नित्यायै
निराकारायै
निराकुलायै
निर्गुणायै
निष्कलायै १४०
शान्तायै
निष्कामायै
निरुपप्लवायै
नित्यमुक्तायै
निर्विकारायै
निष्प्रपञ्चायै
निराश्रयायै
नित्यशुद्धायै
नित्यबुद्धायै
निरवद्यायै १५०
निरन्तरायै
निष्कारणायै
निष्कलङ्कायै
निरुपाधये
निरीश्वरायै
नीरागायै
रागमथन्यै

ॐ निर्मदायै नमः
मदनाशिन्यै
निश्चिन्तायै १६०
निरहङ्कारायै नमः
निर्मोहायै
मोहनाशिन्यै
निर्ममायै
ममताहन्त्र्यै
निष्पापायै
पापनाशिन्यै
निष्क्रोधायै
क्रोधशमन्यै
निर्लोभायै १७०
लोभनाशिन्यै
निःसंशयायै
संशयघ्न्यै
निर्भवायै
भवनाशिन्यै
निर्विकल्पायै
निराबाधायै
निर्भेदायै
भेदनाशिन्यै
निर्नाशायै १८०
मृत्युमथन्यै
निष्क्रियायै
निष्परिग्रहायै

ॐ निस्तुलायै नमः
नीलचिकुरायै
निरपायायै
निरत्ययायै
दुर्लभायै
दुर्गमायै
दुर्गायै १९०
दुःखहन्त्र्यै
सुखप्रदायै
दुष्टदूरायै
दुराचारशमन्यै नमः
दोषवर्जितायै
सर्वज्ञायै
सान्द्रकरुणायै
समानाधिकवर्जितायै
सर्वशक्तिमय्यै
सर्वमङ्गलायै २००
सद्गतिप्रदायै
सर्वेश्वर्यै
सर्वमय्यै
सर्वमन्त्रस्वरूपिण्यै
सर्वयन्त्रात्मिकायै
सर्वतन्त्ररूपायै
मनोन्मन्यै
माहेश्वर्यै
महादेव्यै

ॐ महालक्ष्म्यै नमः २१०
मृडप्रियायै
महारूपायै
महापूज्यायै
महापातकनाशिन्यै
महामायायै
महासत्त्वायै
महाशक्त्यै
महारत्यै
महाभोगायै
महैश्वर्यायै २२०
महावीर्यायै
महाबलायै
महाबुद्ध्यै
महासिद्ध्यै
महायोगीश्वरेश्वर्यै
महातन्त्रायै
महामन्त्रायै
महायन्त्रायै
महासनायै
महायागक्रमाराध्यायै २३०
महाभैरवपूजितायै
महेश्वरमहाकल्पमहाताण्डवसाक्षिण्यै
महाकामेशमहिष्यै
महात्रिपुरसुन्दर्यै
चतुःषष्ट्युपचाराढ्यायै
ॐ चतुःषष्टिकलामय्यै नमः
महाचतुःषष्टिकोटियोगिनीगणसेवितायै
मनुविद्यायै
चन्द्रविद्यायै
चन्द्रमण्डलमध्यगायै २४०
चारुरूपायै
चारुहासायै
चारुचन्द्रकलाधरायै
चराचरजगन्नाथायै
चक्रराजनिकेतनायै
पार्वत्यै
पद्मनयनायै
पद्मरागसमप्रभायै
पञ्चप्रेतासनासीनायै
पञ्चब्रह्मस्वरूपिण्यै २५०
चिन्मय्यै
परमानन्दायै
विज्ञानघनरूपिण्यै
ध्यानध्यातृध्येयरूपायै
धर्माधर्मविवर्जितायै
विश्वरूपायै
जागरिण्यै
स्वपन्त्यै
तैजसात्मिकायै
सुप्तायै २६०
प्राज्ञात्मिकायै नमः

ॐ तुर्यायै नमः
सर्वावस्थाविवर्जितायै
सृष्टिकर्त्र्यै
ब्रह्मरूपायै
गोप्त्र्यै
गोविन्दरूपिण्यै
संहारिण्यै
रुद्ररूपायै
तिरोधानकर्यै २७०
ईश्वर्यै
सदाशिवायै
अनुग्रहदायै
पञ्चकृत्यपरायणायै
भानुमण्डलमध्यस्थायै
भैरव्यै
भगमालिन्यै
पद्मासनायै
भगवत्यै
पद्मनाभसहोदर्यै २८०
उन्मेषनिमिषोत्पन्नविपन्नभुवनावल्यै
सहस्रशीर्षवदनायै
सहस्राक्ष्यै
सहस्रपदे
आब्रह्मकीटजनन्यै
वर्णाश्रमविधायिन्यै
निजाज्ञारूपनिगमायै

ॐ पुण्यापुण्यफलप्रदायै नमः
श्रुतिसीमन्तसिन्दूरीकृतपादाब्ज-
धूलिकायै
सकलागमसंदोहशुक्तिसम्पुट-
मौक्तिकायै २९०
पुरुषार्थप्रदायै
पूर्णायै
भोगिन्यै
भुवनेश्वर्यै
अम्बिकायै
अनादिनिधनायै
हरिब्रह्मेन्द्रसेवितायै
नारायण्यै
नादरूपायै
नामरूपविवर्जितायै ३००
ह्रींकार्यै नमः
ह्रीमत्यै
हृद्यायै
हेयोपादेयवर्जितायै
राजराजार्चितायै
राज्ञ्यै
रम्यायै
राजीवलोचनायै
रञ्जन्यै
रमण्यै ३१०
रस्यायै

ॐ रणत्किङ्किणिमेखलायै नमः
रमायै
राकेन्दुवदनायै
रतिरूपायै
रतिप्रियायै
रक्षाकर्यै
राक्षसघ्न्यै
रामायै
रमणलम्पटायै ३२०
काम्यायै
कामकलारूपायै
कदम्बकुसुमप्रियायै
कल्याण्यै
जगतीकन्दायै
करुणारससागरायै
कलावत्यै
कलालापायै
कान्तायै
कादम्बरीप्रियायै ३३०
वरदायै
वामनयनायै
वारुणीमदविह्वलायै
विश्वाधिकायै
वेदवेद्यायै
विन्ध्याचलनिवासिन्यै
विधात्र्यै

ॐ वेदजनन्यै नमः
विष्णुमायायै
विलासिन्यै ३४०
क्षेत्रस्वरूपायै
क्षेत्रेश्यै
क्षेत्रक्षेत्रज्ञपालिन्यै
क्षयवृद्धिविनिर्मुक्तायै
क्षेत्रपालसमर्चितायै
विजयायै
विमलायै
वन्द्यायै
वन्दारुजनवत्सलायै
वाग्वादिन्यै ३५०
वामकेश्यै
वह्निमण्डलवासिन्यै
भक्तिमत्कल्पलतिकायै
पशुपाशविमोचिन्यै
संहृताशेषपाखण्डायै
सदाचारप्रवर्तिकायै
तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिकायै
तरुण्यै
तापसाराध्यायै
तनुमध्यायै
तमोपहायै
चित्यै

ॐ तत्पदलक्ष्यार्थायै नमः
चिदेकरसरूपिण्यै
स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्तत्यै
परायै
प्रत्यक्चितीरूपायै
पश्यन्त्यै
परदेवतायै
मध्यमायै ३७०
वैखरीरूपायै
भक्तमानसहंसिकायै
कामेश्वरप्राणनाड्यै
कृतज्ञायै
कामपूजितायै
शृङ्गाररसम्पूर्णायै
जयायै
जालन्धरस्थितायै
ओड्याणपीठनिलयायै
बिन्दुमण्डलवासिन्यै ३८०
रहोयागक्रमाराध्यायै
रहस्तर्पणतर्पितायै
सद्यःप्रसादिन्यै
विश्वसाक्षिण्यै
साक्षिवर्जितायै
षडङ्गदेवतायुक्तायै
षाड्गुण्यपरिपूरितायै
नित्यक्लिन्नायै

ॐ निरुपमायै नमः
निर्वाणसुखदायिन्यै ३९०
नित्याषोडशिकारूपायै
श्रीकण्ठार्धशरीरिण्यै
प्रभावत्यै
प्रभारूपायै
प्रसिद्धायै
परमेश्वर्यै
मूलप्रकृत्यै
अव्यक्तायै
व्यक्ताव्यक्तस्वरूपिण्यै
व्यापिन्यै ४००
विविधाकारायै
विद्याविद्यास्वरूपिण्यै
महाकामेशनयनकुमुदाह्लादकौमुद्यै
भक्तहार्दतमोभेदभानुमद्भानुसन्तत्यै
शिवदूत्यै
शिवाराध्यायै
शिवमूर्त्यै
शिवङ्कर्यै
शिवप्रियायै
शिवपरायै
शिष्टेष्टायै
शिष्टपूजितायै
अप्रमेयायै

ॐ स्वप्रकाशायै नमः
मनोवाचामगोचरायै
चिच्छक्त्यै
चेतनारूपायै
जडशक्त्यै
जडात्मिकायै
गायत्र्यै ४२०
व्याहृत्यै
संध्यायै नमः
द्विजवृन्दनिषेवितायै
तत्त्वासनायै
तस्मै
तुभ्यं
अय्यै
पञ्चकोशान्तरस्थितायै
निःसीममहिम्ने
नित्ययौवनायै ४३०
मदशालिन्यै
मदघूर्णितरक्ताक्ष्यै
मदपाटलगण्डभुवे
चन्दनद्रवदिग्धाङ्ग्यै
चाम्पेयकुसुमप्रियायै
कुशलायै
कोमलाकारायै
कुरुकुल्लायै
कुलेश्वर्यै
कुलकुण्डालयायै ४४०

ॐ कौलमार्गतत्परसेवितायै नमः
कुमारगणनाथाम्बायै
तुष्ट्यै
पुष्ट्यै
मत्यै
धृत्यै
शान्त्यै
स्वस्तिमत्यै
कान्त्यै
नन्दिन्यै ४५०
विघ्ननाशिन्यै
तेजोवत्यै
त्रिनयनायै
लोलाक्षीकामरूपिण्यै
मालिन्यै
हंसिन्यै
मात्रे
मलयाचलवासिन्यै
सुमुख्यै
नलिन्यै ४६०
सुभ्रुवे
शोभनायै
सुरनायिकायै
कालकण्ठ्यै
कान्तिमत्यै
क्षोभिण्यै
सूक्ष्मरूपिण्यै

ॐ वज्रेश्वर्यै नमः
वामदेव्यै
वयोवस्थाविवर्जितायै ४७०
सिद्धेश्वर्यै
सिद्धविद्यायै
सिद्धमात्रे
यशस्विन्यै
विशुद्धिचक्रनिलयायै
आरक्तवर्णायै
त्रिलोचनायै
खट्वाङ्गादिप्रहरणायै
वदनैकसमन्वितायै
पायसान्नप्रियायै ४८०
त्वक्स्थायै
पशुलोकभयङ्कर्यै
अमृतादिमहाशक्तिसंवृतायै
डाकिनीश्वर्यै
अनाहताब्जनिलयायै
श्यामाभायै
वदनद्वयायै
दंष्ट्रोज्ज्वलायै नमः
अक्षमालादिधरायै
रुधिरसंस्थितायै ४९०
कालरात्र्यादिशक्त्योघवृतायै
स्निग्धौदनप्रियायै
महावीरेन्द्रवरदायै

ॐ राकिण्यम्बास्वरूपिण्यै नमः
मणिपूराब्जनिलयायै
वदनत्रयसंयुतायै
वज्रादिकायुधोपेतायै
डामर्यादिभिरावृतायै
रक्तवर्णायै
मांसनिष्ठायै ५००
गुडान्नप्रीतमानसायै
समस्तभक्तसुखदायै
लाकिन्यम्बास्वरूपिण्यै
स्वाधिष्ठानाम्बुजगतायै
चतुर्वक्त्रमनोहरायै
शूलाद्यायुधसम्पन्नायै
पीतवर्णायै
अतिगर्वितायै
मेदोनिष्ठायै
मधुप्रीतायै ५१०
बन्धिन्यादिसमन्वितायै
दध्यन्नासक्तहृदयायै
काकिनीरूपधारिण्यै
मूलाधाराम्बुजारूढायै
पञ्चवक्त्रायै
अस्थिसंस्थितायै
अङ्कुशादिप्रहरणायै
वरदादिनिषेवितायै
मुद्गौदनासक्तचित्तायै

ॐ साकिन्यम्बास्वरूपिण्यै नमः ५२०
आज्ञाचक्राब्जनिलयायै
शुक्लवर्णायै
षडाननायै
मज्जासंस्थायै
हंसवतीमुख्यशक्तिसमन्वितायै
हरिद्रान्नैकरसिकायै
हाकिनीरूपधारिण्यै
सहस्रदलपद्मस्थायै
सर्ववर्णोपशोभितायै
सर्वायुधधरायै ५३०
शुक्लसंस्थितायै
सर्वतोमुख्यै
सर्वौदनप्रीतचित्तायै
याकिन्यम्बास्वरूपिण्यै
स्वाहा
स्वधा
अमत्यै
मेधायै
श्रुत्यै
स्मृत्यै ५४०
अनुत्तमायै
पुण्यकीर्त्यै
पुण्यलभ्यायै
पुण्यश्रवणकीर्तनायै
पुलोमजार्चितायै

ॐ बन्धमोचन्यै नमः
बर्बरालकायै
विमर्शरूपिण्यै
विद्यायै
वियदादिजगत्प्रसुवे ५५०
सर्वव्याधिप्रशमन्यै
सर्वमृत्युनिवारिण्यै
अग्रगण्यायै
अचिन्त्यरूपायै
कलिकल्मषनाशिन्यै
कात्यायन्यै
कालहन्त्र्यै
कमलाक्षनिषेवितायै
ताम्बूलपूरितमुख्यै
दाडिमीकुसुमप्रभायै ५६०
मृगाक्ष्यै
मोहिन्यै
मुख्यायै
मृडान्यै
मित्ररूपिण्यै
नित्यतृप्तायै
भक्तनिधये
नियन्त्र्यै
निखिलेश्वर्यै
मैत्र्यादिवासनालभ्यायै ५७०
महाप्रलयसाक्षिण्यै

ॐ परस्यै शक्त्यै नमः
परयै निष्ठायै
प्रज्ञानघनरूपिण्यै
माध्वीपानालसायै
मत्तायै
मातृकावर्णरूपिण्यै
महाकैलासनिलयायै
मृणालमृदुदोर्लतायै
महनीयायै ५८०
दयामूर्त्यै
महासाम्राज्यशालिन्यै
आत्मविद्यायै
महाविद्यायै
श्रीविद्यायै
कामसेवितायै
श्रीषोडशाक्षरीविद्यायै
त्रिकूटायै
कामकोटिकायै
कटाक्षकिङ्करीभूतकमला-
कोटिसेवितायै ५९०
शिरःस्थितायै
चन्द्रनिभायै
भालस्थायै
इन्द्रधनुःप्रभायै
हृदयस्थायै
रविप्रख्यायै

ॐ त्रिकोणान्तरदीपिकायै नमः
दाक्षायण्यै
दैत्यहन्त्र्यै
दक्षयज्ञविनाशिन्यै ६००
दरान्दोलितदीर्घाक्ष्यै
दरहासोज्ज्वलन्मुख्यै
गुरुमूर्तये
गुणनिधये
गोमात्रे
गुहजन्मभुवे
देवेश्यै
दण्डनीतिस्थायै
दहराकाशरूपिण्यै
प्रतिपन्मुख्यराकान्ततिथिमण्डल-
पूजितायै ६१०
कलात्मिकायै
कलानाथायै
काव्यालापविनोदिन्यै
सचामररमावाणीसव्यदक्षिण-
सेवितायै
आदिशक्त्यै
अमेयायै
आत्मने
परमायै
पावनाकृतये
अनेककोटिब्रह्माण्डजनन्यै ६२०

ॐ दिव्यविग्रहायै नमः
क्लींकार्यै
केवलायै
गुह्यायै
कैवल्यपददायिन्यै
त्रिपुरायै
त्रिजगद्वन्द्यायै
त्रिमूर्तये
त्रिदशेश्वर्यै
त्र्यक्षर्यै ६३०
दिव्यगन्धाढ्यायै
सिन्दूरतिलकाञ्चितायै
उमायै
शैलेन्द्रतनयायै
गौर्यै
गन्धर्वसेवितायै
विश्वगर्भायै
स्वर्णगर्भायै
अवरदायै
वागधीश्वर्यै ६४०
ध्यानगम्यायै
अपरिच्छेद्यायै
ज्ञानदायै
ज्ञानविग्रहायै
सर्ववेदान्तसंवेद्यायै
सत्यानन्दस्वरूपिण्यै
लोपामुद्रार्चितायै
ॐ लीलाक्लृप्तब्रह्माण्डमण्डलायै नमः
अदृश्यायै
दृश्यरहितायै ६५०
विज्ञात्र्यै
वेद्यवर्जितायै
योगिन्यै
योगदायै
योग्यायै
योगानन्दायै
युगन्धरायै
इच्छाशक्तिज्ञानशक्तिक्रियाशक्ति-
स्वरूपिण्यै
सर्वाधारायै
सुप्रतिष्ठायै ६६०
सदसद्रूपधारिण्यै
अष्टमूर्त्यै
अजाजेत्र्यै
लोकयात्राविधायिन्यै
एकाकिन्यै
भूमरूपायै
निर्द्वैतायै
द्वैतवर्जितायै
अन्नदायै
वसुदायै ६७०
वृद्धायै
ब्रह्मात्मैक्यस्वरूपिण्यै

ॐ वृहत्यै नमः
ब्राह्मण्यै
ब्राह्म्यै
ब्रह्मानन्दायै
बलिप्रियायै
भाषारूपायै
वृहत्सेनायै
भावाभावविवर्जितायै ६८०
सुखाराध्यायै
शुभकर्यै
शोभनायै सुलभायै गत्यै
राजराजेश्वर्यै
राज्यदायिन्यै
राज्यवल्लभायै
राजत्कृपायै
राजपीठनिवेशितनिजाश्रितायै
राज्यलक्ष्म्यै
कोशनाथायै ६९०
चतुरङ्गवलेश्वर्यै
साम्राज्यदायिन्यै
सत्यसम्बन्धायै
सागरमेखलायै
दीक्षितायै
दैत्यशमन्यै
सर्वलोकवशङ्कर्यै
सर्वार्थदात्र्यै

ॐ सावित्र्यै नमः
सच्चिदानन्दरूपिण्यै ७००
देशकालापरिच्छिन्नायै
सर्वगायै
सर्वमोहिन्यै
सरस्वत्यै
शास्त्रमय्यै
गुहाम्बायै
गुह्यरूपिण्यै
सर्वोपाधिविनिर्मुक्तायै
सदाशिवपतिव्रतायै
सम्प्रदायेश्वर्यै ७१०
साधुने
यै
गुरुमण्डलरूपिण्यै
कुलोत्तीर्णायै
भगाराध्यायै
मायायै
मधुमत्यै
मह्यै
गणाम्बायै
गुह्यकाराध्यायै ७२०
कोमलाङ्ग्यै
गुरुप्रियायै
स्वतन्त्रायै
सर्वतन्त्रेश्यै

ॐ दक्षिणामूर्तिरूपिण्यै नमः
सनकादिसमाराध्यायै
शिवज्ञानप्रदायिन्यै
चित्कलायै
आनन्दकलिकायै
प्रेमरूपायै ७३०
प्रियङ्कर्यै
नामपारायणप्रीतायै
नन्दिविद्यायै
नटेश्वर्यै
मिथ्याजगदधिष्ठानायै
मुक्तिदायै
मुक्तिरूपिण्यै
लास्यप्रियायै
लयकर्यै
लज्जायै ७४०
रम्भादिवन्दितायै
भवदावसुधावृष्ट्यै
पापारण्यदवानलायै
दौर्भाग्यतूलवातूलायै
जराध्वान्तरविप्रभायै
भाग्याब्धिचन्द्रिकायै
भक्तचित्तकेकिघनाघनायै
रोगपर्वतदम्भोलये
मृत्युदारुकुठारिकायै
महेश्वर्यै ७५०

ॐ महाकाल्यै नमः
महाग्रासायै
महाशनायै
अपर्णायै
चण्डिकायै
चण्डमुण्डासुरनिषूदन्यै
क्षराक्षरात्मिकायै
सर्वलोकेश्यै
विश्वधारिण्यै
त्रिवर्गदात्र्यै ७६०
त्रिगुणात्मिकायै
स्वर्गापवर्गदायै
शुद्धायै
जपापुष्पनिभाकृतये
ओजोवत्यै
द्युतिधरायै
यज्ञरूपायै
प्रियव्रतायै ७७०
दुराराध्यायै
दुराधर्षायै
पाटलीकुसुमप्रियायै
महत्यै
मेरुनिलयायै
मन्दारकुसुमप्रियायै
वीराराध्यायै
विराड्रूपायै

ॐ विरजसे नमः
विश्वतोमुख्यै ७८०
प्रत्यग्रूपायै
पराकाशायै
प्राणदायै
प्राणरूपिण्यै
मार्तण्डभैरवाराध्यायै
मन्त्रिणीन्यस्तराज्यधुरे
त्रिपुरेश्यै
जयत्सेनायै
निस्त्रैगुण्यायै
परापरायै ७९०
सत्यज्ञानानन्दरूपायै
सामरस्यपरायणायै
कपर्दिन्यै
कलामालायै
कामदुहे
कामरूपिण्यै
कलानिधये
काव्यकलायै
रसज्ञायै
रसशेवधये ८००
पुष्टायै
पुरातनायै
पूज्यायै
पुष्करायै
पुष्करेक्षणायै
परस्मै ज्योतिषे
परस्मै धाम्ने
परमाणवे
परात्परायै

ॐ पाशहस्तायै नमः ८१०
पाशहन्त्र्यै
परमन्त्रविभेदिन्यै
मूर्तायै
अमूर्तायै नमः
अनित्यतृप्तायै
मुनिमानसहंसिकायै
सत्यव्रतायै
सत्यरूपायै
सर्वान्तर्यामिण्यै
सत्यै ८२०
ब्रह्माण्यै
ब्रह्मणे
जनन्यै
बहुरूपायै
बुधार्चितायै
प्रसवित्र्यै
प्रचण्डायै
आज्ञायै
प्रतिष्ठायै
प्रकटाकृतये ८३०
प्राणेश्वर्यै
प्राणदात्र्यै
पञ्चाशत्पीठरूपिण्यै
विशृङ्खलायै
विविक्तस्थायै
वीरमात्रे
वियत्प्रसुवे
मुकुन्दायै
मुक्तिनिलयायै
मूलविग्रहरूपिण्यै ८४०

ॐ भावज्ञायै नमः
भवरोगघ्न्यै
भवचक्रप्रवर्तिन्यै
छन्दःसारायै
शास्त्रसारायै
मन्त्रसारायै
तलोदर्यै नमः
उदारकीर्तये
उद्दामवैभवायै
वर्णरूपिण्यै ८५०
जन्ममृत्युजरातप्तजन-
विश्रान्तिदायिन्यै
सर्वोपनिषदुद्घुष्टायै
शान्त्यतीतकलात्मिकायै
गम्भीरायै
गगनान्तस्थायै
गर्वितायै
गानलोलुपायै
कल्पनारहितायै
काष्ठायै
अकान्तायै ८६०
कान्तार्धविग्रहायै
कार्यकारणनिर्मुक्तायै
कामकेलितरङ्गितायै
कनत्कनकताटङ्कायै
लीलाविग्रहधारिण्यै
अजायै
क्षयविनिर्मुक्तायै

ॐ मुग्धायै नमः
क्षिप्रप्रसादिन्यै
ॐ अन्तर्मुखसमाराध्यायै ८७०
बहिर्मुखसुदुर्लभायै
त्रय्यै
त्रिवर्गनिलयायै
त्रिस्थायै
त्रिपुरमालिन्यै
निरामयायै
निरालम्बायै
स्वात्मारामायै
सुधासृत्यै नमः
संसारपङ्कनिर्मग्नसमुद्धरण-
पण्डितायै ८८०
यज्ञप्रियायै
यज्ञकर्त्र्यै
यजमानस्वरूपिण्यै
धर्माधारायै
धनाध्यक्षायै
धनधान्यविवर्धिन्यै
विप्रप्रियायै
विप्ररूपायै
विश्वभ्रमणकारिण्यै
विश्वग्रासायै ८९०
विद्रुमाभायै
वैष्णव्यै
विष्णुरूपिण्यै
अयोन्यै

ॐ योनिनिलयायै नमः
कूटस्थायै
कुलरूपिण्यै
वीरगोष्ठीप्रियायै
वीरायै
नैष्कर्म्यायै ९००
नादरूपिण्यै
विज्ञानकलनायै
कल्यायै
विदग्धायै
बैन्दवासनायै
तत्त्वाधिकायै
तत्त्वमय्यै
तत्त्वमर्थस्वरूपिण्यै
सामगानप्रियायै
सौम्यायै ९१०
सदाशिवकुटुम्बिन्यै
सव्यापसव्यमार्गस्थायै
सर्वापद्विनिवारिण्यै
स्वस्थायै
स्वभावमधुरायै
धीरायै
धीरसमर्चितायै
चैतन्यार्घ्यसमाराध्यायै
चैतन्यकुसुमप्रियायै
सदोदितायै ९२०

ॐ सदातुष्टायै नमः
तरुणादित्यपाटलायै
दक्षिणादक्षिणाराध्यायै
दरस्मेरमुखाम्बुजायै
कौलिनीकेवलायै
अनर्घ्यकैवल्यपददायिन्यै
स्तोत्रप्रियायै
स्तुतिमत्यै
श्रुतिसंस्तुतवैभवायै
मनस्विन्यै ९३०
मानवत्यै
महेश्यै
मङ्गलाकृतये
विश्वमात्रे
जगद्धात्र्यै
विशालाक्ष्यै
विरागिण्यै
प्रगल्भायै
परमोदारायै
परमोदायै ९४०
मनोमय्यै
व्योमकेश्यै
विमानस्थायै
वज्रिण्यै
वामकेश्वर्यै
पञ्चयज्ञप्रियायै

ॐ पञ्चप्रेतमञ्चाधिशायिन्यै नमः
पञ्चम्यै
पञ्चभूतेश्यै
पञ्चसङ्ख्योपचारिण्यै ९५०
शाश्वत्यै
शाश्वतैश्वर्यायै
शर्मदायै
शम्भुमोहिन्यै
धरायै
धरसुतायै
धन्यायै
धर्मिण्यै
धर्मवर्धिन्यै
लोकातीतायै ९६०
गुणातीतायै
सर्वातीतायै
शमात्मिकायै
बन्धूककुसुमप्रख्यायै
बालायै
लीलाविनोदिन्यै
सुमङ्गल्यै
सुखकर्यै
सुवेषाढ्यायै
सुवासिन्यै ९७०
सुवासिन्यर्चनप्रीतायै
आशोभनायै
शुद्धमानसायै
बिन्दुतर्पणसन्तुष्टायै

ॐ पूर्वजायै नमः
त्रिपुराम्बिकायै
दशमुद्रासमाराध्यायै
त्रिपुराश्रीवशङ्कर्यै
ज्ञानमुद्रायै
ज्ञानगम्यायै ९८०
ज्ञानज्ञेयस्वरूपिण्यै
योनिमुद्रायै
त्रिखण्डेश्यै
त्रिगुणायै
अम्बायै
त्रिकोणगायै
अनघायै
अद्भुतचारित्रायै
वाञ्छितार्थप्रदायिन्यै
अभ्यासातिशयज्ञातायै ९९०
षडध्वातीतरूपिण्यै
अव्याजकरुणामूर्तये
अज्ञानध्वान्तदीपिकायै
आबालगोपविदितायै
सर्वानुल्लङ्घ्यशासनायै
श्रीचक्रराजनिलयायै
श्रीमत्त्रिपुरसुन्दर्यै
श्रीशिवायै
शिवशक्त्यैक्यरूपिण्यै
श्रीललिताम्बिकायै नमः १०००

इति श्रीललितासहस्रनामावलिः सम्पूर्णा ॥

# श्रीललिताष्टोत्तरशतनामावलिः

ॐ-ऐं-ह्रीं-श्रीं ।

ॐ रजताचलशृङ्गाग्रमध्यस्थायै नमः
हिमाचलमहावंशपावनायै
शङ्करार्धाङ्गसौन्दर्यशरीरायै
लसन्मरकतस्वच्छविग्रहायै
महातिशयसौन्दर्यलावण्यायै
शशाङ्कशेखरप्राणवल्लभायै
सदापञ्चदशात्मैक्यस्वरूपायै
वज्रमाणिक्यकटककिरीटायै
कस्तूरीतिलकोल्लासिनिटलायै
भस्मरेखाङ्कितलसन्मस्तकायै
विकचाम्भोरुहदललोचनायै
शरच्चाम्पेयपुष्पाभनासिकायै
लसत्काञ्चनताटङ्कयुगलायै
मणिदर्पणसङ्काशकपोलायै
ताम्बूलपूरितस्मेरवदनायै
सुपक्वदाड़िमीबीजरदनायै
कम्बुपूगसमच्छायकन्धरायै
स्थूलमुक्ताफलोदारसुहारायै
गिरीशबद्धमाङ्गल्यमङ्गलायै
पद्मपाशाङ्कुशलसत्कराब्जायै
पद्मकैरवमन्दारसुमालिन्यै
सुवर्णकुम्भयुग्माभसुकुचायै
रमणीयचतुर्बाहुसंयुक्तायै
कनकाङ्गदकेयूरभूषितायै
बृहत्सौवर्णसौन्दर्यवसनायै
बृहन्नितम्बविलसज्जघनायै
सौभाग्यजातशृङ्गारमध्यमायै
दिव्यभूषणसन्दोहरञ्जितायै

ॐ पारिजातगुणाधिक्यपदाब्जायैनमः
सुपद्मरागसङ्काशचरणायै
कामकोटिमहापद्मपीठस्थायै
श्रीकण्ठनेत्रकुमुदचन्द्रिकायै
सचामररमावाणीवीजितायै
भक्तरक्षणदाक्षिण्यकटाक्षायै
भूतेशालिङ्गनोद्भूतपुलकाङ्ग्यै
अनङ्गजनकापाङ्गवीक्षणायै
ब्रह्मोपेन्द्रशिरोरत्नरञ्जितायै
शचीमुख्यामरवधूसेवितायै
लीलाकल्पितब्रह्माण्डमण्डलायै
अमृतादिमहाशक्तिसंवृतायै
एकातपत्रसाम्राज्यदायिकायै
सनकादिसमाराध्यपादुकायै
देवर्षिभिस्तूयमानवैभवायै
कलशोद्भवदुर्वासःपूजितायै
मत्तेभवक्त्रषड्वक्त्रवत्सलायै
चक्रराजमहायन्त्रमध्यवर्तिन्यै
चिदग्निकुण्डसम्भूतसुदेहायै
शशाङ्कखण्डसम्भूतसुदेहायै
मत्तहंसवधूमन्दगमनायै
वन्दारुजनसन्दोहवन्दितायै
अन्तर्मुखजनानन्दफलदायै
पतिव्रताङ्गनाभीष्टफलदायै
अव्याजकरुणापूरपूरितायै
नितान्तसच्चिदानन्दसंयुक्तायै
सहस्रसूर्यसंयुक्तप्रकाशायै
रत्नचिन्तामणिगृहमध्यस्थायै

ॐ हानिवृद्धिगुणाधिक्यरहितायै नमः
महामद्याटवीमध्यनिवासायै
जाग्रत्स्वप्नसुषुप्तीनां साक्षिभूत्यै
महापापौघपापानां विनाशिन्यै
दुष्टभीतिमहाभीतिभञ्जनायै
समस्तदेवदनुजप्रेरकायै
समस्तहृदयाम्भोजनिलयायै
अनाहतमहापद्ममन्दिरायै
सहस्रारसरोजातवासितायै
पुनरावृत्तिरहितपुरस्थायै
वाणीगायत्रीसन्नुतायै
रमाभूमिसुताराध्यपदाब्जायै
लोपामुद्रार्चितश्रीमच्चरणायै
सहस्ररतिसौन्दर्यशरीरायै
भावनामात्रसन्तुष्टहृदयायै
सत्यसम्पूर्णविज्ञानसिद्धिदायै
श्रीलोचनकृतोल्लासफलदायै
श्रीसुधाब्धिमणिद्वीपमध्यगायै
दक्षाध्वरविनिर्भेदसाधनायै
श्रीनाथसोदरीभूतशोभितायै
चन्द्रशेखरभक्तार्तिभञ्जनायै
सर्वोपाधिविनिर्मुक्तचैतन्यायै
नामपारायणाभीष्टफलदायै
सृष्टिस्थितितिरोधानसङ्कल्पायै
श्रीषोडशाक्षरीमन्त्रमध्यगायै
अनाद्यन्तस्वयम्भूतदिव्यमूर्त्यै

ॐ भक्तहंसपरीमुख्यवियोगायै नमः
मातृमण्डलसंयुक्तललितायै
भण्डदैत्यमहासत्वनाशनायै
क्रूरभण्डशिरश्छेदनिपुणायै
धात्रच्युतसुराधीशसुखदायै
चण्डमुण्डनिशुम्भादिखण्डनायै
रक्ताक्षरक्तजिह्वादिशिक्षणायै
महिषासुरदोवीर्यनिग्रहायै
अभ्रकेशमहोत्साहकारणायै
महेशयुक्तनटनतत्परायै
निजभर्तृमुखाम्भोजचिन्तनायै
वृषभध्वजविज्ञानभावनायै
जन्ममृत्युजरारोगभञ्जनायै
विधेयमुक्तविज्ञानसिद्धिदायै
कामक्रोधादिषड्वर्गनाशनायै
राजराजार्चितपदसरोजायै
सर्ववेदान्तसंसिद्धसुतत्त्वायै
श्रीवीरभक्तविज्ञाननिधनायै
अशेषदुष्टदनुजसूदनायै
साक्षाच्छ्रीदक्षिणामूर्तिमनोज्ञायै
हयमेधाग्रसम्पूज्यमहिमायै
दक्षप्रजापतिसुरवेषाढ्यायै
सुमबाणेक्षुकोदण्डमण्डितायै
नित्ययौवनमाङ्गल्यमङ्गलायै
महादेवसमायुक्तशरीरायै
महादेवरतौत्सुक्यमहादेव्यै

श्रीललिताष्टोत्तरशतनामावलिः सम्पूर्णा

—: ० :—

## श्रीललितात्रिशतीस्तोत्ररत्ननामावलिः

अस्य श्रीललितात्रिशतीस्तोत्रमालामन्त्रस्य हृयग्रीवऋषये नमः शिरसि १। अनुष्टुप्छन्दसे नमः मुखे २। श्रीललिताम्बादेवतायै नमः हृदये ३। क० ५ बीजाय नमः गुह्ये ४। स० ४ शक्तये नमः पादयोः ५। ह० ६ कीलकाय नमः नाभौ ६। श्रीललिताम्बाप्रसादसिद्धये जपे (पूजने) विनियोगाय सर्वाङ्गे ७॥

कूटत्रयं द्विरावृत्य (बालया वा) षडङ्गद्वयम्।

अथ ध्यानम्

अतिमधुरचापहस्तामपरिमितमोदबाणसौभाग्याम्।
अरुणामतिशयकरुणामभिनवकुलसुन्दरीं वन्दे ॥१॥

लमितिपञ्चोपचारैः सम्पूज्य

## श्रीललितात्रिशतीस्तोत्ररत्ननामावलिः

ॐ ऐं ह्रीं श्रीं

ॐ ककाररूपायै नमः
कल्याण्यै
कल्याणगुणशालिन्यै
कल्याणशैलनिलयायै
कमनीयायै
कलावत्यै
कमलाक्ष्यै
कल्मषघ्न्यै
करुणामृतसागरायै
कदम्बकाननावासायै १०
कदम्बकुसुमप्रियायै
कन्दर्पविद्यायै
कन्दर्पजनकापाङ्गवीक्षणायै
कर्पूरवीटीसौरभ्यकल्लोलित-
ककुप्तटायै
ॐ कलिदोषहरायै नमः
कञ्जलोचनायै
कम्रविग्रहायै
कर्मादिसाक्षिण्यै
कारयित्र्यै
कर्मफलप्रदायै २०
एकाररूपायै
एकाक्षर्यै
एकानेकाक्षराकृत्यै
एतत्तदित्यनिर्देश्यायै
एकानन्दचिदाकृत्यै
एवमित्यागमाबोध्यायै
एकभक्तिमदर्चितायै
एकाग्रचित्तनिर्ध्यातायै
एषणारहितादृतायै

ॐ एलासुगन्धिचिकुरायै नमः ३०
एनःकूटविनाशिन्यै
एकभोगायै
एकरसायै
एकैश्वर्यप्रदायिन्यै
एकातपत्रसाम्राज्यप्रदायै
एकान्तपूजितायै
एधमानप्रभायै
एजदनेकजगदीश्वर्यै
एकवीरादिसंसेव्यायै
एकप्राभवशालिन्यै ४०
ईकाररूपायै
ईशित्र्यै
ईप्सितार्थप्रदायिन्यै
ईदृगित्यविनिर्देश्यायै
ईश्वरत्वविधायिन्यै
ईशानादिब्रह्ममय्यै
ईशित्वाद्यष्टसिद्धिदायै
ईक्षित्र्यै
ईक्षणसृष्टाण्डकोट्यै
ईश्वरवल्लभायै
ईडितायै ५०
ईश्वरार्धाङ्गशरीरायै
ईशाधिदेवतायै
ईश्वरप्रेरणकर्यै
ईशताण्डवसाक्षिण्यै
ईश्वरोत्सङ्गनिलयायै
ईतिबाधाविनाशिन्यै
ईहाविरहितायै
ईशशक्त्यै
ईषत्स्मिताननायै

ॐ लकाररूपायै नमः ६०
ललितायै
लक्ष्मीवाणीनिषेवितायै
लाकिन्यै
ललनारूपायै
लसद्दाडिमपाटलायै
ललन्तिकालसत्फालायै
ललाटनयनार्चितायै
लक्षणोज्ज्वलदिव्याङ्ग्यै
लक्षकोट्यण्डनायिकायै ७०
लक्ष्यार्थायै
लक्षणागम्यायै
लब्धकामायै
लतातनवे
ललामराजदलिकायै
लम्बिमुक्तालताञ्चितायै
लम्बोदरप्रसुवे
लभ्यायै
लज्जाढ्यायै
लयवर्जितायै ८०
ह्रींकाररूपायै
ह्रींकारनिलयायै
ह्रींपदप्रियायै
ह्रींकारबीजायै
ह्रींकारमन्त्रायै
ह्रींकारलक्षणायै
ह्रींकारजपसुप्रीतायै
ह्रींमत्यै
ह्रींविभूषणायै
ह्रींशीलायै ९०
ह्रींपदाराध्यायै

ॐ ह्रींगर्भायै नमः
ह्रींपदाभिधायै
ह्रींकारवाच्यायै
ह्रींकारपूज्यायै
ह्रींकारपीठिकायै
ह्रींकारवेद्यायै
ह्रींकारचिन्त्यायै
ह्रीं
ह्रींशरीरिण्यै १००
हकाररूपायै
हलधृक्पूजितायै
हरिणेक्षणायै
हरप्रियायै
हराराध्यायै
हरिब्रह्मेन्द्रवन्दितायै
हयारूढासेवितांघ्र्यै
हयमेधसमर्चितायै
हर्यक्षवाहनायै
हंसवाहनायै ११०
हतदानवायै
हत्यादिपापशमन्यै
हरिदश्वादिसेवितायै
हस्तिकुम्भोत्तुङ्गकुचायै
हस्तिकृत्तिप्रियाङ्गनायै
हरिद्राकुङ्कुमदिग्धायै
हर्यश्वाद्यमरार्चितायै
हरिकेशसख्यै
हादिविद्यायै
हालामदालसायै १२०
सकाररूपायै
सर्वज्ञायै

ॐ सर्वेश्यै नमः
सर्वमङ्गलायै
सर्वकर्त्र्यै
सर्वभर्त्र्यै
सर्वहर्त्र्यै
सनातान्यै
सर्वानवद्यायै
सर्वाङ्गसुन्दर्यै १३०
सर्वसाक्षिण्यै
सर्वात्मिकायै
सर्वसौख्यदात्र्यै
सर्वविमोहिन्यै
सर्वाधारायै
सर्वगतायै
सर्वावगुणवर्जितायै
सर्वारुणायै
सर्वमात्रे
सर्वभूषणभूषितायै १४०
ककारार्थायै
कालहन्त्र्यै
कामेश्यै
कामितार्थदायै
कामसञ्जीविन्यै
कल्यायै
कठिनस्तनमण्डलायै
करभोरवे
कलानाथमुख्यै
कचजिताम्बुदायै १५०
कटाक्षस्यन्दिकरुणायै
कपालिप्राणनायिकायै
कारुण्यविग्रहायै

ॐ कान्तायै नमः
कान्तिधूतजपावल्यै
कलालापायै
कम्बुकण्ठ्यै
करनिर्जितपल्लवायै
कल्पवल्लीसमभुजायै
कस्तूरीतिलकाञ्चितायै १६०
हकारार्थायै
हंसगत्यै
हाटकाभरणोज्ज्वलायै
हारहारिकुचाभोगायै
हाकिन्यै
हल्यवर्जितायै
हरित्पतिसमाराध्यायै
हठात्कारहतासुरायै
हर्षप्रदायै
हविर्भोक्त्र्यै १७०
हार्दसन्तमसापहायै
हल्लीसलास्यसन्तुष्टायै
हंसमन्त्रार्थरूपिण्यै
हानोपादाननिर्मुक्तायै
हर्षिण्यै
हरिसोदर्यै
हाहाहूहूमुखस्तुत्यायै
हानिवृद्धिविवर्जितायै
हय्यङ्गवीनहृदयायै
हरिगोपारुणांशुकायै १८०
लकाराख्यायै
लतापूज्यायै
लयस्थित्युद्भवेश्वर्यै
लास्यदर्शनसन्तुष्टायै
ॐ लाभालाभविवर्जितायै नमः
लंघ्येतराज्ञायै
लावण्यशालिन्यै
लघुसिद्धिदायै
लाक्षारससवर्णाभायै
लक्ष्मणाग्रजपूजितायै १९०
लभ्येतरायै
लब्धभक्तिसुलभायै
लांगलायुधायै
लग्नचामरहस्तश्रीशारदापरि-
वीजितायै
लज्जापदसमाराध्यायै
लम्पटायै
लकुलेश्वर्यै
लब्धमानायै
लब्धरसायै
लब्धसम्पत्समुन्नत्यै २००
ह्रींकारिण्यै
ह्रींकाराद्यायै
ह्रींमध्यायै
ह्रींशिखामणये
ह्रींकारकुण्डाग्निशिखायै
ह्रींकारशशिचन्द्रिकायै
ह्रींकारभास्कररुच्यै
ह्रींकाराम्भोदचञ्चलायै
ह्रींङ्कारकन्दाङ्कुरिकायै
ह्रींकारैकपरायणायै २१०
ह्रींकारदीर्घिकाहंस्यै
ह्रींकारोद्यानकेकिन्यै
ह्रींङ्कारारण्यहरिण्यै
ह्रींङ्कारावालवल्लर्यै

ॐ ह्रींङ्कारपञ्जरशुक्यै नमः
ह्रींकाराङ्गणदीपिकायै
ह्रींङ्कारकन्दरासिंह्यै
ह्रींकाराम्भोजभृङ्गिकायै
ह्रींङ्कारसुमनोमाध्व्यै
ह्रींकारतरुमञ्जर्यै २२०
सकाराख्यायै
समरसायै
सकलागमसंस्तुतायै
सर्ववेदान्ततात्पर्यभूमये
सदसदाश्रयायै
सकलायै
सच्चिदानन्दायै
साध्यायै
सद्गतिदायिन्यै
सनकादिमुनिध्येयायै २३०
सदाशिवकुटुम्बिन्यै
सकलाधिष्ठानरूपायै
सत्यरूपायै
समाकृत्यै
सर्वप्रपञ्चनिर्मात्र्यै
समानाधिकवर्जितायै
सर्वोत्तुङ्गायै
सङ्गहीनायै
सगुणायै
सकलेष्टदायै २४०
ककारिण्यै

ॐ काव्यलोलायै नमः
कामेश्वरमनोहरायै
कामेश्वरप्राणानाड्यै
कामेशोत्सङ्गवासिन्यै
कामेश्वरालिंगितांग्यै
कामेश्वरसुखप्रदायै
कामेश्वरप्रणयिन्यै
कामेश्वरविलासिन्यै
कामेश्वरतपस्सिद्ध्यै २५०
कामेश्वरमनःप्रियायै
कामेश्वरप्राणनाथायै
कामेश्वरविमोहिन्यै
कामेश्वरब्रह्मविद्यायै
कामेश्वरगृहेश्वर्यै
कामेश्वराह्लादकर्यै
कामेश्वरमहेश्वर्यै
कामेश्वर्यै
कामकोटिनिलयायै
कांक्षितार्थदायै २६०
लकारिण्यै
लब्धरूपायै
लब्धधिये
लब्धवांछितायै
लब्धपापमनोदूरायै
लब्धाहङ्कारदुर्गमायै
लब्धशक्त्यै
लब्धदेहायै

ॐ लब्धैश्वर्यसमुन्नत्यै नमः
लब्धवृद्धये २७०
लब्धलीलायै
लब्धयौवनशालिन्यै
लब्धातिशयसर्वांगसौन्दर्यायै
लब्धविभ्रमायै
लब्धरागायै
लब्धपतये
लब्धनानागमस्थित्यै
लब्धभोगायै
लब्धसुखायै
लब्धहर्षाभिपूरितायै २८०
ह्लींकारमूर्तये
ह्लींकारसौधशृङ्गकपोतिकायै
ह्लींकारदुग्धाब्धिसुधायै
ह्लींकारकमलेन्दिरायै
ह्लींकारमणिदीपार्चिषे

ॐ ह्लींकारतरुशारिकायै नमः
ह्लींकारपेटकमणये
ह्लींकारादर्शबिंबितायै
ह्लींकारकोशासिलतायै
ह्लींकारस्थाननर्तक्यै २९०
ह्लींकारशुक्तिकामुक्तामणये
ह्लींकारबोधितायै
ह्लींकारमणिसौवर्णस्तंभविद्रुम-पुत्रिकायै
ह्लींकारवेदोपनिषदे
ह्लींकाराध्वरदक्षिणायै
ह्लींकारनन्दनारामनवकल्पक-वल्लर्यै
ह्लींकारहिमवद्गङ्गायै
ह्लींकारार्णवकौस्तुभायै
ह्लींकारमन्त्रसर्वस्वायै
ह्लींकारपरसौख्यदायै ३००

ॐ, ऐं, ह्लीं, श्रीं, श्रीमद्राजराजेश्वर्यै नमः

समाप्तम्

## अथ महायाग-क्रमः

भद्रंकर्णेभिरितिशान्तिः

# भावनोपनिषत् प्रयोगविधिसमेता

१. श्रीगुरुस्सर्वकारणभूता शक्तिः ॥ २. तेन नवरन्ध्ररूपो देहः ॥

३. नवचक्ररूपं श्रीचक्रम् ॥ ४. वाराहीपितृरूपा कुरुकुल्ला बलिदेवतामाता ॥

५. पुरुषार्थास्सागराः ॥ ६. देहो नवरत्नद्वीपः ॥

७. त्वगादिसप्तधातुरोमसंयुक्तः ॥

८. सङ्कल्पाः कल्पतरवः तेजः कल्पकोद्यानम् ॥

९. रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षडृतवः ॥

१०. ज्ञानमर्घ्यं ज्ञेयं हविः ज्ञाता होता ज्ञातृज्ञानज्ञेयानामभेदभावनं श्रीचक्रपूजनम् ॥

११. नियतिश्शृङ्गारादयो रसा अणिमादिसिद्धयः कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमय्यो ब्राह्म्याद्यष्टशक्तयः ।

१२. आधारनवकं मुद्राशक्तयः ॥

१३. पृथिव्यप्तेजोवाय्वाकाशश्रोत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानि मनोविकारः कामाकर्षिण्यादिषोडशशक्तयः ॥

१४. वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाख्यबुद्धयोऽनङ्गकुसुमाद्यष्टौ ॥

१५. अलम्बुसा कुहूर्विश्वोदरा वारुणी हस्तिजिह्वा यशोवती पयस्विनी गान्धारीपूषा शंखिनी सरस्वती इडा पिङ्गला सुषुम्ना चेति चतुर्दशनाड्यः सर्वसंक्षोभिण्यादिचतुर्दशशक्तयः ॥

१६. प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनञ्जया दशवायवस्सर्वसिद्धिप्रदादिवहिर्दशारदेवताः ॥

१७. एतद्वायुसंसर्गकोपाधिभेदेन रेचकः पाचकश्शोषको दाहकः प्लावक इति प्राणमुख्यत्वेन पञ्चधा जठराग्निर्भवति ॥

१८. क्षारक उद्गारकः क्षोभको जृम्भको मोहकः इति नागप्राधान्येन पञ्च-विधास्ते मनुष्याणां देहगाः भक्ष्यभोज्यचोष्यलेह्यपेयात्मकपञ्चविधमन्नं पाचयन्ति ॥

१९. एता दशवह्निकलास्सर्वज्ञाद्या अन्तर्दशारगा देवताः ॥

२०. शीतोष्णसुखदुःखेच्छास्सत्वरजस्तमोगुणाः वशिन्यादिशक्तयोऽष्टौ ॥

२१. शब्दादितन्मात्राः पञ्चपुष्पबाणाः ॥

२२. मन इक्षुधनुः २३. रागः पाशः २४. द्वेषोंऽकुशः ॥

२५. अव्यक्तमहदहङ्काराः कामेश्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणगा देवताः ।

२६. निरुपाधिकीसंविदेव कामेश्वरः ॥

२७. सदानन्दपूर्णः स्वात्मैव परदेवता ललिता ॥

२८. लौहित्यमेतस्य सर्वस्य विमर्शः

२९. अनन्यचित्तत्वेन च सिद्धिः ॥ ३०. भावनायाः क्रिया उपचाराः ॥

३१. अहं त्वमस्ति नास्ति कर्तव्यमकर्तव्यमुपासितव्यमित्यादि विकल्पानां आत्मनि विलापनं होमः ॥

३२. भावनाविषयाणामभेदभावनन्तर्पणम् ॥

३३. पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनम् पञ्चदश नित्याः ॥

३४. एवं मुहूर्त्तत्रितयं मुहूर्त्तद्वितयं मुहूर्त्तमात्रं वा भावनापरो जीवन्मुक्तो भवति स एव शिवयोगीति गद्यते ॥

३५. कादिमतेनान्तश्चक्रभावनाः प्रतिपादिताः ॥

३६. य एवं वेद सोऽथर्वशिरोऽधीते ॥ इति भावनोपनिषत् ।

---

अथ भावनोपनिषदा मुक्त्यै या भावनाः कथिताः ।
भास्कररायो रचयति तासामेवं प्रयोगविधिम् ।

## प्रयोगविधिः

मूलेन प्राणानायम्य ऋष्यादिन्यासत्रयं कृत्वा ।
विवेकवृत्यवच्छिन्नचिच्छक्तिरूपसुषुम्नात्मने श्रीगुरवे नमः ।

(इति ब्रह्मरन्ध्रं स्पृष्ट्वा)

दक्षश्रोत्ररूपपयस्विन्यात्मने प्रकाशानन्दनाथाय नमः ।
वामश्रोत्ररूपशङ्खिन्यात्मने विमर्शानन्दनाथाय नमः ।
जिह्वारूपसरस्वत्यात्मने अनन्तानन्दनाथाय नमः ।
दक्षनेत्ररूपपूषात्मने ज्ञानानन्दनाथाय नमः ।
वामनेत्ररूपगान्धार्यात्मने सत्यानन्दनाथाय नमः ।
ध्वजरूपकुहूात्मने पूर्णानन्दनाथाय नमः ।
दक्षनासारूपपिंगलात्मने स्वभावानन्दनाथाय नमः ।
वामनासारूपेडात्मने प्रतिभानन्दनाथाय नमः ।
पायुरूपालम्वुसात्मने सहजानन्दनाथाय नमः ।

(इति तत्तत्स्थानानि संस्पृश्य)

नवचक्ररूपश्रीचक्रात्मने देहाय नमः ।
पितृरूपास्थ्याद्यवयवात्मने वाराह्यै नमः ।
मातृरूपमांसाद्यवयवात्मने बलिदेवतायै कुरुकुल्लायै नमः ।

(इति त्रिर्व्यापकं कृत्वा)

देहपश्चाद्भागरूपधर्मात्मने इक्षुसागराय नमः
देहदक्षिणभागरूपार्थात्मने सुरासागराय नमः
देहप्राग्भागरूपकामात्मने घृतसागराय नमः
देहोदग्भागरूपमोक्षात्मने क्षीरसागराय नमः
देहात्मने नवरत्नद्वीपाय नमः (इति त्रिर्व्यापकं कृत्वा)

१. मांसात्मने पुष्परागरत्नद्वीपाय नमः २. रोमात्मने नीलरत्नद्वीपाय नमः
३. त्वगात्मने वैडूर्यरत्नद्वीपाय नमः ४. रुधिरात्मने विद्रुमरत्नद्वीपाय नमः
५. शुक्रात्मने मौक्तिकरत्नद्वीपाय नमः ६. मज्जात्मने मरकतरत्नद्वीपाय नमः
७. अस्थ्यात्मने वज्ररत्नद्वीपाय नमः ८. मेदात्मने गोमेदकरत्नद्वीपाय नमः
९. ओज आत्मने पद्मरागरत्नद्वीपाय नमः

१. मांसाधिदेवतायै कालचक्रेश्वर्यै नमः २. रोमाधिदेवतायै रुद्रचक्रेश्वर्यै नमः
३. त्वगधिदेवतायै मतृचक्रेश्वर्यै नमः ४. रुधिराधिदेवतायै रत्नचक्रेश्वर्यै नमः
५. शुक्राधिदेवतायै दशाचक्रेश्वर्यै नमः ६. मज्जाधिदेवतायै गुरुचक्रेश्वर्यै नमः
७. अस्थ्यधिदेवतायै तत्वचक्रेश्वर्यै नमः ८. मेदोऽधिदेवतायै ग्रहचक्रेश्वर्यै नमः
९. ओजोऽधिदेवतायै मूर्तिचक्रेश्वर्यै नमः

सङ्कल्पात्मभ्यः कल्पतरुभ्यो नमः। तेज आत्मने कल्पकोद्यानाय नमः ॥
मधुररसात्मने वसन्तर्तवे नमः। अम्लरसात्मने ग्रीष्मर्तवे नमः ॥
तिक्तरसात्मने वर्षर्तवे नमः ! कटुरसात्मने शरदृतवे नमः ॥
कषायरसात्मने हेमन्तर्तवे नमः। लवणरसात्मने शिशिरर्तवे नमः ॥
इन्द्रियात्मभ्योऽश्वेभ्यो नमः। इन्द्रियार्थात्मभ्यो गजेभ्यो नमः ॥
करुणात्मिकायैतोयपरिखायै नमः। ओजपूञ्जात्मने माणिक्यमण्डपाय नमः ॥
ज्ञानात्मने विदोषार्घ्याय नमः। ज्ञेयात्मने हविषे नमः ॥
ज्ञात्रात्मने होत्रे नमः। चिदात्मने श्रीमहात्रिपुरसुन्दर्यै नमः ॥

(इति तत्तदनुसन्धानपूर्वकं मनसा नत्वा ज्ञातृज्ञानज्ञेयानां नामरूपविलापनानुसन्धानेन चिन्मात्ररूपताविभावनेन क्षणं विश्रम्य)

पञ्चदश नित्या यजेत्। हृदि हस्तं निधाय।
(१. त्रिपुरा २. त्रिपुरेशी ३. त्रिपुरसुन्दरी ४. त्रिपुरवासिनी ५. त्रिपुराश्रीः ६. त्रिपुरमालिनी ७. त्रिपुरासिद्धा ८. त्रिपुराम्बा ९. महात्रिपुरसुन्दरी, इति मतान्तरे चक्रेश्वरीनवकमाम्नातम्)

चत्वारिंशदधिकचतुर्दशशतश्वासात्मनेप्रतिपत्तिथिरूपकामेश्वरीनित्यायै नमः ॥
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
द्वितीयातिथिरूपभगमालिनीनित्यायै नमः ॥
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
तृतीयातिथिरूपनित्यक्लीन्नानित्यायै नमः ॥
तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
चतुर्थीतिथिरूपभेरुण्डानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
पञ्चमीतिथिरूपवह्निवासिनीनित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
षष्ठीतिथिरूपमहावज्रेश्वरीनित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
सप्तमीतिथिरूपशिवदूतीनित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
अष्टमीतिथिरूपत्वरितानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
नवमीतिथिरूपकुलसुन्दरीनित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
दशमीतिथिरूपनित्यानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
एकादशीतिथिरूपनीलपताकानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
द्वादशीतिथिरूपविजयानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
त्रयोदशीतिथिरूपसर्वमङ्गलानित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
चतुर्दशीतिथिरूपज्वालामालिनीनित्यायै नमः ॥

तदुत्तरचत्वारिंशदधिकचतुर्दशशतश्वासात्मने
पौर्णमासीतिथिरूपचित्रानित्यायै नमः ॥

(नित्यामन्त्रानपि तत्तदादौ केचित्पठन्ति इयं नित्याभावना सर्वान्त एव वा कार्या )

चतुरस्राद्यरेखायै नमः इति वक्ष्यमाणस्थानेषु व्यापकं न्यस्य ॥

दक्षांसपृष्ठरूपशान्तरसात्मने अणिमासिद्ध्यै नमः

दक्षपाण्यङ्गुल्यग्ररूपाद्भुतरसात्मने लघिमासिद्ध्यै नमः
दक्षस्फिग्रूपकरुणरसात्मने महिमासिद्ध्यै नमः
दक्षपादाङ्गुल्यग्ररूपवीररसात्मने ईशित्वसिद्ध्यै नमः
वामपादाङ्गुल्यग्ररूपहास्यरसात्मने वशित्वसिद्ध्यै नमः
वामस्फिग्रूपबीभत्सरसात्मने प्राकाम्यसिद्ध्यै नमः
वामपाण्यङ्गुल्यग्ररूपरौद्ररसात्मने भुक्तिसिद्ध्यै नमः
वामांसपृष्ठरूपभयानकरसात्मने इच्छासिद्ध्यै नमः
चूलीमूलरूपशृङ्गाररसात्मने प्राप्तिसिद्ध्यै नमः (कर्णमूले)
चूलीपृष्ठरूपनियत्यात्मने सर्वकामसिद्ध्यै नमः
चतुरस्रमध्यरेखायै नमः इति (तदन्तर्व्यापकं न्यस्य)
पादाङ्गुष्ठद्वयरूपकामात्मने ब्राह्म्यै नमः
दक्षपार्श्वरूपक्रोधात्मने माहेश्वर्यै नमः
मूर्धरूपलोभात्मने कौमार्यै नमः
वामपार्श्वरूपमोहात्मने वैष्णव्यै नमः
वामजानुरूपमदात्मने वाराह्यै नमः
दक्षजानुरूपमात्सर्यात्मने इन्द्राण्यै नमः
दक्षबहिरंसरूपपुण्यात्मने चामुण्डायै नमः
वामबहिरंसरूपपापात्मने महालक्ष्म्यै नमः
चतुरश्रान्त्यरेखायै नमः (इतितदन्तर्व्यापकं न्यस्य) पादाङ्गुष्ठद्वयरूपाधः-
सहस्रदलकमलात्मने सर्वसंक्षोभिणीमुद्रायै नमः
दक्षपार्श्वरूपमूलाधारात्मने सर्वविद्राविणीमुद्राशक्त्यै नमः
मूर्धरूपस्वाधिष्ठानात्मने सर्वाकर्षिणीमुद्राशक्त्यै नमः
वामपार्श्वरूपमणिपूरात्मने सर्ववशङ्करीमुद्राशक्त्यै नमः
वामजानुरूपानाहतात्मने सर्वोन्मादिनीमुद्राशक्त्यै नमः
दक्षजानुरूपविशुद्ध्यात्मने सर्वमहाङ्कुशामुद्राशक्त्यै नमः
दक्षोरुरूपेन्द्रयोन्यात्मने सर्वखेचरीमुद्राशक्त्यै नमः

वामोरुरूपाज्ञात्मने सर्वबीजमुद्राशक्त्यै नमः
द्वादशान्तरूपोर्ध्वसहस्रदलकमलात्मने सर्वयोनिमुद्रायै नमः
पादाङ्गुष्ठरूपाधारनवकात्मने सर्वत्रिखण्डामुद्रायै नमः
हृद्रूपत्रैलोक्यमोहनचक्रेश्वर्यै त्रिपुरायै नमः इति तत्तत्स्थानानि स्पृष्ट्वा एता-स्सर्वास्स्वात्माभिन्नत्वेन विभाव्य आत्मनः अपरिच्छिन्नत्वं भावयेत् ।
प्रकटयोगिनीरूपस्वात्मने अणिमासिद्धयै नमः ॥
अपरिच्छिन्नस्वात्माने सर्वसंक्षोभिणीमुद्रायै नमः ॥
इति प्रयोगपूर्वकं वा भिवावयेत् ॥

षोडशदलपद्माय नमः इति तदन्तर्व्यापकं न्यस्य
दक्षश्रोत्रपृष्ठरूपपृथिव्यात्मने कामकर्षिणीनित्याकलायै नमः
दक्षांसरूपवारात्मने बुद्ध्याकर्षिणीनित्याकलायै नमः
दक्षकूर्पररूपतेज आत्मने अहङ्कारार्किषिणीनित्याकलायै नमः
दक्षकरपृष्ठरूपवाय्वात्मने शब्दाकर्षिणी नित्याकलायै नमः
दक्षोरुरूपाकाशात्मने स्पर्शाकर्षिणीनित्याकलायै नमः
दक्षजानुरूपश्रोत्रात्मने रूपाकर्षिणीनित्याकलायै नमः
दक्षगुल्फरूपत्वगात्मने रसाकर्षिणीनित्याकलायै नमः
दक्षपादतलरूपचक्षुरात्मने गन्धाकर्षिणीनित्याकलायै नमः
वामपादतलरूपजिह्वात्मने चित्ताकर्षिणीनित्याकलायै नमः
वामगुल्फरूपघ्राणात्मने धैर्याकर्षिणीनित्याकलायै नमः
वामजानुरूपवागात्मने स्मृत्याकर्षिणीनित्याकलायै नमः
वामोरुरूपपाण्यात्मने नामाकर्षिणीनित्याकलायै नमः
वामकरपृष्ठरूपपादात्मने बीजाकर्षिणीनित्याकलायै नमः
वामकूर्पररूपपाय्वात्मने अत्माकर्षिणीनित्याकलायै नमः
वामांसरूपोपस्थात्मने अमृताकर्षिणीनित्याकलायै नमः
वामश्रोत्रपृष्ठरूपविकृतमनआत्मने शरीराकर्षिणीनित्याकलायै नमः
हृद्रूपसर्वाशापरिपूरकचक्रेश्वर्यै त्रिपुरेश्वर्यै नमः ॥

गुप्तयोगिनीरूपस्वात्मने लघिमासिद्धयै नमः ॥
अपरिच्छन्नरूपस्वात्मने सर्वविद्राविणीमुद्रायै नमः
अष्टदलपद्माय नमः इति तदन्तर्व्यापकं न्यस्य,
दक्षशङ्खरूपवचनात्मने अनङ्गकुसुमायै नमः (कपालास्थि)
दक्षजत्रुरूपादानात्मने अनङ्गमेखलायै नमः (स्कन्धसन्धि)
दक्षोरुरूपगमनात्मने अनङ्गमदनायै नमः
दक्षगुल्फरूपविसर्गात्मने अनङ्गमदनातुरायै नमः
वामगुल्फरूपानन्दात्मने अनङ्गरेखायै नमः
वामोरुरूपहानाख्यबुद्धयात्मने अनङ्गवेगायै नमः
वामजत्रुरूपोपादानाख्यबुद्धयात्मने अनङ्गाङ्कुशायै नमः
वामशङ्खरूपोपेक्षाख्यबुद्धयात्मने अनङ्गमालिन्यै नमः
हृद्रूपसर्वसंक्षोभणचक्रेश्वर्यै त्रिपुरसुन्दर्यै नमः ।
गुप्ततरयोगिनीरूपस्वात्मात्मने महिमासिद्धयै नमः ।
अपरिच्छिन्नरूपस्वात्मात्मने सर्वाकर्षिणीमुद्रायै नमः ।
चतुर्दशारचक्राय नमः (इति तदन्तर्व्यापकं न्यस्य) ।
ललाटमध्यभागरूपालंबुसात्मने सर्वसंक्षोभिणीशक्त्यै नमः ।
ललाटदक्षभागरूपकुहूात्मने सर्वविद्राविणीशक्त्यै नमः ।
दक्षगण्डरूपविश्वोदरात्मने सर्वाकर्षिणीशक्त्यै नमः ॥
दक्षांसरूपवारुण्यात्मने सर्वाह्लादिनीशक्त्यै नमः ॥
दक्षपार्श्वरूपहस्तिजिह्वात्मने सर्वसंमोहिनीशक्त्यै नमः ॥
दक्षोरुरूपयशोवत्यात्मने सर्वस्तंभिनीशक्त्यै नमः ॥
दक्षजंघारूपपयस्विन्यात्मने सर्वजृम्भिणीशक्त्यै नमः ॥
वामजंघारूपगान्धार्यात्मने सर्ववशङ्करीशक्त्यै नमः ॥
वामोरुरूपपूषात्मने सर्वरञ्जिनी शक्त्यै नमः ॥
वामपार्श्वरूपशंखिन्यात्मने सर्वोन्मादिनीशक्त्यै नमः ।
वामांसरूपसरस्वत्यात्मने सर्वार्थसाधिनीशक्त्यै नमः ॥

वामगण्डरूपेडात्मने सर्वसंपत्तिपूरणीशक्त्यै नमः ॥
ललाटवामभागरूपपिंगलात्मने सर्वमन्त्रमयीशक्त्यै नमः ॥
लालटपृष्ठभागरूप सुषुम्नात्मने सर्वद्वन्द्वक्षयङ्करी शक्त्यै नमः ॥
हृद्रूपसर्वसौभाग्यदायकचक्रेश्वर्यै त्रिपुरवासिन्यै नमः ॥
सम्प्रदाययोगिनीरूपस्वात्मात्मने ईशित्वसिद्धयै नमः ॥
अपरिच्छिन्नरूपस्वात्मात्मने सर्ववशङ्करीमुद्रायै नमः ॥
बहिर्दशारचक्राय नमः इति व्यापकं न्यस्य ॥
दक्षाक्षिरूपप्राणात्मने सर्वसिद्धिप्रदादेव्यै नमः ॥
नासामूलरूपापानात्मने सर्वसम्पत्प्रदादेव्यै नमः ॥
वामनेत्ररूपव्यानात्मने सर्वप्रियङ्करीदेव्यै नमः ॥
कुक्षीशकोणरूपोदानात्मने सर्वमङ्गलकारिणीदेव्यै नमः ॥
कुक्षिवायुकोणरूपसमानात्मने सर्वकामप्रदादेव्यै नमः ॥
वामजानुरूपनागात्मने सर्वदुःखविमोचिनीदेव्यै नमः ॥
गुदरूपकूर्मात्मने सर्वमृत्युप्रशमनीदेव्यै नमः ॥
दक्षजानुरूपकृकरात्मने सर्वविघ्नविनाशिनीदेव्यै नमः ॥
कुक्षिनिर्ऋतिकोणरूपदेवदत्तात्मने सर्वांगसुन्दरीदेव्यै नमः ॥
कुक्षिवह्निकोणरूपधनञ्जयात्मने सर्वसौभाग्यदायिनीदेव्यै नमः ॥
हृद्रूपसर्वार्थसाधकचक्रेश्वर्यै त्रिपुराश्रियै नमः ॥
कुलकौलयोगिनीरूपस्वात्मात्मने वशित्वसिद्ध्यै नमः
अपरिच्छिन्नस्वात्मात्मने सर्वोन्मादिनीमुद्रायै नमः ॥
अन्तर्दशारचक्राय नमः इति (तदन्तर्व्यापकं न्यस्य) ॥
दक्षनासारूपरेचकाग्न्यात्मने सर्वज्ञादेव्यै नमः ॥
दक्षसृक्वीणीरूपपाचकाग्न्यात्मने सर्वशक्तिदेव्यै नमः ॥ (ओष्ठप्रान्ते)
दक्षस्तनरूपशोषकाग्न्यात्मने सर्वैश्वर्यप्रदादेव्यै नमः ॥
दक्षवृषणरूपदाहकाग्न्यात्मने सर्वज्ञानमयीदेव्यै नमः ॥
सीविनीरूपप्लवकाग्न्यात्मने सर्वव्याधिविनाशिनीदेव्यै नमः ॥

वामवृषणरूपक्षारकाग्न्यात्मने सर्वाधारस्वरूपादेव्यै नमः ॥
वामस्तनरूपोद्गारकाग्न्यात्मने सर्वपापहरादेव्यै नमः ॥
वामसृक्किरूपक्षोभकाग्न्यात्मने सर्वानन्दमयीदेव्यै नमः ॥
वामनासारूपजृम्भकाग्न्यात्मने सर्वरक्षास्वरूपिणीदेव्यै नमः ॥
नासाग्ररूपमोहकाग्न्यात्मने सर्वेप्सितफलप्रदादेव्यै नमः ॥
हृद्रूपसर्वरक्षाकरचक्रेश्वर्यै त्रिपुरमालिन्यै नमः ॥
निगर्भयोगिनीरूपस्वात्मात्मने प्राकाम्यसिद्ध्यै नमः ॥
अपरिच्छिन्नरूपस्वात्मात्मने सर्वमहाङ्कुशामुद्रायै नमः ॥
अष्टकोणचक्राय नमः (इति तदन्तर्व्यापकं न्यस्य) ॥
चिबुकदक्षभागरूपशीतात्मने वशिनीवाग्देवतायै नमः ॥
कण्ठदक्षभागरूपोष्णात्मने कामेश्वरीवाग्देवतायै नमः ॥
हृदयदक्षभागरूपसुखात्मने मोदिनीवाग्देवतायै नमः ॥
नाभिदक्षभागरूपदुःखात्मने विमलावाग्देवतायै नमः ॥
नाभिवामभागरूपेच्छात्मने अरुणावाग्देवतायै नमः ॥
हृदयवामभागरूपसत्वगुणात्मने जयिनीवाग्देवतायै नमः ॥
कण्ठवामभागरूपरजोगुणात्मने सर्वेश्वरीवाग्देवतायै नमः ॥
चिबुकवामभागरूपतमोगुणात्मने कौलिनीवाग्देवतायै नमः ॥
हृद्रूपसर्वरोगहरचक्रेश्वर्यै त्रिपुरासिद्धायै नमः ॥
रहस्ययोगिनीरूपस्वात्मात्मने भुक्तिसिद्ध्यै नमः ॥
अपरिच्छिन्नरूपस्वात्मात्मने सर्वखेचरीमुद्रायै नमः ॥
हृदयत्रिकोणाधोभागरूपपञ्चतन्मात्रात्मकेभ्यः सर्वजृम्भणबाणेभ्यो नमः ॥
तद्दक्षभागरूपमनआत्मकाभ्यां सर्वसंमोहनधनुर्भ्यां नमः ॥
तदूर्ध्वभागरूपरागात्मकाभ्यां सर्ववशङ्करपाशाभ्यां नमः ॥
तद्वामभागरूपद्वेषात्मकाभ्यां सर्वस्तम्भकराङ्कुशाभ्यां नमः ॥
त्रिकोणचक्राय नमः इति व्यापकं न्यस्य,
हृदयत्रिकोणाग्रभागरूपमहत्तत्वात्मने कामेश्वर्यै देव्यै नमः ॥

तद्दक्षकोणरूपाहङ्कारात्मने वज्रेश्वर्यै देव्यै नमः ॥
तद्वामकोणरूपाव्यक्तात्मने भगमालिनीदेव्यै नमः ॥
हृद्रूपसर्वसिद्धिप्रदचक्रेश्वर्यै त्रिपुराम्बायै नमः ॥
अतिरहस्ययोगिनीरूपस्वात्मात्मने इच्छासिद्ध्यै नमः ॥
अपरिच्छिन्नरूपस्वात्मात्मने सर्वबीजमुद्रायै नमः ॥
बिन्दुचक्राय नम इति (व्यापकं न्यस्य),
हृन्मध्यरूपनिरूपाधिकसंविन्मात्ररूपकामेश्वराङ्कनिलयायै सच्चिदानन्दैक-ब्रह्मात्मिकायै परदेवतायै ललितायै महात्रिपुरसुन्दर्यै नमः ॥
निरुपाधिकचैतन्यमेव सच्चिदानन्दात्मकमन्तःकरणप्रतिबिंबितसत्तदहमेवे-त्यनुसन्धानं ललिताया लौहित्यमिति विभाव्य ॥
अभेदसंबन्धेन सत्वचित्वादिविशिष्टसंविदः केवलसंविदश्च तादात्म्यसम्बन्ध-रूपं कामेश्वराङ्कयन्त्रणं विशेषणं विभाव्य ॥
उपाध्यभावरूपशुक्लत्वोपलक्षिता सती शुद्धसंविदेव शुक्लचरणः ॥
चित्वविशिष्टसंवित्प्राथमिकपराहन्तात्मकमृत्युरूपेण
रागेणोपलक्षितासतीरक्तचरणः ।
अहमाकारवृत्तिनिरूपिता विषयता चरणयोर्मिथो
विशेष्यविशेषणभावरूपैव तदुभयसामरस्यमिति विभाव्य ॥
हृद्रूपसर्वानन्दमयचक्रेश्वर्यै महात्रिपुरसुन्दर्यै नमः ॥
परापररहस्ययोगिनीरूपस्वात्मात्मने प्राप्तिसिद्ध्यै नमः ।
अपरिच्छिन्नरूपस्वात्मात्मने सर्वयोनिमुद्रायै नमः ॥
इति तत्तत्स्थानस्पर्शपूर्वकं सम्यगनुसन्धायोपचारान् समर्पयेत् ॥
तद्यथा एवमपरिच्छन्नतया भाविताया ललितायाः स्वेमहिम्न्येवप्रतिष्ठित-मानसमनुसन्दधामि ॥
वियदादिस्थूलप्रपञ्चरूपपादगतनामरूपात्मकमलस्य सच्चिदानन्दैकरूपत्व-भावनाजलेन क्षालनं पाद्यं भावयामि ॥
सूक्ष्मप्रपञ्चरूपहस्तगतस्य तस्य क्षालनमर्घ्यं चिन्तयामि ॥

भावनारूपाणामपामपि कवलीकाररूपमाचमनं भावयामि ॥

सत्त्वचित्त्वानन्दत्वाद्यखिलावयवाच्छेदेन भावनाजलसम्पर्करूपं स्मानमनुचिन्तयामि । तेष्वेवावयवेषु प्रसक्ताया भावनामत्मकवृत्तिविशेष्यतायाः प्रोञ्छनं वृत्त्यविषयत्वभावनेन वस्त्रं कल्पयामि ॥

निर्विषयत्वनिरञ्जनत्वाशोकत्वामृतत्वाद्यनेकधर्मरूप्याभरणानि धर्म्यभेदभावभावनेन समर्पयामि ॥

स्वशरीरघटकपार्थिवभागानां जडतापनयेन चिन्मात्रतावशषेरूपं गन्धं प्रयच्छामि ॥

आकाशभागानां तथा भावनेन पुष्पाणि समर्पयामि ॥

वायव्यभागानान्तथाभावनया धूपयामि ॥

तैजसभागानान्तथाकरणेनोद्दीपयामि ॥

अमृतभागांस्तथा विभाव्य निवेदयामि ॥

षोडशान्तेन्दुमण्डलस्य तथा भावनेन ताम्बूलकल्पमाचरामि ॥

परापश्यन्त्यादिनिखिलशब्दानां नादद्वारा ब्रह्मण्युपसंहारचिन्तनेन स्तवोमि ॥

विषयेषु धावमानानां चित्तवृत्तीनां विषयजडतानिरासेन ब्रह्मणि प्रविलापनेन प्रदक्षिणीकरोमि ॥

तासां विषयेभ्यः परावर्तनेन ब्रह्मैकप्रवणतया प्रणमामि ॥ इत्युपचर्य जुहुयात् ॥

विहिताविहितविषयावृत्तयःउत्पन्नाः अहं त्वं गुरुर्देवतेत्यादयः तास्सर्वाश्चक्रराजस्थानन्तशक्तिकदम्बरूपास्तत्तत्सूक्ष्मरूपा ये ये संस्कारास्तत्सर्वं चिन्मात्रमेवेति विभावनया निर्व्युत्थानं स्वात्मनि जुहोमि ॥

प्रकृतभावनासु ये गुरुचरणादिशक्तिकदम्बान्ताविषयास्ते सर्वेऽपि चिन्मात्ररूपा न परस्परं भिद्यन्ते इति भावनया तर्पयामि ॥

तिथिचक्रमुक्तरूपं कालचक्रं देशचक्रं च सर्वमस्ति भाति प्रियं च न तु नामरूपवदतस्सर्वं ब्रह्मैवेति विभावयामि ॥

अथवा पूर्वलिखितां नित्याभावनामिहैव श्वासप्रविलापनफलिकां कुर्यात्, तेन मनः पवनात्मनामैक्यनिभालनेन त्रीन्मुहुर्तान् द्वावेकं वा मुहूर्तमविच्छिन्नं व्यापयेत् ।

तस्य देवतात्मैक्यसिद्धिः चिन्तितकार्याण्ययत्नेन सिद्ध्यन्ति ॥
ततोऽवतीर्य प्राणायामत्रयमृष्यादिन्यासत्रयञ्च कृत्वा गुरुं स्तुवीतेति सर्वं शिवम् ।

अथर्वशिरसि प्रोक्तभावनानां सतां मुदे ।
इति भास्कररायेण प्रयोगविधिरीरितः ॥

इति प्रयोगविधिः समाप्तः

श्यामे सगीतमातः परशिवनिलये मुख्यसाचिव्यभारो-
द्वाहे दक्षे दयापूरितनिजहृदये मामकीं दैन्यवृत्तिम् ।
श्रीमत्सिंहासनेश्यां भववनपतितान्दावदग्धान्नमस्ते
त्रातुं पीयूषवर्षैः कथय परिकरंबद्धवत्यां विविक्ते ॥

यत्राऽस्ति भोगो न च तत्र मोक्षः यत्राऽस्ति मोक्षो न च तत्र भोगः ।
श्रीसुन्दरीसाधकपुङ्गवानां भोगश्च मोक्षश्च करस्थ एव ॥

पातय वा पाताले स्थापय वा सकललोकसाम्राज्ये ।
मातस्तवांघ्रियुगलं नाहं मुञ्चामि नैव मुञ्चामि ॥
यश्शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संस्मरणात्पुंसां सर्वतो जयमङ्गलम् ॥
दुर्गे शिवेऽभये माये नारायणि सनातनि ।
जये मे मङ्गलं देहि नमस्ते सर्वमङ्गले ॥ इति श्रीः ॥

---

# श्रीमहात्रिपुरसुन्दरीहृदयम्

वन्दे सिन्दूरवर्णाभं वामोरुन्यस्तवल्लभम् । इक्षुवारिधिमध्यस्थमिभराजमुखं महः ॥१॥
गम्भीरलहरीजालगण्डूषितदिगन्तरः । अव्यान्माममृताम्भोधिरनर्घमणिसंयुतः ॥२॥
मध्ये तस्य मनोहारि मधुपारवमेदुरम् । प्रसूनविगलन्माध्वीप्रवाहपरिपूरितम् ॥३॥
किन्नरीगानमेदस्वि क्रीडाकन्दरदन्तुरम् ।काञ्चनद्रुमधूलीभिः कल्पितावालवद्द्रुमम् ॥४॥
मुग्धकोकिलनिक्वाणमुखरीकृतदिङ्मुखम् । मन्दारतरुसन्तानमञ्जरीपुञ्जपिञ्जरम् ॥५॥
नासानाडिन्धमस्मेरनमेरुसुमसौरभम् । आवृन्तहसिताम्भोजदीव्यद्विभ्रमदीर्घिकम् ॥६॥
मन्दरक्तशुकीदष्टमातुलुङ्गफलान्वितम् । सविधस्यन्दमानाभ्रसरित्कल्लोलवेल्लितम् ॥७॥
प्रसूनपांसुसौरम्यपश्यतोहरमारुतम् । वकुलप्रसवाकीर्णं वन्दे नन्दनकाननम् ॥८॥
तन्मध्ये नीपकान्तारं तरणिस्तम्भकारणम् । मधुपालिविमर्दालिकलक्वाणकरम्बितम् ॥
कोमलश्वसनाधूतकोरकोद्गतधूलिभिः ।सिन्दूरितनभोमार्गं चिन्तितं सिद्धवन्दिभिः ॥१०॥
मध्ये तस्य मरुन्मार्गलम्बिमाणिक्यतोरणम् । शाणोल्लिखितवैदूर्यक्लृप्तसालसमाकुलम् ॥
माणिक्यस्तम्भपटलीमयूखव्याप्तदिक्तटम् ।पञ्चविंशतिसालाढ्यं नमामि नगरोत्तमम् ॥१२॥
तत्र चिन्तामणिगृहं तडित्कोटिसमुज्ज्वलम् । नीलोत्पलसमाकीर्णनिर्यूहशतसङ्कुलम् ॥१३॥
सोमकान्तमणिक्लृप्तसोपानोद्भासिवेदिकम् । चन्द्रशालाचलत्केतुसमालीढनभोन्तरम् ॥
गारुत्मतमणीक्लृप्तमण्डपव्यूहमण्डितम् । नित्यसेवापरामर्त्यनिविडद्वारशोभितम् ॥१५॥
अधिष्ठितं द्वारपालैरसितोमरपाणिभिः । नमामि नाकनारीणां सान्द्रसङ्घातमेदुरम् ॥१६॥
तन्मध्ये तरुणार्काभं तप्तकाञ्चननिर्मितम् । शक्रादिमद्द्वारपालैस्सन्ततं परिवेष्टितम् ॥१७॥
चतुष्षष्टिमहाविद्याकलाभिरभिसंवृतम् । रक्षितं योगिनिवृन्दै रत्नसिंहासनं भजे ॥१८॥
मध्ये तस्य मरुत्सेव्यं चतुर्द्वारसमुज्ज्वलम् । चतुरस्रत्रिरेखाढ्यं चारुत्रिवलयान्वितम् ॥१९॥
कलादलसमायुक्तं कनदष्टदलान्वितम् । चतुर्दशारसहितं दशारद्वितयान्वितम् ॥२०॥
अष्टकोणयुतं दिव्यमग्निकोणविराजितम् । योगिभिः पूजितं योगियोगिनीगणसेवितम् ॥
सर्वदुःखप्रसमनं सर्वव्याधिविनाशनम् । विषज्वरहरं पुण्यं विविधापद्विदारणम् ॥२२॥
सर्वदारिद्र्यशमनं सर्वभूपालमोहनम् । आशाभिपूरकं दिव्यमर्चकानामहर्निशम् ॥२३॥
अष्टादशसुमर्माढ्यं चतुर्विंशतिसन्धिकम् । श्रीमद्बिन्दुगृहोपेतं श्रीचक्रं प्रणमाम्यहम् ॥२४॥
तत्रैव बैन्दवस्थाने तरुणादित्यसन्निभम् । पाशाङ्कुशधनुर्बाणपरिष्कृतकराम्बुजम् ॥२५॥
पूर्णेन्दुबिम्बवदनं फुल्लपङ्कजलोचनम् । कुसुमायुधश्रृङ्गारकोदण्डकुटिलभ्रुवम् ॥२६॥
चारुचन्द्रकलोपेतं चन्दनागुरुरूषितम् । मन्दस्मितमधूकालिकिञ्जल्कितमुखाम्बुजम् ॥२७॥
पाटीरतिलकोद्भासिफालस्थलमनोहरम् । अनेककोटिकन्दर्पलावण्यमरुणाधरम् ॥२८॥
तपनीयांशुकधरं तारुण्यश्रीनिषेवितम् । कामेश्वरमहं वन्दे कामितार्थप्रदं नृणाम् ॥२९॥
तस्याङ्कमध्यमासीनां तप्तहाटकसन्निभाम् । माणिक्यमुकुटच्छायामण्डलारुणदिङ्मुखाम् ॥
कलवेणीकनत्फुल्लकह्लारकुसुमोज्ज्वलाम् । उडुराजकृतोत्तंसामुत्पलश्यामलालकाम् ॥३१॥
चतुर्थीचन्द्रसच्छात्रफालरेखापरिष्कृताम् । कस्तूरीतिलकारूढकमनीयललन्तिकाम् ॥३२॥

भ्रूलताश्रीपराभूतपुष्पायुधशरासनाम् । नालीकदलदायादनयनत्रयशोभिताम् ॥३३॥
करुणारससम्पूर्णकटाक्षहसितोज्ज्वलाम् । भव्यमुक्तामणीचारुनासामौक्तिकवेष्टिताम् ॥ ३४॥
कपोलयुगलीनृत्यत्कर्णताटङ्कशोभिताम् । माणिक्यवालीयुगलीमयूखारुणदिङ्मुखाम् ॥ ३५॥
परिपक्वसुबिम्बाभापाटलाधरपल्लवाम् । मञ्जुलाधरपर्वस्थमन्दस्मितमनोहराम् ॥३६॥
द्विखण्डद्विजराजाभगण्डद्वितयमण्डिताम् । दरफुल्ललसद्गण्डधवलापूरिताननाम् ॥३७॥
पचेलिमेन्दुसुपमापाटच्चरमुखप्रभाम् । कन्धराकान्तिहसितकम्बुबिम्बोकडम्बराम् ॥३८॥
कस्तूरीकर्दमाश्यामकन्धरामूलकन्दराम् । वामांसशिखरोपान्तव्यालम्बिघनवेणिकाम् ॥
मृणालकाण्डदायादमृदुबाहुचतुष्टयाम् । मणिकेयूरयुगलीमयूखारुणविग्रहाम् ॥४०॥
करमूललसद्रत्नकङ्कणक्वाणपेशलाम् । करकान्तिसमाधूतकल्पानोकहपल्लवान् ॥४१॥
पद्मरागोर्मिकाश्रेणिभासुराङ्गुलिपालिकाम् । पुण्ड्रकोदण्डपुष्पास्त्रपाशाङ्कुशलसत्कराम् ॥
तप्तकाञ्चनकुम्भाभस्तनमण्डलमण्डिताम् । घनस्तनतटीक्लृप्तकाश्मीरक्षोदपाटलाम् ॥४३॥
कूलङ्कषकुचस्फारतारहारविराजिताम् । चारुकौसुम्भकूर्पासच्छन्नवक्षोजमण्डलाम् ॥४४॥
नवनीलघनश्यामरोमराजिविराजिताम् । लावण्यसागरावर्तनिभनाभिविभूषिताम् ॥४५॥
डिम्भमुष्टितलग्राह्यमध्ययष्टिमनोहराम् । नितम्बमण्डलाभोगनिक्वणन्मणिसेखलाम् ॥४६।
सन्ध्यारुणक्षौमपटीसञ्छन्नजघनस्थलाम् । घनोरुकान्तिहसितकदलीकाण्डविभ्रमाम् ॥४७।
जानुसम्पुटकद्वन्द्व जितमाणिक्यदर्पणाम् । जङ्घायुगलसौन्दर्यविजितानङ्गकाहलाम् ॥४८॥
प्रपदच्छायसन्तानजितप्राचीनकच्छपाम् । नीरजासनकोटीरनिघृष्टचरणाम्बुजाम् ॥४९॥
पादशोभापराभूतपाकारितरुपल्लवाम् । चरणाम्भोजशिञ्जानमणिमञ्जीरमञ्जुलान् ॥
विबुधेन्द्रवधूत्सङ्गविन्यस्तपदपल्लवाम् । पार्श्वस्थभारतीलक्ष्मीपाणिचामरवीजिताम् ॥
पुरतो नाकनारीणां पश्यन्तीं नृत्तमद्भुतम् । भ्रूलताञ्चलसम्भूतपुष्पायुधपरम्पराम् ॥
प्रत्यग्रयौवनोन्मत्तपरिफुल्लविलोचनाम् । ताम्रोष्ठीं तरलापाङ्गीं सुनासां सुन्दरस्मिताम् ॥
चतुरर्थभ्रुवोदारां चाम्पेयोद्गन्धिकुन्तलाम् । मधुस्नपितमृद्वीकमधुरालापपेशलाम् ॥५४॥
शिवां षोडशवार्षीकां शिवाङ्कतलवासिनीम् । चिन्मयीं हृदयाम्भोजे चिन्तयेज्जापकोत्तमः ॥

## फलश्रुतिः

इति त्रिपुरसुन्दर्या हृदयं सर्वकामदम् । सर्वदारिद्र्यशमनं सर्वसम्पत्प्रदं नृणाम् ॥५६॥
तापज्वरार्तिशमनं तरुणीजनमोहनम् । महाविपहरं पुण्यं माङ्गल्यकरमद्भुतम् ॥५७॥
अपमृत्युहरं दिव्यमायुष्यश्रीकरं परम् । अपवर्गैकनिलयमवनीपालवश्यदम् ॥५८॥
पठति ध्यानरत्नं यः प्रातस्सायमतन्द्रितः । न विषादैस्स च पुमान् प्राप्नोति भुवनत्रयम् ॥

इति श्रीत्रिपुरसुन्दरीहृदयं सम्पूर्णम्

श्रीकरपात्रस्वामिविरचितः श्रीविद्या-रत्नाकरः समाप्तः ।

श्रीपराम्बा सुप्रसन्ना वरदाऽस्तु

# श्रीललिताचतुष्षट्युपचारमानसपूजा

ॐ हृन्मध्यनिलये देवि ललिते परदेवते ।
चतुष्षट्युपचारांस्ते भक्त्या मातः समर्पये ॥१॥
कामेशोत्सङ्गनिलये पाद्यं गृहीष्व सादरम् ।
भूषणानि समुत्तार्यं गन्धतैलं च तेऽर्पये ॥२॥
स्नानशालां प्रविश्याऽथ तत्रत्यमणिपीठके ।
उपविश्य सुखेन त्वं देहोद्वर्त्तनमाचर ॥३॥
उष्णोदकेन ललिते स्नापयाम्यथ भक्तितः ।
अभिषिञ्चामि पश्चात्त्वां सौवर्णकलशोदकैः ॥४॥
धौतवस्त्रप्रोच्छनं चारक्तक्षौमाम्बरं तथा ।
कुचोत्तरीयमरुणमर्पयामि महेश्वरि ॥५॥
ततः प्रविश्य चालेपमण्डपं श्रीमहेश्वरि ।
उपविश्य च सौवर्णपीठे गन्धान् विलेपय ॥६॥
कालागरुजधूपैश्च धूपये केशपाशकम् ।
अर्पयामि च माल्ल्यादिसर्वर्तुकुसुमस्रजः ॥७॥
भूषामण्डपमाविश्य स्थित्वा सौवर्णपीठके ।
माणिक्यमुकुटं मूर्ध्नि दयया स्थापयाम्बिके ॥८॥
शरत्पार्वणचन्द्रस्य शकलं तत्र शोभताम् ।
सिन्दूरेण च सीमन्तमलङ्कुरु दयानिधे ॥९॥
भाले च तिलकं न्यस्य नेत्रयोरञ्जनं शिवे ।
वालीयुगलमप्यम्ब भक्त्या ते विनिवेदये ॥१०॥
मणिकुण्डलमप्यम्ब नासाभरणमेव च ।
ताटङ्कयुगलं देवि यावकञ्चाधरेऽर्पये ॥११॥
आद्यभूषणसौवर्णचिन्ताकपदकानि च ।
महापदकमुक्तावल्येकावल्यादिभूषणम् ॥१२॥

छन्नवीरं गृहाणाम्ब केयूरयुगलन्तथा ।
वलयावलिमङ्गुल्याभरणं ललिताम्बिके ॥१३॥
ओड्याणमथ कट्यन्ते कटिसूत्रञ्च सुन्दरि ।
सौभाग्याभरणं पादकटकं नूपुरद्वयम् ॥१४॥
अर्पयामि जगन्मातः पादयोश्चाङ्गुलीयकम् ।
पाशं वामोर्ध्वहस्ते च दक्षहस्ते तथाङ्कुशम् ॥१५॥
अन्यस्मिन्वामहस्ते च तथा पुण्ड्रेक्षुचापकम् ।
पुष्पबाणांश्च दक्षाधः पाणौ धारय सुन्दरि ॥१६॥
अर्पयामि च माणिक्यपादुके पादयोः शिवे ।
आरोहावृत्तिदेवीभिश्चक्रं परशिवे मुदा ॥१७॥
समानवेशभूषाभिः साकं त्रिपुरसुन्दरि ।
तत्र कामेशवामाङ्कपर्यङ्कोपनिवेशिनीम् ॥१८॥
अमृतासवपानेन मुदितां त्वां सदा भजे ।
शुद्धेन गाङ्गतोयेन पुनराचमनं कुरु ॥१९॥
कर्पूरवीटिकामास्ये ततोऽम्ब विनिवेशय ।
आनन्दोल्लासहासेन विलसन्मुखपङ्कजाम् ॥२०॥
भक्तिमत्कल्पलतिकां कृती स्यां त्वां स्मरन् कदा ।
मङ्गलारार्तिकं छत्रं चामरं दर्पणं तथा ॥२१॥
तालवृन्तं गन्धपुष्पधूपदीपांश्च तेऽर्पये ।
श्रीकामेश्वरि ! तप्तहाटककृतैः स्थालीसहस्त्रैर्भृतम्
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदैर्युतम् ॥
दुग्धान्नं मधुशर्करादधियुतं माणिक्यपात्रार्पितं
माषापूपकपूरिकादिसहितं नैवेद्यमम्बाऽर्पये ॥२२॥
सार्धविंशतिपद्योक्तचतुष्षष्ट्युपचारतः ।
हृन्मध्यनिलया माता ललिता परितुष्यतु ॥२३॥
कामेश्वराङ्कनिलया श्रीललितामहात्रिपुरसुन्दरी तृप्यताम् ।

श्रीस्वामी करपात्रीजी द्वारा विरचित ग्रन्थ

विचार पीयूष
मार्क्सवाद और रामराज्य
श्री भगवत्तत्त्व
वेदस्वरूप और प्रामाण्य ( प्रथम, द्वितीय )
भक्तिसुधा
अहमर्थ और परमर्थसार
पूंजीवाद, समाजवाद और रामराज्य
संघर्ष और शान्ति
वर्णाश्रममर्यादा संकीर्त्तनमीमांसा
क्या सम्भोग से समाधि ?
शाङ्कर भाष्य पर आक्षेप और समाधान
राहुलजी की भ्रान्ति
श्रीविद्यारत्नाकरः
श्रीविद्यावरिवस्या
वेदस्वरूपविमर्शः
भक्तिरसार्णवः
चातुर्वर्ण्यसंस्कृतिविमर्शः ( प्रथम )
चातुर्वर्ण्यसंस्कृतिविमर्शः ( द्वितीय )
कुम्भनिर्णयः
धर्मराजनीति
आधुनिक राजनीति और रामराज्य परिषद्
ये राजनीतिक दल
रामराज्य परिषद् और अन्य दल
राजनीति में भी ईमानदारी
वेदार्थपारिजात
भागवत सुधा
भ्रमरगीत
रामायण मीमांसा

## श्रीविद्या साधना पीठ के मुख्य उद्देश्य

- श्री विद्या से सम्बन्धित दुर्लभ साहित्य का प्रकाशन।
- श्रीविद्या साधकों का पथ प्रदर्शन।
- मन्त्र चैतन्य तथा कुण्डलिनी जागरण का क्रियात्मक बोध।
- श्रीयन्त्रार्चन पद्धति का प्रशिक्षण।
- तन्त्र शास्त्र विषयक अनुसंधान।

## श्रीविद्या साधना पीठ द्वारा प्रकाशनाधीन साहित्य

श्रीविद्यावरिवस्या

श्रीमहागणपतिवरिवस्या

षोडशनित्यावरिवस्या

श्रीविद्यामन्त्रभाष्य ( हिन्दी अनुवाद सहित )

श्रीललितासहस्रनाम ( श्रीभास्करराय कृत सौभाग्य-भास्कर भाष्य का हिन्दी अनुवाद )

श्रीललिताम्बात्रिशतीस्तोत्र ( शाङ्करभाष्य का हिन्दी अनुवाद )

श्रीः

परानन्दाभिख्यं रस-यति रसं त्वद् भजनवान्

श्रीविद्या साधना पीठ

पो १/२ रवीन्द्रपुरी, वाराणसी ( उ० प्र० )

ॐ

आनन्दवनग्रन्थमालायाश्चतुस्त्रिंशं कुसुमम्

# कठोपनिषत्

प्रवचनसन्दर्भ

प्रथम भाग

द्वादशदर्शनकाननकेसरी

महामण्डलेश्वर श्री स्वामी काशिकानन्दगिरिजी महाराज

ॐ

(आनन्दवनग्रन्थमालायाश्चतुस्त्रिंशं कुसुमम्)

# कठोपनिषत्

## प्रवचन सन्दर्भ

(प्रथम भाग)

(प्रथम एवं द्वितीय वल्ली)

द्वादशदर्शन-कानन-केसरी

महामण्डलेश्वर श्री स्वामी काशिकानन्दगिरिजी महाराज

*प्रकाशक :*
**आनन्दवन शोध संस्थान**

मूल्य अजिल्द ३००.०० (सम्पूर्ण सेट-तीन भाग)
सजिल्द ४००.०० (सम्पूर्ण सेट-तीन भाग)

प्रथम आवृत्ति : ११०० प्रतियाँ
सन् : १९९४


*प्राप्तिस्थान :*
**आनन्दवन शोध संस्थान**
आनन्दवन आश्रम
स्वामी विवेकानन्द रोड
कांदीवली (पश्चिम)
बम्बई-४०००६७

*मुद्रक :*
**रत्ना प्रिंटिंग वर्क्स**
कमच्छा वाराणसी
फोन: 322820, 323896

● ॐ तत्सत् ●

# कठोपनिषत्

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

ॐ उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ ॥
तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥
तँ ह कुमारँ सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत ॥ २ ॥
पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ॥
अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥
स होवाच पितरं तत कस्मै मां दास्यसीति ॥
द्वितीयं तृतीयं तँ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥
बहूनामेमि प्रथमो बहूनामेमि मध्यमः ॥
किँ स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥
अनुपश्य यथा पूर्वे प्रतिपश्य यथा परे ॥
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥
वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ॥
तस्यैताँ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥
आशाप्रतीक्षे सङ्गतँ सूनृतां चेष्टापूर्ते पुत्रपशूँश्च सर्वान् ॥
एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥ ८ ॥
तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ॥
नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥
शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो ॥
त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥

यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ॥
सुखँ रात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥ ११ ॥
स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ॥
उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥
स त्वमग्निँ स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तँ श्रद्दधानाय मह्यम् ॥
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् ॥
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ॥ १४ ॥
लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ॥
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ॥ १५ ॥
तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः ॥
तवैव नाम्ना भवितायमग्निः सृंकां चेमामनेकरूपां गृहाण ॥ १६ ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू ॥
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाँ शान्तिमत्यन्तमेति ॥ १७ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाँश्चिनुते नाचिकेतम् ॥
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १८ ॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ॥
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥ १९ ॥
येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके ॥
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥ २० ॥
देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः ॥
अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥ २१ ॥
देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ ॥
वक्ता चास्य त्वादृगन्यो न लभ्यो नान्योवरस्तुल्य एतस्य कश्चित् ॥ २२ ॥
शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् ॥
भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥ २३ ॥
एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ॥
महाभूमौ नचिकेतस्त्वमेधि कामानां त्वां कामभाजं करोमि ॥ २४ ॥

ये ये कामा दुर्लभा मर्त्यलोके सर्वान्कामाँश्छन्दतः प्रार्थयस्व ॥
इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः ॥
आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥ २५ ॥
श्वो भावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः ॥
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्तगीते ॥ २६ ॥
न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ॥
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥ २७ ॥
अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् ॥
अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥
यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् ॥
योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥

॥ इति प्रथमेऽध्याये प्रथमा वल्ली ॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषँ सिनीतः ॥
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥ १ ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ॥
श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते ॥ २ ॥
स त्वं प्रियान्प्रियरूपाँश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ॥
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥ ३ ॥
दूरमेते विपरीते विसूची अविद्या या च विद्येति ज्ञाता ॥
विद्याभीप्सितं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्तः ॥ ४ ॥
अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ॥
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ५ ॥
न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ॥
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥
श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ॥
आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः ॥ ७ ॥
न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः ॥
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान्ह्यतर्क्यमनुप्रमाणात् ॥ ८ ॥

नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ॥
यां त्वमापः सत्यधृतिर्वतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥
जानाम्यहँ शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ॥
ततो मया नचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥ १० ॥
कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरानन्त्यमभयस्य पारम् ॥
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्वा धीरो नचिकेतोऽत्यस्राक्षीः॥ ११ ॥
तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् ॥
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥ १२ ॥
एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य ॥
स मोदते मोदनीयँ हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये ॥ १३ ॥
अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ॥
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥ १४ ॥
सर्वे वेदा यत्पदमामनन्ति तपाँसि सर्वाणि च यद्वदन्ति ॥
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदँ संग्रहेण ब्रवीम्योमित्येतत् ॥ १५ ॥
एतद्ध्येवाक्षरं ब्रह्म ह्येतदेवाक्षरं परम् ॥
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥
एतदालम्बनँ श्रेष्ठमेतदालम्बनं परम् ॥
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥
न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ॥
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ १८ ॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥
अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ॥
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः ॥ २० ॥
आसीनो दूरं व्रजति शयानो याति सर्वतः ॥
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥
अशरीरँ शरीरेष्वनवस्थेष्ववस्थितम् ॥
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ॥
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥ २३ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ॥
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥
यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ॥
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

॥ इति प्रथमेऽध्याये द्वितीया वल्ली ॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ॥
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥
यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ॥
अभयं तितीर्षतां पारं नाचिकेतँ शकेमहि ॥ २ ॥
आत्मानं रथिनं विद्धि शरीरं रथमेव तु ॥
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ॥
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥
यस्त्वविज्ञानवान्भवत्युक्तेन मनसा सदा ॥
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥
यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा ॥
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥
यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः ॥
न स तत्पदमाप्नोति सँसारं चाधिगच्छति ॥ ७ ॥
यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ॥
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ १० ॥

